२

## शालेन्द्रराजपूर्वयोगपरिवर्तो द्वितीयः ।

अथ[1] खलु भगवांस्तस्यां वेलायां चन्द्रप्रभस्य कुमारभूतस्य एतदेव पूर्वयोगपरिवर्तं भूयस्या मात्रया गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म[2]—

स्मरमि[3] दशबलान पश्चिकोटी
पुरिमभवे निर्वसिंसु[4] गृध्रकूटे ।
पुरि मम चरमाणु बोधिचर्या-
मिम वरशान्त समाधि देशयिंसु ॥ १ ॥

तेषां पश्चिमको आसील्लोकनाथः प्रभंकरः ।
शालेन्द्रराज नामेन स मया परिपृच्छितः ॥ २ ॥

अहं च क्षत्रियो आसं[5] राजश्रेष्ठो महीपतिः ।
मम चो[6] शत पुत्राणां पश्चाभूवन्ननूनकाः ॥ ३ ॥

कोटीमया विहाराणां तस्य बुद्धस्य कारिता ।
चन्दनस्य विशिष्टस्य केचिद्रत्नमया अभूत्[7] ॥ ४ ॥

प्रियो मनापश्च बहुजनस्य
भीष्मोत्तरो[8] नाम अभूषि राजा ।
अकार्षि[9] बुद्धस्य विशिष्टपूजा
अष्टादशवर्षसहस्रकोट्यः ॥ ५ ॥

जिनस्य तस्य द्विपदोत्तमस्य
शालेन्द्रराजस्य विनायकस्य ।
षट्सप्ततिवर्षसहस्रकोटियो
आयुस्तदा आसि अनिन्दितस्य ॥ ६ ॥

नियुतान्यशीतिसहस्र श्रावकाणां
त्रैविद्य षडभिज्ञ जितेन्द्रियाणाम् ।
क्षीणास्रवाणान्तिमदेहधारिणां
संघस्तदा आसि नरोत्तमस्य ॥ ७ ॥

---

१ Before अथ, ABT insert a passage given in App. I (No. 4). २ अभापत for संप्रकाशयति स्म. ३ AB स्मरामि for स्मरमि ४ B निवसंसु for निवसिंसु. ५ C आसी for आसं. ६ A मे तथा for मम चो. ७ B °मयामभूत् for °मया अभूत्. ८ B भीष्मोन्तश्चरो for भीष्मोत्तरो. ९ B अचारसि for अकार्षि.

बहुप्रकारा मयि तस्य पूजा
कृता जिनस्य द्विपदोत्तमस्य ।
अर्थाय लोकस्य सदेवकस्य
इमं समाधिं प्रतिकाङ्क्षता सदा ॥ ८ ॥

सपुत्रदारेण मि प्रव्रजित्वा
शालेन्द्रराजस्य जिनस्य अन्तिके ।
चतुर्दशवर्षसहस्रकोटियो
अयं समाधिः परिपृच्छितो मया ॥ ९ ॥

अशीति गाथा नियुता सहस्रा-
ण्यन्ये च कोटीशत निर्वराणाम् ।
तस्योद्गृहीत सुगतस्य अन्तिका-
दित समाधे परिवर्त एव ॥ १० ॥

हस्ता शिरा भार्य तथैव पुत्रा
रत्न प्रभूत तथ खाद्यभोज्यम् ।
न किंचि द्रव्यं मि न त्यक्तपूर्वम्
इम समाधि प्रतिकाङ्क्षता वरम् ॥ ११ ॥

स्मरामि बुद्धान सहस्रकोटियो
तदुत्तरे यतिक गङ्गवालुका ।
येहि स्थिहित्वा इह गृध्रकूटे
अय समाधिरिह शान्त देशित ॥ १२ ॥

सर्वे च शाक्यर्षभनामधेया
सर्वेषु चो राहुल नाम पुत्रा ।
आनन्दनामा परिचारकाश्च
कपिलाह्वया प्रव्रजिताश्च सर्वे ॥ १३ ॥

अभूषु कोलितशारिपुत्रा
सर्वेनाम सर्वे च अभूषि तायिन ।
समनामिका चो[10] इह लोकनाथा
सर्वेऽपि चोत्पन्न कषायकाले ॥ १४ ॥

१ B om. from 'प्रकारा down to मि in 1a २ AC निस्तरणां for निर्वराणाम् ३ BC मैत्रेन्तिका॰ for अन्तिका॰ ४ B एक for एव ५ B ततोत्तरे यानि जगत्सवालुका, C ततोत्तरे यान्तिक गङ्ग॰ for the line ६ A सर्वेषे च for सर्वेषु चो ७ B आनन्दनामा for ॰नामा ८ B सहनाम for सर्वनाम ९ A राहुलनामिका for समनामिका १० A च for चो

सर्वे मया सत्कृत ते नरेन्द्रा
इमां चरन्तेन मि बोधिचारिकाम् ।
यावन्ति [1]चो काचि जिनान पूजा
[2]सर्वा कृता एतु समाधिमेषता ॥ १५ ॥

प्रतिपत्तिय एष समाधि लभ्यते
बहुप्रकारा प्रतिप[3]त्तिरुक्ता ।
गुणेषु सर्वेषु प्रतिष्ठितस्य
न दुर्लभस्तस्य समाधिरेषः ॥ १६ ॥

रसेष्वगृध्रस्य अलोलुपस्य
कुलेष्वसक्तस्य अनीर्षुकस्य ।
मैत्रीविहारस्[4]य अमत्सरस्य
न दुर्लभस्तस्य समाधिरेषः ॥ १७ ॥

सत्कारलाभेषु अनर्थिकस्य
आजीवशुद्धस्य अकिंचनस्य ।
विशुद्धशीलस्य विशारदस्य
न दुर्लभस्तस्य समाधिरेषः ॥ १८ ॥

आरब्धवीर्यस्य अतन्द्रितस्य
र[5]ण्याधिमुक्तस्य धुते स्थितस्य ।
नैरात्म्य[6]क्षान्तीय प्रतिष्ठितस्य
न दुर्लभस्तस्य समाधिरेषः ॥ १९ ॥

सुदान्तचित्तस्य अनुद्धतस्य
ईर्याय च[7]र्याय प्रतिष्ठितस्य ।
त्यागा[8]धिमुक्तस्य अमत्सरस्य
न दुर्लभस्तस्य समाधिरेषः ॥ २० ॥

अनुव्यञ्जनलक्षणा बुद्धधर्मा
येऽष्टादशा कीर्तित नायकेन ।
बलाविशारद्य न तस्य दुर्लभा
धारेति यः शान्तमिमं समाधिम् ॥ २१ ॥

---

१ A च for चो. २ B समकृता for सवा कृता. ३ A °पत्तियुक्ता for °पत्तिरुक्ता. ४ B मैत्राविहारिस्य अक्रोधनस्य for the line. ५ A अरण्यवासस्य ; B अरण्यवासिस्य for रण्याधिमुक्तस्य. ६ B °क्षान्तिये for °क्षान्तीय. ७ A पर्याय for चर्याय. ८ B त्यागाभियुक्तस्य for °धिमुक्तस्य.

बुद्धेन ये चक्षुष दृष्ट सत्त्वा-
　स्ते एककालस्मि भवेयु बुद्धा[1] ।
तेषैकएकस्य भवेयुरायु[2]
　अचिन्तियाकल्पसहस्रकोटिय ॥ २२ ॥
तेषैकैकस्य शिरो भवेयु　5　N 31
　येत्तु[3] समुद्रेषु यथैव वालुका ।
यावन्ति ते सर्वि शिरो भवेयु
　शिरे शिरे जिह्व भवेयु तात्तिका ॥ २३ ॥[4]
ते तस्य सर्वे भणि आनुशंसा
　यो गाथ धारेय्य इत समाधित ।　10
न किंचिमात्र परिकीर्तित भवेत्
　किं वा पुनर्यो हि शिक्षित्व धारये ॥ २४ ॥
धूतान् समादाय गुणाश्च वर्तते
　स्पृहेन्ति[5] देवासुरयक्षगुह्यकाः[6] ।
राजान भोन्ति अनुयात्रु तस्य　15
　धारेति य शान्त समाधि दुर्लभम् ॥ २५ ॥
परिगृहीतो भवति जिनेभि
　देवाश्च नागाः सद आनुयात्रा[7] ।
प्रत्यर्थिकास्तस्य श्रियं नो सहन्ति[9]
　धारेति य शान्त समाधि दुर्लभम्[8] ॥ २६ ॥　20
अनन्तु तस्य प्रतिभानु भोति
　अनन्त सूत्रान्तसहस्र भाषते ।
न तस्य विघ्ना नु कदाचि भोति[10]　N 32
　धारेति य शान्तमिमं समाधिम् ॥ २७ ॥
द्रक्ष्यन्ति बुद्धममिताभु नायक　25
　सुखावतीं चाप्यथ लोकधातुम् ।
ये पश्चिमे कालि महाभयानके
　समाधि श्रुत्वा इमु धारयेयु ॥ २८ ॥

---

[1] A दुष्टसत्त्वा for ■ सत्त्वा. [2] B ते एकस्मिन् भवेयु बुद्धा, C भवेयु बुद्धा for the line [3] A अय for स्तयु [4] A om. the line [5] A सर्व for सर्वु [6] A स्पृशन्ति for स्पृहेन्ति [7] A अनुयात्र [8] AB दुर्लभम् for दुर्लभम् [9] A प्रियमानहन्ति for श्रिय नो सहन्ति [10] B भोन्ति or भोति

सर्वे मया सत्कृत ते नरेन्द्रा
　　इमां चरन्तेन मि बोधिचारिकाम्।
यावन्ति [1]चो काचि जिनान पूजा
　　[2]सर्वा कृता एतु समाधिमेषता ॥ १५ ॥

प्रतिपत्तिय एष समाधि लभ्यते
　　बहुप्रकारा प्रति[3]पत्तिरुक्ता।
गुणेषु सर्वेषु प्रतिष्ठितस्य
　　न दुर्लभस्तस्य समाधिरेषः ॥ १६ ॥

रसेष्वगृध्रस्य अलोलुपस्य
　　कुलेष्वसक्तस्य अनीर्षुकस्य।
[4]मैत्रीविहारस्य अमत्सरस्य
　　न दुर्लभस्तस्य समाधिरेषः ॥ १७ ॥

सत्कारलाभेषु अनर्थिकस्य
　　आजीवशुद्धस्य अकिंचनस्य।
विशुद्धशीलस्य विशारदस्य
　　न दुर्लभस्तस्य समाधिरेषः ॥ १८ ॥

आरब्धवीर्यस्य अतन्द्रितस्य
　　[5]रण्याधिमुक्तस्य धुते स्थितस्य।
नैरात्म्य[6]क्षान्तीय प्रतिष्ठितस्य
　　न दुर्लभस्तस्य समाधिरेषः ॥ १९ ॥

सुदान्तचित्तस्य अनुद्धतस्य
　　ईर्याय [7]चर्याय प्रतिष्ठितस्य।
[8]त्यागाधिमुक्तस्य अमत्सरस्य
　　न दुर्लभस्तस्य समाधिरेषः ॥ २० ॥

अनुव्यञ्जनलक्षणा बुद्धधर्मा
　　येऽष्टादशा कीर्तित नायकेन।
बलाविशारद्य न तस्य दुर्लभा
　　धारेति यः शान्तमिमं समाधिम् ॥ २१ ॥

---

१ A च for चो. २ B समकृता for सवा कृता. ३ A °पत्तियुक्ता for °पत्तिरुक्ता. ४ B मैत्राविहारिस्य अक्रोधनस्य for the line. ५ A अरण्यवासस्य; B अरण्यवासिस्य for रण्याधिमुक्तस्य. ६ B °क्षान्तिये for °क्षान्तीय. ७ A पर्याय for चर्याय. ८ B त्यागाभियुक्तस्य for °विमुक्तस्य.

बुद्धेन ये चक्षुष दृष्ट सत्वा-
स्ते[1] एककालस्मि भवेयु बुद्धाः ।
तेषैकएकस्य भवेयुरायुः[2]
अचिन्तियाकल्पसहस्रकोटियः ॥ २२ ॥

तेषैकैकस्य[3] शिरो भवेयुः
सर्वु[4] समुद्रेषु यथैव वालुकाः ।
यावन्ति ते सर्वे शिरो भवेयुः
शिरे शिरे जिह्व भवेयु तात्तिकाः ॥ २३ ॥

ते तस्य सर्वे[5] भणि आनुशंसा
यो गाथ धारेय्य इतः समाधितः ।
न किंचिमात्रं परिकीर्तितं भवेत
किं वा पुनर्यो हि शिक्षित्व धारये ॥ २४ ॥

धृतान् समादाय गुणांश्च वर्तते
स्पृहेन्ति[6] देवासुरयक्षगुह्यकाः ।
राजान भोन्ति अनुयात्रु[7] तस्य
धारेति यः शान्त समाधि दुर्लभम्[8] ॥ २५ ॥

परिगृहीतो भवति जिनेभि-
र्देवाश्च नागाः सद आनुयात्राः ।
प्रत्यर्थिकास्तस्य श्रिये नो सहन्ति[9]
धारेति यः शान्त समाधि दुर्लभम् ॥ २६ ॥

अनन्तु तस्य प्रतिभानु भोति
अनन्त सूत्रान्तसहस्र भाषते ।
न तस्य विघ्ना नु कदाचि भोति[10]
धारेति यः शान्तमिमं समाधिम् ॥ २७ ॥

द्रक्ष्यन्ति बुद्धममिताभु नायकं
सुखावती चाप्यथ लोकधातुम् ।
ये पश्चिमे कालि महाभयानके
समाधि श्रुत्वा इमु धारयेयुः ॥ २८ ॥

---

१ A दुष्टसत्वाः for दृष्ट सत्वाः. २ B ते एककस्मिन् भवेयु बुद्धाः; C भवेय बुद्धाः for the line. ३ A अयं for आयुः. ४ A om. the line. ५ A सर्वैः for सर्वु. ६ A स्पृहयन्ति for स्पृहेन्ति. ७ A अनुयात्र. ८ AB दुर्लभम् for दुर्लभम्. ९ A प्रियमानहन्ति for श्रिय नो सहन्ति. १० B भोन्ति or भोति.

तथ गुण समुदानिता जिनेभिः
 इमु वरु शान्त समाधिमेषमाणैः ॥ १ ॥

परमसुअभिरूपदर्शनीयाः
 कन्य अलंकृतगात्र प्रेमणीयाः ।
दत्त पुरि अदीनमानसेन
 इमु वरु शान्त समाधिमेषता मे ॥ २ ॥

तथ मयि धनधान्यदासिदासा
 तथ मणिमुक्तिसुवर्णरूप्यकं च ।
त्यक्त मयि अदीनमानसेन
 इमु वरु शान्त समाधिमेषता मे ॥ ३ ॥

मणिरतनविचित्रमुक्तहारा
 रुचिर पि वसन शरीरवर्णगन्धा ।
त्यक्त मयि पुरा विनायकेषु
 इमु वरु शान्त समाधिमेषता मे ॥ ४ ॥

अपरिमित अनन्त कल्पकोट्यः
 परमसुगन्धिक मार्गिताश्च ।
त्यक्त मयि जिनान चैतियेषु
 परमनिदर्शन चित्तु संजनित्वा ॥ ५ ॥

तथरिव मयि दत्तु धर्मदानं
 गर्भगतेन जनित्व चित्रिकारम् ।
न च मम समुत्पन्न जातु चित्तं
 स्थिय मम ज्ञानु ददित्व धर्मदानम् ॥ ६ ॥

एतं गुण समुदानितुं मि पूर्वा
 वन वरु सेवित नित्यमल्पशब्दम् ।
कृपणदुःखु भवामि नित्यकालं
 सद मम चित्तु लभेय बुद्धज्ञानम् ॥ ७ ॥

नै च मम कंचिदाग्रहो अभूषि
 प्रियतरवस्तुन आत्मनोऽपि मोक्तुम् ।

---

१ C समुदानितु. २ BC त्यक्त मय for दत्त पुरि. ३ C तत्र अपि for तथ मयि. ४ BC °दासं for °दासा. ५ A निधत ; B नन्दने for वसन ६ A हर्षस्वर्ण° for °मणिमुक्तिसुवर्ण°. ७ B पुराणकेषु for विनायकेषु ८ B तथपि च for तथरिव. ९ A विचित्रिकारम् for चित्रि°. १० B om. st. 7. ११ AB °दानिता for. °दानितु. १२ AC °शब्दाः for °शब्दम्. १३ A बुद्धज्ञाने for °ज्ञानम्. १४ C reads st. 8 after st. 11; T reads st. 9 before st. 8. १५ B इति for कंचिद्.

दद्मि अहु प्रभूत देयधर्मं
  सद मम चित्तु लभेय बुद्धज्ञानम् ॥ ८ ॥
अखिलमधुरसंविभागशीलः
  स्मितवदनः श्रुतिधारि स्निग्धघोषः ।
सुमधुरवचनः प्रियो बहूनां
  जन मम सर्वि अतृप्त दर्शनेन ॥ ९ ॥
क्षणमपि च न मत्सरी भवामि
  भवनियुतेनै न जातु ईर्ष्यमासीत् ।
सद अहु परितृप्त पिण्डपाते
  सफल निमन्त्रण वर्जितान्यशेषा ॥ १० ॥ [N 38]
बहुश्रुत श्रुतधारि ये भवन्ति
  गाथ इतो धरये चतुष्पदां पि ।
ते मयि सद सत्कृता अभूवन्
  परम निरुत्तर प्रेम संजनित्वा ॥ ११ ॥
बहुविधमनन्त दानु दत्तं
  तथपि च रक्षितु शील दीर्घरात्रम् ।
पूज बहु कृता विनायकेषु
  इमु वह शान्त समाधिमेषता मे ॥ १२ ॥
पृथु विविध अनन्त लोकधातून्
  मणिरतनैः परिपूर्य दानु दद्यात् ।
इतु धरयि समाधितश्च गाथाम्
  इमु ततुपुण्य विशिष्यते उदारम् ॥ १३ ॥
यावत पृथु केचिदस्ति पुष्पा
  तथरिव गन्ध मनोरमा उदाराः ।
तेहि जिनु महेय्य पुण्यकामा
  बहुमपि कल्पै अनन्त अप्रमेयान् ॥ १४ ॥ [N 39]
यावत पृथु केचिदस्ति वाद्या
  तैथ बहु भोजन अन्नपानवस्त्राः ।
तेहि जिनु महेय्य पुण्यकामा
  बहुमपि कल्प अनन्त अप्रमेयान् ॥ १५ ॥

---

१ B श्रुतधार. २ B अतृप्त for अतृप्त. ३ BC °नियुतेषु for °तेन. ४ A ईर्ष्ये आसीत्. ५ BC परितुष्ट for °तृप्त. ६ A चरेय for धरये. ७ A पृथु विविधमनन्तलोकधातु for the line. ८ A दर्त for दद्यात्. ९ A [illegible] धरेथ for [illegible] धरयि. १० B पुण्यकामो. ११ A कल्पमनन्तमप्रमेयान्. १२ A कन्यास्तथ; B वाद्यास्तथ for तथ बहु.

चन्द्रप्रभः कुमार हृष्टचित्तः
पुरतु जिनस्य स्थिहित्व वाच भाषी ।
अहु पुण्यतरस्य निर्वृतस्य
सुकिर्सरि कालि इदं धरिष्ये सूत्रम् ॥ ३६ ॥
काय अहु त्यजित्व जीवितं च
तथपि च सौख्य यदस्ति लोके ।
तत्र अहु महाभयेऽपि काले
इमु वरु शान्त समाधि धारयिष्ये ॥ ३७ ॥
महकरुण जनित्व सत्वकाये
सुदुःखित सत्त्व अनाथ प्राप्त दृष्ट्वा ।
तेष्वहमुपसंहरित्व मैत्री-
मिमु वर शान्त समाधि देशयिष्ये ॥ ३८ ॥
पञ्चशत अनून तस्मिन् काले
य उत्थित तत्र समाधिधारकाणाम् ।
पूर्वंगम कुमार तेष आसी-
दिह वरसूत्रपरिग्रहे उदारे ॥ ३९ ॥
इति श्रीसमाधिराजे भूतगुणवर्णप्रकाशनपरिवर्तो नाम तृतीयः ॥

## बुद्धानुस्मृतिपरिवर्तः ।

अथ[1] खलु चन्द्रप्रभः कुमारभूतो भगवन्तमेतदवोचत्—समाधिः समाधिरिति भगवन्नुच्यते । N 45
कतमस्यैतद्धर्मस्याधिवचनं समाधिरिति ? एवमुक्ते भगवांश्चन्द्रप्रभं कुमारभूतमेतदवोचत्—समाधिः समाधिरिति कुमार उच्यते यदुत चित्तनिध्याप्तिः[2] । अनुपपत्तिः । अप्रतिसंधिः । प्रतिसंधिज्ञानम् । अपहृतभारता । तथागतज्ञानम् । बुद्धवृषभिता । रागचिकित्सा । दोषव्युपशमः । मोहस्य प्रहाणम् । युक्तयोगिता । अयुक्तविवर्जनता । अकुशल[3]धर्मच्छन्दः । संसारान्मोक्षकामता । अध्याशयप्रतिपत्तिः । जागरिकाया आसेवनम् । प्रहाणस्यानुत्सर्गः । आरक्षा शुक्लधर्माणाम् । उपपत्तिष्वविश्वासः । अनभिसंस्कारः । सर्वेषामाध्यात्मिकानामायतनानाममनसिकारः । बाह्यानामायतनानामसमुदाचारः । आत्मनोऽनुत्कर्षणम् । परेषामपंसनता । कुशलेष्वनध्यवसानम् । पृथग्जनेष्वविश्वासः । N 46
शीलस्य निष्यन्दः । दुरासदता । महौजस्कता । आत्मज्ञानम् । अचपलता । ईर्यापथसंपद्व्यवस्थानम् । अव्यापादः । अपारुष्यम् । परेष्वनुत्पीडा । मित्राणामनुरक्षणा । गुह्यमन्त्राणामारक्षणा । अविहिंसा । शीलव्रतानामनुत्पीडना[4] । श्लक्ष्णवचनता । सर्वत्रैवातुके अनिःश्रितता । सर्वधर्मेषु शून्यता । आनुलोमिकी क्षान्तिः । सर्वज्ञज्ञाने तीव्रच्छन्दता समाधिः समाधिरिति कुमार उच्यते । या एवंरूपेषु धर्मेषु प्रतिपत्तिरप्रतिपत्तिः[5], अयं स कुमार उच्यते समाधिरिति ॥

अथ[6] खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत—

> अपावृतं मे अमृतस्य द्वारम्
> आचक्षितो धर्मस्वभावु यादृशः ।
> निदर्शिता[7] मे उपपत्ति यादृशी
> प्रकाशिता निर्वृति सानुशंसा ॥ १ ॥
>
> विवर्जनीयाः सद पापमित्राः N 47
> कल्याणमित्राश्च निषेवितव्या ।
> वनेषु वस्तव्य गणान् जहित्वा
> मैत्रं च चित्तं सद भावनीयम् ॥ २ ॥
>
> शुद्धं च शीलं सद रक्षितव्यं[8]
> धूतेषु तुष्टिः सद चिन्दितव्या[9] ।
> त्यागश्च प्रज्ञा च निषेवितव्या ।
> न दुर्लभो एष समाधि भेष्यति ॥ ३ ॥

---

१ For अथ...वोचत्, AB read a passage given in App I (No 5). २ AB चित्तस्य निध्याप्तिः. ३ B कुशल° for अकुशल°. ४ B °त्पीडनता for °त्पीडना. ५ B °रविप्रतिपत्तिः for अप्रति°. ६ For अथ ... अभाषत, AB read: अथ खलु भगवांस्तामेव सर्वधर्मसमतास्वभावविशवितं समाधिमुद्भावयन् चन्द्रप्रभस्य कुमारभूतस्य तस्यां वेलायां भूयस्या मात्रया गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म. ७ B निदर्शता for निदर्शिता. ८ C रक्षणीयं for रक्षितव्यं. ९ C चिन्तनीया for चिन्दितव्या.

यश्च नरु जनित्व बोधिचित्तम्
अहु जिनु भेष्यु स्वयंभु धर्मराजः।
गाथैमिमु धरे समाहितैकां
ततो विशिष्यते पुण्यमुदारम्॥ १६॥

5 यावत पृथु गङ्गवालिकाः स्यु-
स्तावत कल्प भणेय आनुशंसा।
न च परिक्षय शक्यु कीर्त्यमाने
बहुतर पुण्यसमाधि धारयित्वा॥ १७॥

तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन उद्ग्रहीतव्यो धारयितव्यो वाचयितव्यः
10 पर्यवाप्तव्यः। उद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य अरणाभावनायोगमनुयुक्तेन च भवितव्यम्। तद्
भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय
देवानां च मनुष्याणां च। अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत—

तस्माच्छ्रुत्वेति बुद्धानामानुशंसान् सुमङ्गलान्।
क्षिप्रमुद्दिशथा एतं समाधि बुद्धवर्णितम्॥ १८॥
15 त्रिसप्ततिबुद्धकोट्यः पूर्वजातिषु सत्कृताः।
सर्वेहि तेहि बुद्धेहि इदं सूत्रं प्रकाशितम्॥ १९॥
महाकरुणजेतारमिदं सूत्रं निरुच्यते।
बाहुश्रुत्यस्मि शिक्षित्वा बुद्धधर्मा न दुर्लभाः॥ २०॥
भेष्यन्ति पश्चिमे काले निर्वृते लोकनायके।
20 बहु असंयता भिक्षु बाहुश्रुत्ये अनर्थिकाः॥ २१॥
शीलस्य वर्णं वक्ष्यन्ति शीलेन च अनर्थिकाः।
समाधिवर्णं वक्ष्यन्ति समाधिय अनर्थिकाः॥ २२॥
प्रज्ञाय वर्णं वक्ष्यन्ति प्रज्ञाय च अनर्थिकाः।
विमुक्त्या बहु भाषन्ते विमुक्त्या च अनर्थिकाः॥ २३॥
25 चन्दनस्य यथा कश्चिद् भाषते पुरुषो गुणान्।
ईदृशं चन्दनं नाम गन्धजातं मनोरमम्॥ २४॥
अथान्यः पुरुषः कश्चिदेवं पृच्छेत तं नरम्।
गृहीत चन्दनं किंचिद् यस्य वर्ण प्रभाषसे॥ २५॥

१ B भेषि for भेष्यु. २ A मायासेतु धरेत्समाधितौकां for the line. ३ A °वालुकाः for वालिकाः ४ कीर्तेना चे for कीर्त्यमाने. ५ AB om. this para in prose. ६ C श्रुणत्वैव for श्रुत्वेति. ७ [illegible] for समाधिय. ८ ABT विमुक्तिवर्णं भाषन्ते.

स नरं तं प्रतिब्रूयाद् गन्धवर्णं ब्रवीम्यहम्।
जीविकां येन कल्पेमि तं च गन्धं न वेद्म्यहम्॥ २६॥

एवं योगेऽप्ययुक्तानां शीलवर्णेन जीविका।
पश्चिमे भेष्यते काले शीलं चैषां न भेष्यते॥ २७॥ 5 N 42

एवं योगेऽप्ययुक्तानां समाधिवर्णेन जीविका।
पश्चिमे भेष्यते काले समाधिश्चैषां न भेष्यते॥ २८॥

एवं योगेऽप्ययुक्तानां प्रज्ञावर्णेन जीविका।
भेष्यते पश्चिमे काले प्रज्ञा चैषां न भेष्यते॥ २९॥

एवं योगेऽप्ययुक्तानां विमुक्तिवर्णेन जीविका। 10
भेष्यते पश्चिमे काले विमुक्तिश्चैषां न भेष्यते॥ ३०॥

यथ पुरेषु दरिद्रु कश्चिदेव
सचे परिभूतु भवेन्महाजनस्य।
स च लभति निधानु पर्षकाले
धर्मपति भूत्व जनान सत्करेय्या॥ ३१॥ 15

एवमिमु न समाधि याव लब्धो
न च बहुमतो भवतीह बोधिसत्त्व। N 43
मरुमनुजकुम्भाण्डराक्षसा नो
यथ पुरुषु दरिद्रु अर्थहीनः॥ ३२॥

यद पुनरिय लब्ध भोति भूमी 20
अतुलियु धर्मनिधानु पण्डितेन।
मरु मनुज स्पृहे जनेन्ति तत्र
स च धनु देति निरुत्तरं प्रजानाम्॥ ३३॥

तस्मे इमि श्रुणित्व आनुशंसा
परमप्रणीतय. कीर्तिता जिनेन। 25
सर्वे जहिय शास्त्रप्रमसौख्य-
मिमु करणीदिशाया समाधि शान्तम्॥ ३४॥

ये केचि बुद्धा दिशता सुनिर्वृता
अनागता येऽपि च प्रत्युत्पन्ना।
सर्वे च शिक्षित्व इह समाधौ 30
बोधिं विबुद्धा अतुलामचिन्तियाम्॥ ३५॥

१ C कश्चिमे for पश्चिमे. २ AC om st 28 ३ C एवमयुक्तयोगानां. ४ A अपरपुरुषु for पुरुषु ५ A महाधनस्य for महाजनस्य. ६ A भवति for लभति ७ B पश्चिकाले for पर्ष°. ८ B धनमरि शास्त्र सत्करेया for the line. ९ BC यथ स for यथ १० AB शान्तभूमि for भोति भूमी ११ AB तस्य for तस्म. १२ C अचिन्त्यां for अचिन्तियाम्

ततो लभित्वा इम शान्तभूमि[1]
यस्यागभूमिः पृथु श्रावकाणाम्।
प्रत्यक्षभूता सुगतस्य धर्म
प्रतिलप्स्यथा[2] बुद्धगुणानचिन्तियान् ॥ ४ ॥

दृष्ट्वा नरान् भाजनबुद्धिमन्तान्
तान् बोधिचित्तस्मि[3] समादहेय।
अनुत्तरे ज्ञानि प्रतिष्ठपित्वा[4]
न दुर्लभो एष समाधिराजः ॥ ५ ॥

यस्यार्थि ईर्या पुन संजनेय्या
आहारि निष्यन्दिह प्रत्यवेक्षतः।
पर्येष्टितश्चो परिभोगतश्च
न दुर्लभो एष समाधि भेष्यते[5] ॥ ६ ॥

समाधिराजो यदि वैप[6] शून्यतो
विशुद्धशीलानपु मूर्ध्नि तिष्ठति।
स्वभावतो धर्म सदा समाहिता
बाला न जानन्ति अयुक्तयोगाः ॥ ७ ॥

येषामयं शान्त समाधिरिष्टो
न तेष जातु भयबुद्धि तिष्ठति।
सदानुपश्यन्ति नराणमुत्तम-
मिमं निषेवित्व प्रशान्तभूमिम् ॥ ८ ॥

आकारतो यः स्मरते तथागतान्
स भोति शान्तेन्द्रियु शान्तमानसः।
अभ्रान्तचित्तः सततं समाहितः
श्रुतेन ज्ञानेन च सागरोपमः ॥ ९ ॥

अस्मिन् समाधौ हि प्रतिष्ठिहित्वा
यच्चंक्रमे चंक्रमि बोधिसत्वः।
स पश्यति बुद्धसहस्रकोटिय-
स्तदुत्तरे यात्तिक गङ्गवालुकाः ॥ १० ॥

उन्मादु गच्छेय नरस्य चित्तं
यो बुद्धधर्माण प्रमाणु गृहीयात्।

---

१ C शान्तभावे for शान्तभूमि. २ C प्रतिपत्स्यथा for °लप्स्यथा. ३ A °चित्तस्य for °चित्तस्मि. ४ B प्रतिष्ठिहित्वा. ५ C भेष्यथ for भेष्यते. ६ B चैव for वैप.

नैवाप्रमाणस्य प्रमाणमस्ति
　　अचिन्तिया सर्वगुणेहि नायकाः ॥ ११ ॥
न सोऽस्ति सत्त्वो दशसु दिशासु
　　यो लोकनाथेन समः कुतोत्तरि ।
सर्वे हि सर्वज्ञगुणैरुपेत-
　　माकाङ्क्ष लप्स्यथ बुद्धज्ञानम् ॥ १२ ॥
सुवर्णवर्णेन समुच्छ्रयेण
　　समन्तप्रासादिकु लोकनाथः ।
यस्यात्र आलम्बनि चित्तु वर्तते
　　समाहितः सोच्यति बोधिसत्त्वः ॥ १३ ॥
असंस्कृतं संस्कृतु ज्ञात्व विज्ञो
　　निमित्तसंज्ञाय विभाविताय ।
सो आनिमित्ते भवति प्रतिष्ठितः
　　प्रजानती शून्यक सर्वधर्मान् ॥ १४ ॥
यो धर्मकाये भवति प्रतिष्ठितो
　　अभाव जानाति स सर्वभावान् ।
अभावसंज्ञाय विभाविताय
　　न रूपकायेन जिनेन्द्र पश्यति ॥ १५ ॥
आरोचयामि प्रतिवेदयामि वो
　　यथा यथा बहु च वितर्कयेन्नरः ।
तथा तथा भवति तन्निश्रितचित्त-
　　स्तेहि वितर्केहि तन्निश्रितेहि ॥ १६ ॥
एवं मुनीन्द्रं स्मरतो नरस्य
　　आकारतो ज्ञानतो अप्रमेयतः ।
अनुस्मृतिं भावयतः सदा च
　　तन्निम्नचित्तं भवती तत्प्रोणम् ॥ १७ ॥
स चंक्रमस्थो न निषद्यमाश्रित
　　आकाङ्क्षते पुरुषवरस्य ज्ञानम् ।
आकाङ्क्षमाणः प्रणिधेति बोधये
　　भविष्यहं लोकि निरुत्तरो जिनः ॥ १८ ॥

---

१ C अवर्ण॰ for सुवर्ण॰. २ C सर्वधर्मान् for सर्वभावान्. ३ AB जिनेन्द्र. ४ B बहुक for बहु च. ५ A स्मरतो for स्मरतो. ६ B सदैव for सदा च. ७ B प्रणम् for प्रोणम्.

[illegible] बुद्ध संजानति बुद्ध पश्यते
बुद्धान चो धर्मत प्रत्यवेक्षते ।
इह समाधिस्मि प्रतिष्ठिहित्वा
नमस्यते बुद्ध महानुभावान् ॥ १९ ॥

5 कायेन वाचा च प्रसन्न मानसा
बुद्धान वर्णं भणती अभीक्ष्णम् ।
तथाहि सो भावितचित्तसंतती
रात्रिंदिवं पश्यति लोकनायान् ॥ २० ॥

यदापि सो भोति गिलान आतुरः
10 प्रवर्तते वेदन मारणान्तिका ।
न बुद्धमारभ्य स्मृतिः प्रमुच्यते
न वेदनाभिरनुसंहरीयति ॥ २१ ॥

तथा हि तेन विचिनित्व ज्ञाता
अनागता आगत धर्मशून्यता ।
15 सो तादृशे धर्मनये प्रतिष्ठितो
न खिद्यते चित्त चरन्तु चारिकाम् ॥ २२ ॥

तस्माच्छृणित्वा इमु आनुशंसा
जनेथ छन्दमतुलाय बोधये ।
मा पश्चकाले परितापु मेष्यंत
20 सुदुर्लभं सुगतवराण दर्शनम् ॥ २३ ॥

अहं च भाषेय प्रणीत धर्मं
यूयं च श्रुत्वान समाचरेथाः ।
भैषज्य वरां च गृहीत्व आतुरो-
ऽपनेतुं व्याधिं न प्रभोति आत्मनः ॥ २४ ॥

25 तस्माद्विधिज्ञेन विचक्षणेन
इमं समाधिं प्रतिकाङ्क्षता सदा ।
शीलं[12] श्रुतं त्यागु निषेवितव्यं
न दुर्लभो एष समाधि भेष्यति ॥ २५ ॥

इति श्रीसमाधिराजे बुद्धानुस्मृतिपरिवर्तो नाम चतुर्थः ॥

१ AB कायेन चित्तेन प्रसन्नमानसो for the line. २ B यथापि; C यदा न for यदापि. ३ A मारणात्मिका for °न्तिका ४ A तेनावितथेति for तेन विचिनित्व. ५ C आतुशंसान्. ६ B बोधयेत् for बोधये ७ AB भेष्यति ८ A भाष्येऽस्य for भाषेय. ९ C धर्मान्. १० C आकरो for आतुरो. ११ AC अपरेतु for अपनेतु. १२ C शीलं मार्गं for शील. १३ B समाधिपरिवर्तः for बुद्धानुस्मृति°.

## घोषदत्तपरिवर्तः ।

तत्र भगवांश्चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म–भूतपूर्वं कुमार अतीतेऽध्वन्यसंख्येये[१] कल्पे असंख्येयतरे विपुलेऽप्रमेयेऽचिन्त्येऽपरिमाणे यदासीत् तेन कालेन तेन समयेन भगवान् घोषदत्तो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोके उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । तेन कालेन तेन समयेन तस्य भगवतो घोषदत्तस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य अशीतिः श्रावककोट्यः 5 प्रथमः संनिपातोऽभूत् सर्वेषामर्हताम् । द्वितीयः श्रावकसंनिपातः सप्ततिकोट्योऽर्हतामभूत् । तृतीयः संनिपातः षष्टिः श्रावककोट्योऽर्हतामभूत् । तेन खलु पुनः समयेन तस्य भगवतो घोषदत्तस्यार्हतः सम्यक्संबुद्धस्य चत्वारिंशद्वर्षसहस्राण्यायुःप्रमाणमभूत् । अयं च जम्बुद्वीप ऋद्धः स्फीतश्च क्षेमश्च सुभिक्षश्च रमणीयश्च बहुजनाकीर्णमनुष्यश्चाभूत् । तेन खलु पुनः समयेन अस्मिन् जम्बुद्वीपे द्वौ राजानावभूताम् । दृढबलश्च नाम महाबलश्च नाम । तत्रैको राजा अर्धं जम्बुद्वीपं 10 परिभुङ्क्ते, द्वितीयोऽप्यर्धं परिभुङ्क्ते ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च रमणीयं च बहुजनाकीर्णमनुष्यं च ॥ तेन कालेन तेन समयेन राज्ञो महाबलस्य विजिते भगवान् घोषदत्तस्तथागतोऽर्हन् सम्यक्संबुद्ध उत्पन्नोऽभूत् । इति हि कुमार राज्ञा महाबलेन स घोषदत्तस्तथागतः परिपूर्णं वर्षसहस्रं निमन्त्रितोऽभूत् सार्धं बोधिसत्त्वसंघेन भिक्षुसंघेन च कल्पिकेन परिभोगेणानवद्येन चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारेण । तेन च कुमार कालेन तेन समयेन 15 तस्य भगवतो घोषदत्तस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य बोधिसत्त्वसंघस्य सश्रावकसंघस्य चोत्सदो लाभसत्कारश्लोकोऽभूत् । श्राद्धाश्च ब्राह्मणगृहपतयो भगवतो घोषदत्तस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य सबोधिसत्त्वसंघस्य चोत्सदं लाभसत्कारमकार्षुः । ते च श्राद्धा ब्राह्मणगृहपतयो भगवतो घोषदत्तस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य लाभसत्कारायोद्युक्ता अभूवन् लोकामिषपूजायै यदुत राज्ञ एव च महाबलस्यानुशिक्षमाणा एवम् । इति हि कुमार 20 तस्य भगवतो घोषदत्तस्य एतदभूत्–परिहीयन्ते वतेमे सत्त्वाः शीलपोषधसमादानतस्तथागतानामुपसंक्रमणतस्तथागतपर्युपासनतो ब्रह्मचर्यवासतः प्रव्रज्योपसंपत्तिभिक्षुभावतश्च । त एते सत्त्वास्तदनन्तरं सुखगुरुकाः । तत् कस्य हेतोः ? तथा हि तदनन्तरं सुखमिदं यदुत लोकामिषपूजा । त एते सत्त्वा दृष्टधर्मगुरुकाश्च सांपरायगुरुकाश्च नात्यन्तनिष्ठा कुशलमूलाय । तत्रेयं कुमार कतमा दृष्टधर्मगुरुकता ? यदुत पञ्चकामगुणाभिप्रायता । 25

N 54
N 55
N 56

१ After भगवान्, ABT add पुनरपि २ After स्म ABT read a passage given in App I (No 6) ३ A अतीतेऽध्वन्यसंख्येयतरे for °ख्येये कल्पे असंख्येयतरे ४ C अप्रमेयप्रमाणे for अप्रमेये ५ AB om अर्हत ६ C श्रमणकोट्य for श्रावक° ७ AB प्रथम संनिपतिते for संनिपातो ८ E सप्त for सप्तति ९ After अभूत्, ABT add अपरिमाणाश्च बोधिसत्त्वा महासत्त्वा सद्धर्मपरिहारका अभूवन्, १० B स्फुत द्वितश्च for स्फीतश्च क्षेमश्च ११ After अर्धं AB add जम्बुद्वीपस्य १२ C श्रावकाश्च for श्राद्धाश्च १३ E °सत्कारश्लोकमकार्षु १४ AB घोषदत्तस्य for सम्यक्संबुद्धस्य १५ C °रुपा दानपरमा अभूवन् दुराभूता परिपया १६ B उपसंपदतो भिक्षु° for प्रव्रज्योपसंपत्तिभिक्षु° १७ After °गुरुकाश्च AB add यदुत स्वर्गलोकोपपत्त्यालम्बनतया १८ AB om इयं १९ AB om दृष्ट° upto °प्रायता

तत्र कुमार कतमा सांपरायिककुशलता[1] यदुत स्वर्गलोकाभ्यालम्बनता । कतमा चात्यन्तनिष्ठकुशलमूलकुशलता[2] यदुतात्यन्तविशुद्धि । अत्यन्तविमुक्ति । अत्यन्तयोगक्षेमता । अत्यन्तब्रह्मचर्यावास । अत्यन्तपर्यवसानम् । अत्यन्तकुशलमूलनिष्ठा । अत्यन्तपरिनिर्वाणम् । यन्न्वहमेतेषां सत्त्वानां तथा तथा धर्मं देशयेय यदमी सत्त्वा यथानुत्तरया धर्मपूजया धर्मप्रतिपत्त्या च तथागतं पूजयेयु ॥

अथ खलु कुमार घोषदत्तस्तथागतोऽर्हन् सम्यक्संबुद्धस्तस्यां वेलायां राज्ञो महाबलस्य तेषां च ब्राह्मणगृहपतीनां संवेजनाभिप्राय इमा गाथा अभाषत–

दानप्रदानेन अन्योन्य सेवता
तेषामन्यमन्यस्मि न भोति गौरवम् ।
ना तादृशीं सेवन वर्णयन्ति
बुद्धा निरू येष प्रहीण वासना ॥ १ ॥

ते तादृशा भोन्ति नरा सुसेविता
ये धर्म देशेन्ति हिताय प्राणिनाम् ।
तेषामन्यमन्यस्मि अभेद्य प्रेम
यन्मारकोटीभिरशक्यु भिन्दितुम् ॥ २ ॥

लोकामिषेणो नर सेवता तृणा
सर्वेण सादृष्टिक भोति अर्थ ।
निरामिषं धर्म निषेवता हि
महान्त अर्थो भवती नराणाम् ॥ ३ ॥

निरामिष चित्तु उपस्थपित्वा
निरामिष धर्म प्रकाशयित्वा ।
निरामिष येष भवेत प्रेम
ते तादृशा क्षिप्र भवन्ति बुद्धा ॥ ४ ॥

न जातु कामान् प्रतिसेवमान
पुत्रेषु दारेषु जनित्व तृष्णाम् ।
गृहं च सेवन्तु जुगुप्सनीयं
अनुत्तरां प्राप्स्यति सोऽग्रबोधिम् ॥ ५ ॥

ये काम वर्जेन्ति यथाग्निकर्षू
पुत्रेषु दारेषु जहित्व तृष्णाम् ।

---

१ After °क्षेमता, AB add तत्र कुमार कतमा तदत्यन्तनिष्ठ कुशलमूलं यदुतात्यन्तविशुद्धि २ AB अत्यन्तनिष्ठं कुशलमूलम् for the phrase ३ AB om यदमी सत्त्वा ४ B निसेवितं for निषेवता ५ C उपस्थहित्वा ६ AC जहित्व ७ B जनित्व

उत्रस्तु गेहादभिनिष्क्रमन्ति
न दुर्लभा तेष्वियमग्रबोधिः ॥ ६ ॥
न कश्चि बुद्धः पुरिमेण आसी
अनागते भेष्यति वावतिष्ठते ।
येहि स्थितैरेवमगारमध्ये
प्राप्ता इयमुत्तम अग्रबोधिः ॥ ७ ॥
प्रहाय राज्यं यथ खेटपिण्डं
वसेत रण्येषु विवेककामः ।
क्लेशान् प्रहाय प्रतिहत्य मारं
बुद्धयन्ति बोधिं विरजामसंस्कृताम् ॥ ८ ॥		N 59 10
यो बुद्धवीरान् यथ गङ्गवालुका
उपस्थिहेय्या बहुकल्पकोटियः ।
यश्चो गृहातः परिखिन्नमानसो-
ऽभिनिष्क्रमेय्या अयु तत्र उत्तमः ॥ ९ ॥		15
अन्नेहि पानेहि च चीवरेहि
पुष्पेहि गन्धेहि विलेपनेहि ।
नोपस्थिता भोन्ति नरोत्तमा जिना
यथ प्रव्रजित्वा चरियाण धर्मम् ॥ १० ॥		20
यश्चैव बोधिं प्रतिकाङ्क्षमाणः
सत्त्वार्थं निर्विण्णु कुसंस्कृतातः ।
रण्यामुखः सप्त पदानि प्रक्रमे
अयं ततः पुण्यविशिष्ट भोति ॥ ११ ॥

अश्रौषीत् खलु पुनः कुमारं राजा महाबलो भगवता घोषदत्तेन तथागतेनार्हता सम्यक्संबुद्धेन इमामेवंरूपां प्रवर्तितां नैष्क्रम्यप्रतिसंयुक्तां कथाम् । श्रुत्वा च विमृशति–यथाहं भगवतो भाषितस्यार्थमाजानामि, न भगवान् दानपारमितां वर्णयति, न शीलपारमितां वर्णयति । अत्यन्तनिष्ठां संवर्णयति । अत्यन्तविशुद्धिम् । अत्यन्तब्रह्मचर्यावासम् । अत्यन्तनिर्वाणं संवर्णयति । तस्यैतदभूत्–नेदं सुकरमगारमध्यावसता अनुत्तरधर्मप्रतिपत्तिं संपादयितुम्, अर्थं वा अनुप्राप्तुम् । परिहीणोऽस्म्यनुत्तराया धर्मप्रतिपत्तितः । यन्न्वहं केशश्मश्रू-ण्यवतार्य काषायाणि वस्त्राणि परिधाय सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजेयम् । इति हि		25 N 60

१ AB योऽभ्यतिष्ठते. २ AB वसेदरण्येषु for वसेत रण्येषु. ३ B विनिहत्य for प्रतिहत्य. ४ C °वालिका. ५ C यश्चोद्गृहीतः for यश्चो गृहातः. ६ B नाप्रष्ठिता for नोपस्थिता. ७ A यश्चैव for यश्चैव. ८ AB अरण्या° for रण्या°. ९ AB प्रक्रमेद् for प्रक्रमे. १० AB °विशिष्टो for° विशिष्ट. ११ C °संयुक्ता गाथाः for °संयुक्तां कथाम्. १२ A °चर्यसंवासम् for °चर्यावासम्. १३ After °निर्वाणं, C adds अत्यन्तपर्यवसानम्.

कुमार राजा महाबल सार्धमशीत्या ब्राह्मणगृहपतिशतसहस्रैः परिवृतः पुरस्कृतो येन भगवान् घोषदत्तो नाम तथागतोऽर्हन् सम्यक्संबुद्धस्तेनोपसंक्रामत् । उपसंक्रम्य भगवतः पादौ शिरसाभिवन्द्य त्रिः प्रदक्षिणीकृत्य एकान्तेऽस्थात् । अथ खलु कुमार भगवान् घोषदत्तो राज्ञो महाबलस्य अध्याशयं विदित्वा इमं सर्वधर्मस्वभावसमताविपञ्चितं समाधिं देशयते । अथ खलु कुमार राजा महाबल इमं समाधिं श्रुत्वा तुष्ट उदग्र आत्तमना केशश्मश्रूण्यवतार्य काषायाणि वस्त्राणि परिधाय सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजितोऽभूत् । स तथा प्रव्रजितः सन्निमं समाधिमुद्गृहीतवान् ।

N 61

उद्गृह्य पर्यवाप्य धारयित्वा वाचयित्वा भावनायोगमनुयुक्तो व्यहार्षीत् । स तेनैव कुशलमूलेन दशकल्पकोटयो न जातु दुर्गतिविनिपातमगमत्, विंशतिं च बुद्धकोटीरारागयामास । तेषां च तथागतानामन्तिकादिमं समाधिमश्रौषीत् । श्रुत्वा तेभ्यो बुद्धेभ्यस्तेनोद्गृहीतः पर्यवाप्तो धारितो वाचितो भावनायोगमनुयुक्तो व्यहार्षीत् । स ततः पश्चात् तेनैव कुशलमूलेन दशानां कल्पकोटीनामत्ययेन परिपूर्णेन कल्पशतसहस्रेण अनुत्तरां सम्यक्संबोधिमभिसंबुद्धोऽभूत् । सोऽप्रमेयाणां सत्त्वानामर्थं कृत्वा पश्चाद् बुद्धपरिनिर्वाणेन परिनिर्वृतोऽभूत् । तत्र कुमार यान्यशीतिप्राणिशतसहस्राणि राज्ञा महाबलेन सार्धं भगवन्तं घोषदत्तं तथागतमुपसंक्रान्तानि, तेऽपि सर्वे इमं समाधिं श्रुत्वा तुष्टा उदग्रा आत्तमनसः प्रमुदिताः प्रीतिसौमनस्यजाताः केशश्मश्रूण्यवतार्य काषायाणि

N 62

वस्त्राणि परिधाय सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजिता अभूवन् । तेऽपि तथा प्रव्रजिता इमं समाधिमुद्गृह्य पर्यवाप्य धारयित्वा वाचयित्वा भावनायोगमनुयुक्ता विहृत्य तेनैव कुशलमूलेन विंशतिकल्पकोटयो न जातु दुर्गतिविनिपातमगमन् । सर्वत्र च कल्पे कल्पे बुद्धकोटीर्बुद्धकोटीरारागयामासुः । सर्वेषां च तेषां तथागतानामन्तिके इमं समाधिं श्रुत्वोद्गृह्य पर्यवाप्य धारयित्वा वाचयित्वा भावनायोगमनुयुक्ता विहृत्य तेनैव पूर्वकेण कुशलमूलेन त्रिंशतां कल्पकोटीनामत्ययेन ततः पश्चात् परिपूर्णैर्दशभिः कल्पसहस्रैरनुत्तरां सम्यक्संबोधिमभिसंबुद्धा दृढशूरनामानस्तथागता अर्हन्तः सम्यक्संबुद्धा लोके उपपन्ना अभूवन् । तेऽप्यप्रमेयानसंख्येयान् सत्त्वान् परिपाच्य तेषां चार्थं कृत्वा बुद्धपरिनिर्वृता अभूवन् । तदनेनापि ते[14] कुमार पर्यायेण एवं वेदितव्यं यथायं समाधिर्बहुकरो बोधिसत्त्वानां महासत्त्वानामनुत्तरस्य सर्वज्ञ[16]ज्ञानस्याहरणाय संवर्तते [17]इति ॥

अथ खलु भगवांश्चन्द्रप्रभस्य कुमारभूतस्य तस्यां वेलायामेतदेव पूर्वयोगपरिवर्तं भूयस्या मात्रया गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म –

N 63

स्मराम्यहं पूर्वमतीतमध्वनि
अचिन्तिये कल्पि नराण उत्तम ।

---

१ C प्राणिशत° for ब्राह्मणगृहपतिशत° २ A om from नाम upto संबुद्ध ३ B °दत्तस्तथागतोऽर्हन् सम्यक्संबुद्ध for °दत्तो ४ B ज्ञात्वा for विदित्वा ५ A om कुमार ६ After आत्तमना BC add प्रमुदितः प्रीतिसौमनस्यजातः ७ After आरागयामास ८ C adds दशानां च कल्पकोटीनामत्ययेन सर्वेषां C om °शतं ९ After °भूत् B adds ज्ञानशूरो नाम तथागतोऽर्हन् सम्यक्संबुद्धोऽभूत्, १० AB °मनसा for °मनसः ११ A om पर्यवाप्य C उद्गृह्य for पर्यवाप्य १२ C °संबुध्य for संबुद्धा १३ After कृत्वा AB Add ततः पश्चाद् बुद्धपरिनिर्वाणेन १४ AC om ते कुमार १५ AC om महासत्त्वानाम् १६ C बुद्ध° for सर्वज्ञ° १७ AC om इति १८ A om विस्तरेण

उत्पन्नु लोकार्थकरो महर्षि
　नामेन सो उच्यति घोषदत्तः ॥ १२ ॥

अशीति कोट्यः परिपूर्ण तस्य
　प्रथमो गणो आसि य श्रावकाणाम् ।
द्वितीय चासीत्[1] परिपूर्ण सप्तति-　　5
　स्तृतीय चो षष्ट्यरहन्तकोटियः ॥ १३ ॥

सर्वे च क्षीणास्रव निष्क्लेशाः
　सर्वे च अभिज्ञबलपारमिं गताः ।
वर्षं सहस्रा दुवि विंश चायुः
　क्षेत्रं च आसीत् परिशुद्ध शोभनम् ॥ १४ ॥　　10

अभिषेकप्राप्ता परहित अप्रमेया
　नदितेहि भूमिहि च सुप्रतिष्ठिताः ।
आसन्न ते द्रुमवरि बोधि बोधितुं
　ये बोधिसत्त्वास्तु अभूषि तायिनः ॥ १५ ॥

इह जम्बुद्वीपस्मि अभूषि राजा　　15　　N 64
　दृढबलो नाम महाबलश्च ।
उपार्धु राज्यस्य तदेकु भुञ्जते
　द्वितीय चास्य अभूषि राजा ॥ १६ ॥

महाबलस्यो विजितस्मि बुद्धो
　उत्पन्न सो देवमनुष्यपूजितः ।　　20
लभित्व राजा सुगतस्मि श्रद्धाम्
　उपस्थिही वर्षसहस्र पूर्णम् ॥ १७ ॥

तस्यानुशिक्षी बहु अन्यसत्त्वाः
　कुर्वन्ति सत्कार तथागतस्य ।
लोकस्मिन्नेवैव हि धर्मपूजया　　25
　सश्रावकस्य अतुलोऽभू उत्सवः ॥ १८ ॥

अभूति चित्तं पुरुषोत्तमस्य[2]
　देशित्व धर्मस्मि धर्मकामाः ।
यन्नून सर्वे प्रजहित्व कामा-
　निह प्रव्रजेयुर्मम शासनस्मिन् ॥ १९ ॥　　30

---

१ A आसीत् for चासीत्. २ AB द्विपदोत्तमस्य for पुरुषो°.

## समाधिपरिवर्तः ।

N 67 तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म — तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन इमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन समाधिपरिकर्म करणीयम् । तत्र कुमार कतमत् समाधिपरिकर्म ? इह कुमार बोधिसत्त्वो महाकरुणासंप्रस्थितेन चित्तेन तिष्ठतां वा तथागतानां परिनिर्वृतानां वा पूजाकर्मणे उद्युक्तो भवति, यदुत 5 चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वज-पताकाभिस्तूर्यतालावचरैर्वैजयन्तीभिः तच्च कुशलमूलं समाधिप्रतिलम्भाय परिणमयति । स न कंचिद्धर्ममाकाङ्क्षंस्तथागतं पूजयति न रूपं न कामान् न भोगान् न स्वर्गान् न परिवारान् । अपि तु खलु पुनर्धर्मचित्तको भवति । स आकाङ्क्षन् धर्मकायतोऽपि तथागतं नोपलभते,
N 68 किमङ्ग पुना रूपकायत उपलप्स्यते । तस्मात्तर्हि कुमार एषा सा तथागतानां पूजा यदुत 10 तथागतस्यादर्शनमात्मनश्चानुपलब्धिः कर्मविपाकस्य चाप्रतिकाङ्क्षणता । अनया कुमार त्रिमण्डल-परिशुद्धया पूजया तथागतं पूजयित्वा बोधिसत्त्वो महासत्त्व इमं समाधिं प्रतिलभते क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते ॥

अथ खलु भगवांस्तस्यां वेलायां चन्द्रप्रभस्य कुमारभूतस्य एतदेव समाधिपरिकर्मनिर्देशं भूयस्या मात्रया गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म —

15 अनन्तज्ञानस्य ददित्व गन्धान्
अनन्तगन्धो भवती नराणाम् ।
न कल्पकोटीय व्रजन्ति दुर्गतिं
दुर्गन्धिय तेषु न जातु भोति ॥ १ ॥

ते कल्पकोट्यश्चरमाणु चारिकां
20 पूजित्व बुद्धान सहस्रकोटियः ।
ते शीलगन्धेन समुद्गतेन
भवन्ति बुद्धा वरशीलगन्धिकाः ॥ २ ॥

N 69 सचेत् पुनर्जानति नास्ति सत्त्वो
यो गन्ध देती तथ यस्य दीयते ।
25 एतेन चित्तेन ददाति गन्धं
मेनास्य क्षान्तिर्भुद्ध आनुलोमिकी ॥ ३ ॥

१ C कृत्य for करणीयं, २ B om. चित्तेन ३ AB °पिण्डपात्र° for °पात° ४ [illegible] om वैजयन्तीभिः ५ ABT om न रूपं ६ AB परिवारं for परिवारान् ७ A च for तु ८ After °कर्ते C adds तमनुपश्यन्ति ९ C पुनरन्यं धर्मकायत for पुना रूपकायत १० AC °प्रतिकाङ्क्षणता for °काङ्क्षणता ११ After प्रतिलभते, C adds सो नेन त्रिमण्डलपरिशुद्धेन परिणामेन परिणामयति, तस्य तदुपस्थानं मयि चित्तनिधाय इमं च समाधिं प्रतिलभते १२ C कल्पान कोटीय व्रजन्ति for न कल्पकोटीय व्रजन्ति १३ C शीलगन्धेन for शीलगन्धेन १४ A गन्धवन्ती for गन्धवती १५ A गन्धान् for गन्धम्

तस्यैतं क्षान्तिमधिमात्र सेवतः
  सचेन्नरः कौंकणि[2]च्छेदु छियते ।
यत्पान कोटयो यथ गङ्गवालिका
  न तस्य चित्तं भवति[3] विवर्तियम् ॥ ४ ॥

किं कारणं वुच्यति क्षान्ति नाम
  कथं पुनो वुच्यति आनुलोमिकी ।
अविवर्तिको[4] वुच्यति केन हेतुना
  कथं पुनो वुच्यति बोधिसत्त्वः ॥ ५ ॥

क्षान्त्यस्मि धर्मे प्रकृती निरात्मके
  नैरात्म्यसंज्ञस्य किलेशु नास्ति ।
एवं यादृशं जानति सर्वधर्मा-
  स्तस्मादिह स्या क तु क्षान्ति नाम ॥ ६ ॥

आनुलोमि[6] सर्वेष जिनान शिक्षतो[7]
  न चास्ति धर्मेश्वरते विचक्षणः ।
न बुद्धधर्मेषु जनेति संशया-
  नियं स क्षान्तिर्भवतानुलोमिकी ॥ ७ ॥

एवं चरन्तस्य य लोकि मारा-
  स्ते बुद्धरूपेण भणेष्य वाचा ।
सुदुर्लभा बोधि[9] मवींहि श्रावका
  न गृह्णोती यावसु न चो विवर्तते[10] ॥ ८ ॥

बोधेति सत्त्वान् त्रिषमानु दर्षितो
  न एष मार्गो अमृतस्य प्राप्तये ।
कुमार्ग वर्णित्व पथे स्थपेति
  तं कारणमुच्यति बोधिसत्त्वः ॥ ९ ॥

क्षमित्यनूलोमपथे स्थितस्य
  नैरात्म्यसञ्ज्ञाय विशोधितस्य ।
स्वप्नान्तरेऽप्यस्य न जातु भोति
  अस्ति नरो पुद्गल जीव सत्त्वः ॥ १० ॥

---

१ B तस्यैव for तस्यैतं. २ B कारणिमथ छेद्यते for कौंकणिच्छेदु छियते. ३ C भवतीति वर्तियम् for भवति विवर्तियम्. ४ A सुविवर्ति यो; B अविवर्तिये for °र्तिको. ५ B om. ख. ६ [illegible] अनुलोम for आनुलोमि. ७ AC शिक्षते for शिक्षतो. ८ C क्षान्ती भवतानुलोमता. ९ A B भोति for बोधि. १० B यावपुनो विवर्तवे; C बोधिवादि श्रावको.

स भाषते गाथ नराणमुत्तमः
संलेखिधर्मं सुगतान शिक्षाम्[1]।
गृहवासदोषांश्च अनन्तदुःखान्
प्रतिपत्ति धर्मेष्विह धर्मपूजा ॥ २० ॥

N 65

श्रुणित्व गाथां तद राजपार्थिवो
एको विचिन्तेति रहोगतो नृपः।
न शक्य गेहस्मि स्थिहित्व सर्वे[2]
प्रतिपद्यितुमुत्तमधर्मपूजा ॥ २१ ॥

स राज्य त्यक्त्वा यथ खेटपिण्डं
प्राणिसहस्रेभिरशीतिभिः सह।
उपसंक्रमी तस्य जिनस्य अन्तिकं[3]
वन्दित्व पादौ पुरतः स्थितोऽभूत् ॥ २२ ॥

10

तेषां जिनो आशयु जानमानो
देशेतिमं शान्त समाधि दुर्दृशम्।
ते प्रीतिप्रामोद्यसुखेन प्रीणिता–[4]
स्तुष्टा उदग्रास्तद प्रव्रजिंसु ॥ २३ ॥

15

ते प्रव्रजित्वान इमं समाधिं
धारित्व वाचित्व पर्यापुणित्व।
न जातु गच्छे विनिपातदुर्गतिं
कल्पान कोट्यः परिपूर्ण विंशतिम् ॥ २४ ॥

20

ते तेन सर्वे कुशलेन कर्मणा
आरागयिंसु बुद्धान सहस्रकोटियः।
सर्वेषु चो तेषु जिनानुशासने[5]
ते प्रव्रजित्वेसु समाधि मार्गयी ॥ २५ ॥

N 66

ते पश्चिमे कालि अभूषि बुद्धा
दृढशूरनामान[6] अनन्तवीर्याः।
कृत्वा च अर्थं बहुप्राणिकोटिनां
ते पश्चिमान्तेस्मि शिवीभ्र निर्वृताः ॥ २६ ॥

25

१ A शिष्यान् for शिक्षाम्, २ AB सर्वा for सर्वे. ३ C अन्तिके. ४ B प्रीतिगृह्य for प्रीणिता. ५ C जिनान for जिनानु°. ६ C °नामेन for °नामान.

महाबलो राजा य आसि पूर्वं
　　से ज्ञानशूरो अभु बुद्ध लोके ।
तदा बहु प्राणिसहस्रकोटियः
　　स्थपेत्व बोधाय स पथि निर्वृतः ॥ २७ ॥

तस्माच्छृणित्वा इमु पश्चिकाले
　　धारेथ सूत्रमिमु बुद्धवर्णितम् ।
धारेत्विममीदृश धर्मकोषं
　　भविष्यथा क्षिप्र नराणमुत्तमाः ॥ २८ ॥

5

इति श्रीसमाधिराजे घोषदत्तपरिवर्तो नाम पञ्चमः ॥

१ B अज्ञान° for स ज्ञान°. २ A धर्मगञ्जं for धर्मकोषं.

सचे मारकोट्यो यथ गङ्गवालुका-
स्ते बुद्धरूपेण उपागमित्वा।
भणेयुरभ्यन्तरकास्यु जीवो
ते मं वदे नास्ति न यूय बुद्धा ॥ ११ ॥

ज्ञानेन जानाम्यहु स्कन्धशून्यकं
ज्ञात्वा च क्लेशेहि न संवसामि।
व्याहारमात्रेण च व्योहरामि
परिनिर्वृतो लोकमिमं चरामि ॥ १२ ॥

N 72

यथा हि पुत्र पुरुषस्य जातु
कृतंसि नामा अयमेव नाम।
10
नामं न तस्यो दिशता सुलभ्यते
तथास्य नामं न कुतश्चिदागतम् ॥ १३ ॥

तथैव नामं कृतु बोधिसत्त्वो
न चास्य नामं दिशता सुलभ्यते।
15
पर्येषमाणो अयु बोधिसत्त्वो
जानाति यो एवं स बोधिसत्त्वः ॥ १४ ॥

समुद्रमध्येऽपि ज्वलेत अग्निः
न बोधिसत्त्वस्य सत्कायदृष्टिः।
यतोऽस्य बोधाय उत्पन्नु चित्त-
20
मत्रान्तरे तस्य न जीवदृष्टिः ॥ १५ ॥

न ह्यत्र जातो न मृतो च कश्चि-
दुत्पन्न सत्त्वो मनुजो नरो वा।
मायोपमा धर्म स्वभावशून्या
न शक्यते जानितु तीर्थिकेहि ॥ १६ ॥

N 73 25

न चापि आहारविमुक्तितेहि
रुक्षेहि गृद्धेहि च पात्रचीवरे।
न चोद्दनेहि नपि चोलनेहि
शक्यं इयं जानितु बुद्धबोधिः ॥ १७ ॥

---

१ B नवि for सचे. २ C स्कन्धशून्यता for °शून्यकं. ३ C व्यवहार° for व्याहार°. ४ A व्याहरामि for व्योहरामि. ५ AC न च नामं for नामं न तस्यो. ६ C दिशता अलभ्यते for दिशता सुलभ्यते. ७ C एव for एवं. ८ A नरोऽपि वा for नरो वा. ९ A सर्वे for धर्म. १० C गृद्धेहि for गृधेहि. ११ C शक्या इमं for शक्यं इयं.

न स्त्यानमिद्धाभिहतै कुसीदै
　　स्तब्धेहि मानीहि अनात्रपेहि।
येषा न बुद्धस्मि प्रसादु अस्ति
　　न शक्यते ही वरबोधि जानितुम्॥ १८॥

न भिन्नवृत्तेहि पृथग्जनेहि
　　येषा न धर्मस्मि प्रसादु अस्ति।
सब्रह्मचारीषु च नास्ति गौरव
　　न शक्यते ही वरबोधि बुद्धितुम्॥ १९॥

अभिन्नवृत्ता हिरिमन्त लज्जिनो
　　येषा स्ति बुद्धे अपि धर्मे प्रेम।
सब्रह्मचारीषु च तीव्रगौरव
　　ते प्रापुणन्ती वरबोधिमुत्तमाम्॥ २०॥

स्मृतेरुपस्थान इह येषे गोचर
　　प्रामोद्य प्रीति शयनमुपस्तृतम्।
ध्यानानि चाहारु समाधि पानिय
　　बुध्यन्ति तेऽपि वरबोधिमुत्तमाम्॥ २१॥

नैरात्म्यसंज्ञा च दिवाविहारो
　　अनुस्मृतिश्चंक्रमशून्यभाव।
बोध्यङ्गपुष्पा सुरभी मनोरमा
　　ते युज्यमाना वरबोधि प्रापथी॥ २२॥

या बोधिसत्वान चरी विदूना
　　सभूमिरन्यस्य जनस्य तत्र।
प्रत्येकबुद्धान च श्रावकाण च
　　को वात्र विज्ञो न जनेय छन्दम्॥ २३॥

सर्वेममा आयु भवेत एत्तक
　　कल्पान कोट्यो यथ गङ्गवालुका।
एकस्य रोमस्य भणेयं वर्णं
　　बौद्धेन ज्ञानेन पर्यंतु नास्ति॥ २४॥

१ AB मानेहि for मानीहि २ C अनोत्रपेहि for अनात्रपेहि ३ AB बुध्दितुम् for जानितुम् ४ A च नास्ति for न चास्ति ५ B येषु गौरव for येष गोचर ६ AB जानिय for पानिय ७ B °शून्यभावने for °भाव ८ BC छद ९ B यत्तक for एत्तक १० A भणेसुर्णं for भणेय वर्णं

तस्माच्छ्रुणित्वा इमु आनुशंसा-
    मनाभिभूतेन जिनेन देशिताम्[1] ।
इमं समाधिं लघु उद्दिशेया
    न दुर्लभा भेष्यति अग्रबोधिः ॥ २५ ॥
5 इति श्रीसमाधिराजे समाधिपरिवर्तो नाम[2] षष्ठः[3] ॥

१ A देशिताम् for देशिताम्. २ A om. नाम. ३ B षष्ठमः for षष्ठ.

७

## त्रिक्षान्त्यवतारपरिवर्तः ।

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेनेमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन त्रिक्षान्तिज्ञानकुशलेन[1] भवितव्यम् । तेन प्रथमा क्षान्तिः प्रज्ञातव्या । द्वितीया क्षान्तिः प्रज्ञातव्या । तृतीया क्षान्तिः प्रज्ञातव्या । त्रिक्षान्तिविशेषकुशलेन भवितव्यं त्रिक्षान्तिज्ञानविशेषकुशलेन च[2] । तत् कस्य हेतोः ? तथाहि कुमार यदा बोधिसत्त्वो महासत्त्वस्त्रिक्षान्तिविशेष[3]कुशलो भवति त्रिक्षान्तिज्ञानविशेषकुशलश्च भवति, तदायं कुमार बोधिसत्त्वो महासत्त्वः क्षिप्रं[4] समाधिं प्रतिलभते, क्षिप्रं च[5]ानुत्तरां सम्यक्संबोधिमभिसंबुध्यते । तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेनायं त्रिक्षान्त्यवतारो धर्मपर्याय उद्ग्रहीतव्यः । उद्गृह्य च परेभ्यो विस्तरेण संप्रकाशयितव्यः । तत् भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय[6] हिताय सुखाय देवानां च मनुष्याणां चेति[7] ॥

अथ खलु भगवांश्चन्द्रप्रभस्य कुमारभूतस्येमं त्रिक्षान्त्यवतारं धर्मपर्यायं गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म —

न केनचित् सार्धं[8] करोति विग्रहं
  न भाषते वाचमनर्थसंहिताम् ।
अर्थे च धर्मे च सदा प्रतिष्ठितः
  प्रथमाय क्षान्तीय स्द निर्दिशीयति ॥ १ ॥

मायोपमान् जानति सर्वधर्मान्
  न चापि सो भोति निमित्तगोचरः ।
न हीयते ज्ञानविवृद्धभूमेः[9]
  प्रथमाय क्षान्तीय इमे विशेषाः ॥ २ ॥

स सर्वसूत्रान्तनयेषु कोविदः
  सुभाषितेऽस्मिन्नधिमुक्तिपण्डितः[10] ।
अनन्तज्ञानी सुगतान ज्ञाने
  प्रथमाय क्षान्तीय इमे विशेषाः ॥ ३ ॥

यः[11] कश्चि धर्मं शृणुते सुभाषितं
  बुद्धान चो भाषितुं[12] तत्र काङ्क्षति ।
अधिमुच्यते सर्वजिनान धर्मतां
  प्रथमाय क्षान्तीय इमे विशेषाः ॥ ४ ॥

---

१ B °ज्ञानमूलेन कुशलेन for °ज्ञानकुशलेन. २ After च B C add भवितव्यम्. ३ B om. °विशेष°. ४ C om. क्षिप्रं समाधिं प्रतिलभते. ५ C om. च. ६ C °कायस्य हितार्थाय for °कायस्यार्थाय हिताय. ७ C om. इति. ८ A B C सार्धु for सार्धं. ९ B ज्ञानी विवृद्धिभूमेः for ज्ञानविवृद्ध°. १० B °धिमुक्त°; C °धिमुक्त° for °धिमुक्तिपण्डितः. ११ A यत्किंचिद्धर्मं; B यं किंचि; C यं कंचि. १२ A B भाषितु.

N 78

नीतार्थ[1]सूत्रान्तविशेष जानति
यथोपदिष्टा सुगतेन शून्यता ।
यस्मिन् पुनः पुद्गल सत्त्व पुरुषो
नेयार्थतां जानति सर्वधर्मान् ॥ ५ ॥

ये अस्मि लोके पृथु अन्यतीर्था[2]
न तस्य तेषु प्रतिहन्यते[3] मनः ।
कारुण्यमेतेषु उपस्थपेति
प्रथमाय क्षान्तीय इमे विशेषाः ॥ ६ ॥

आभासमागच्छति तस्य धारणी
तस्मिंश्च आभासि न जातु काङ्क्षति ।
सत्यानु[4]परिवर्तिनि वाच भाषते
प्रथमाय क्षान्तीय इमे विशेषाः ॥ ७ ॥

N 79

चतुर्ण[5] धातुन सियान्यथात्वं
वाय्वम्बुतेज पृथिवीय चापि ।
न चो विवर्तेत स बुद्धबोधेः
प्रथमाय क्षान्तीय इमे विशेषाः ॥ ८ ॥

ये शिल्पस्थाना पृथु अस्ति लोके
सर्वेषु[6] सो[7] शिक्षितु बोधिसत्त्वः ।
न चात्मन उत्तरि किंचि पश्यति
प्रथमाय क्षान्तीय इमे विशेषाः ॥ ९ ॥

अकम्पियः समथ[8]बलेन भोति
शैलोपमो भोति विपश्यनाय[9] ।
न क्षोभितुं शक्यु स सर्वसत्त्वै-
द्वितीयाय क्षान्तीय से[10] निर्दिशीयति ॥ १० ॥

समाहितस्तिष्ठति भाषते च
समाहितश्चंक्रमते निषीदति ।
समाधिये पारमितागतो विदु
द्वितीयाय क्षान्तीय इमे विशेषाः ॥ ११ ॥

---

१ A नीतान्त° for नीतार्थ°, B om. नीतार्थसूत्रान्त°. २ C अन्यतीर्थ्या for °तीर्था. ३ C प्रतिपाद्यते for प्रतिहन्यते. ४ B सत्यानपरि°; C अन्यानुपरि° for सत्यानुपरि°. ५ A चतुर्णवोभूमिपियायथात्वं for the line. ६ A om. from सर्वेषु up to विशेषा in ४c. ७ C चो for सो ८ B समर्थबलेन for समथबलेन. ९ A विपश्यनायाः; B विपश्यनाय for विपश्यनाय. १० A इमे विशेषाः for स निर्दिशीयति.

समाहितो[१] क्रमति अभिज्ञ पञ्च　　N 80

क्षेत्रंशतं[२] गच्छती धर्मदेशकः ।

यो चापि सो ऋद्धिबलात्तु हीयते

द्वितीयाय क्षान्तीय इमे विशेषाः ॥ १२ ॥

स तादृशं शान्त समाधिमेषते[३]　　5

समाहितस्य न स अस्ति सत्त्वः ।

यस्तस्य चित्तस्य प्रमाणु गृह्णीया

द्वितीयाय क्षान्तीय इमे विशेषाः ॥ १३ ॥

ये लोकधातुष्विह केचि सत्त्वा-

स्ते बुद्धज्ञानेन भणेयु धर्मान् ।　　10

उद्गृहतो[४] सर्व यतो हि भाषितं

*द्वितीयाय क्षान्तीय इमे विशेषाः ॥ १४ ॥*

पुरिमोत्तरा दक्षिणपश्चिमासु

हेष्टे तथोर्ध्वं विदिशासु चैव ।

सर्वत्र सो पश्यति लोकनाथान्　　15

तृतीयाय क्षान्तीय स निर्दिशीयति ॥ १५ ॥

सुवर्णवर्णेन समुच्छ्रयेण

अचिन्तियां निर्मित निर्मिणित्वा[५] ।

देशेति धर्मं बहुप्राणिकोटिनां　　N 81

तृतीयाय क्षान्तीय इमे विशेषाः ॥ १६ ॥　　20

य जम्बुद्वीप इह बुद्धक्षेत्रे

*सर्वत्र सो दृश्यति[६] बोधिसत्त्वः ।*

ज्ञातश्च भोती ससुरासुरे जगे

तृतीयाय क्षान्तीय इमे विशेषाः ॥ १७ ॥

शुद्धान आचारु तथैव गोचरा　　25

ईर्यापथो यादृश नायकानाम् ।

सर्वत्र सो शिक्षितु भोति[७] पण्डितः-

स्तृतीयाय क्षान्तीय इमे विशेषाः ॥ १८ ॥[८]

ये लोकधातुष्विह केचि सत्त्वा-

स्ते बोधिसत्त्वस्य भणेयु वर्णम् ।　　30

---

१ B समाधितो for समाहितो. २ B क्षेत्रेशतो; C क्षेत्र शताः for क्षेत्रशतं. ३ A समाधि सेवतः. ४ A उद्गृहते for उद्गृहतो. ५ C निर्मिहित्वा for निर्मिणित्वा. ६ A [illegible] पश्यति for दृश्यति. ७ A B T बोधिसत्त्वः for भोति पण्डितः. ८ After पण्डितः (बोधिसत्त्वः) B adds a line: ज्ञातश्च भोति ससुरासुरे जगे.

सचेऽस्य तस्मिन् नानुनीयते मनो
न शिक्षितो उच्यति बुद्धज्ञाने ॥ १९ ॥

ये लोकधातुष्विह केचि सत्त्वा
स्ते बोधिसत्त्वस्य भणेयु वर्णम्[1] ।

N 82 5 सचेऽस्य तेषु[2] प्रतिहन्यते[3] मनो
न शिक्षितोऽप्यापि स बुद्धज्ञाने ॥ २० ॥

अर्थेन[4] लब्धेन न भोति सूमनो
न चाप्यनर्थेन स भोति दुर्मना ।

शैलोपमे चित्ति सदा प्रतिष्ठितो
10 अय विशेषस्तृतीयाय क्षान्तिया ॥ २१ ॥

घोषानुगामी इय क्षान्तिरक्ता
चिन्तामयी भावनानुलोमिकी ।

श्रुतमया[6] सा अनुपत्तिका या
शिक्षा च अत्राप्यनु बोधिमार्गे ॥ २२ ॥

15 तिस्रोऽपि क्षान्तीय सदा निरुत्तरा
स बोधिसत्त्वेन भवन्ति लब्धा ।

दृष्ट्वा ततस्तं सुगता[5] नरोत्तमा
वियाकरोन्ति विरजाय बोधये ॥ २३ ॥

ततोऽस्य[7] त व्याकरण श्रुणित्वा
20 प्रकम्पिता मेदिनी षड्विकारम् ।

N 83 आभाय क्षेत्र भवते प्रभास्वर
पुष्पाणि च वर्षिषु देवकोट्य[8] ॥ २४ ॥

तस्यो च त व्याकरण श्रुणित्वा
सत्त्वान कोटी नियुता अचिन्तिया ।

25 उत्पादयी चित्त वराग्रबोधये
वय पि भेष्याम जिने आर्यचेतिका[9] ॥ २५ ॥

क्षान्त्या इमास्तिस्र निरुत्तरा यदा
संबोधिसत्त्वेन[10] भवन्ति लब्धा ।

न चापि सो जायति नापि भ्रीयते
30 न चापि स च्यवति नोपपद्यते[11] ॥ २६ ॥

---

१ B भणेय वर्णम्, C भणे अवर्णम् for भणेयु वर्णम् २ A तत्र for तेषु ३ C प्रतिमान्यते for °हन्यते ४ C अनेन for अर्थेन ५ A B सुगता ६ B श्रुतमयी for श्रुतमया ७ C ततोऽपि for ततोऽस्य, C reads st. 25 before st 24 ८ C वर्षति पुष्पवर्षम् for वर्षिषु देवकोट्य ९ A B जिनाग्रचेतिका for जिन आर्यचेतिका १० A B सबोधि° for संबोधि° ११ A B न चोपपद्यते

यदा इमा क्षान्ति त्रयो निरुत्तरा
संबोधिसत्वेन भवन्ति लब्धाः ।
न पश्यते जायति यश्च म्रीयते
स्थितधर्मतां पश्यति सर्वधर्मान् ॥ २७ ॥
तथाहि तेनो वितथेति ज्ञाता
मायोपमा धर्म स्वभावशून्याः ।
न शून्यता जायति नो च म्रीयते
स्वभावशून्या इमि सर्वधर्माः ॥ २८ ॥
यदाप्यसौ सत्कृतु भोति केनचिद्
उपस्थितो मानितु पूजितोऽर्चितः ।
न तस्य तस्मिन्ननुनीयते मनो
जानाति सो धर्मस्वभावशून्यताम् ॥ २९ ॥
आक्रुष्ट सत्त्वेहि प्रहारतर्जितो
न तेषु क्रोधं कुरुते न मानम् ।
मैत्रीं च तेषु दृढ संजनेति
तथैव सत्त्वान प्रमोचनाय ॥ ३० ॥
लोष्टेहि दण्डेहि च ताड्यमानः
प्रतिघातु तेषु न करोति पण्डितः ।
नैरात्म्यक्षान्तीय प्रतिष्ठितस्य
न विद्यते क्रोधखिलं न मानः ॥ ३१ ॥
तथाहि तेनो वितथेति ज्ञाता
मायोपमा धर्म स्वभावशून्याः ।
स तादृशे धर्मनये प्रतिष्ठितः
सुसत्कृतो भोति सदेवलोके ॥ ३२ ॥
यदापि सत्त्वाः प्रगृहीतशस्त्रा-
च्छिन्देयु तस्यो पृथु अङ्गमङ्गम् ।
न तस्य तेषु प्रतिहन्यते मनो
न चापि मैत्री करुणा च हीयते ॥ ३३ ॥
एवं च सो तत्र जनेति चित्तं
छिन्दन्ति ते हि पृथु अङ्गमङ्गम ।

१ C ते बोधि° for सबोधि°. २ C ज्ञानस्वभावु शून्यता for धर्मस्वभावशून्यताम्. ३ A B T न शून्यतां पश्यति for न शून्यता जायति. ४ A B इति for इमि. ५ B पूजितोऽपि for °पूजितोऽर्चितः. ६ B तथा च for तथाहि. ७ A सर्वे for धर्म. ८ C भवयते.

तथा[1] न मह्य शिवे[2] शान्ति निर्वृती
यावन्न स्याच्चे इमि अप्रबोधये ॥ ३४ ॥
एतादृशो क्षान्तिनये निरुत्तरे
नैरात्म्यक्षान्तीसमताविहारिणाम् ।
सर्वबोधिसत्त्वान महायशाना
कल्पान कोट्य सतत सुभाविता[3] ॥ ३५ ॥
ततोत्तरे यात्तिक गङ्गवालिका[4]
न[5] तान बोधी भवतीह स्पर्शिता ।
ये बुद्धज्ञानेन ने करोति कार्यं
किं वा पुनर्ज्ञान तथागतानाम् ॥ ३६ ॥
क्षपेतु वर्ण सुवर न तेषा
प्रभाषता कल्पशतान्यचिन्तिया ।
अनन्तकीर्तेन महायशाना
नैरात्म्यक्षान्तीय प्रतिष्ठितानाम् ॥ ३७ ॥
तस्माद्धि यो इच्छति बोधि बुद्धितु[6]
त ज्ञानस्कन्ध प्रवर निरुत्तरम् ।
स क्षान्ति भावेतु जिनेन वर्णिता
न दुर्लभा बोधि वरा भविष्यति ॥ ३८ ॥
इति श्रीसमाधिराजे[7] त्रिक्षान्त्यवतारपरिवर्तो नाम[8] सप्तम ॥ ७ ॥

१ A B माता for तथा २ B शिय शान्त for शिव शान्ति ३ B सुभाषिता for सुभाविता ४ A गङ्गवालुका ५ AB om न ६ BC बुध्यते ७ B om इति श्रीसमाधिराजे ८ A om नाम

## *अभावसमुद्गतपरिवर्तः ।

[1] तत्र पुनरपि भगवान् चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म[2]—भूतपूर्वं कुमार अतीतेऽध्वनि N 87
[3] असंख्येयैः कल्पैरसंख्येयतरैर्विपुलैरप्रमेयैरचिन्त्यैरपरिमाणैर्यदासीत् । तेन कालेन तेन समयेन N 88
अभावसमुद्गतो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोके उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । तत् किं मन्यसे कुमार केन कारणेन स तथागतोऽभावसमुद्गत इत्युच्यते ? स खलु पुनः कुमार तथागतो जातमात्र एवोपर्यन्तरीक्षे सप्ततालमात्रं वैहायसमभ्युद्गम्य सप्त पदानि प्रक्रमित्वा इमामेवंरूपां वाचमभाषत—अभावसमुद्गताः सर्वधर्माः, अभावसमुद्गताः सर्वधर्मा इति । तेन च कुमार शब्देन त्रिसाहस्रमहासाहस्रो लोकधातुः स्वरेणाभिविज्ञप्तोऽभूत् । तत्र भौमान् देवानुपादाय यावद् ब्रह्मलोकं परंपरया शब्दमुदीरयामासुः[4] घोषमनुश्रावयामासुः—अभावसमुद्गतो बतायं तथागतो भविष्यति, यो जातमात्र एवोपर्यन्तरीक्षे सप्ततालमात्रमभ्युद्गम्य सप्त पदानि प्रक्रमित्वा[5] अभावशब्दमुदीरयति[6] । इति अभावसमुद्गतोऽभावसमुद्गत इति तस्य[7] तथागतस्य नामधेयमुदपादि । तस्य च भगवतो बोधिप्राप्तस्य सर्ववृक्षपत्रेभ्यः सर्वतृणगुल्मौषधिवनस्पतिभ्यः सर्वशैलशिखरेभ्यश्चा[8]भावसमुद्गतशब्दो निश्चरति[9] । यावति च तत्र लोकधातौ शब्दप्रज्ञप्तिः सर्वतोऽभावसमुद्गतविज्ञप्तिशब्दो निश्चरति । N 89
तेन च कुमार कालेन तेन समयेन तस्य भगवतोऽभावसमुद्गतस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य प्रवचने महाकरुणाचिन्ती नाम राजकुमारोऽभूदभिरूपः प्रासादिको दर्शनीयः परमेशुभवर्णपुष्कलतया समन्वागतः[10] । अथ खलु कुमार स महाकरुणाचिन्ती नाम राजकुमारो येन भगवान् अभावसमुद्गतस्तथागतोऽर्हन् सम्यक्संबुद्धस्तेनोपसंक्रामत् । उपसंक्रम्य तस्य भगवतः पादौ शिरसाभिवन्द्य भगवन्तं त्रिः प्रदक्षिणीकृत्य एकान्तेऽस्थात् ॥

अथ खलु कुमार स भगवान् अभावसमुद्गतस्तथागतोऽर्हन् सम्यक्संबुद्धो महाकरुणाचिन्तिनो राजकुमारस्याध्याशयं विदित्वा इमं[11] समाधिं देशयामास । अथ खलु कुमार स महाकरुणाचिन्ती राजकुमारः इमं समाधिं श्रुत्वा तुष्ट[12] उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातः प्रसीदति स्म । प्रसन्नचित्तश्च केशश्मश्रूण्यवतार्य काषायाणि वस्त्राणि परिधाय सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजितो[13]ऽभूत् । स प्रव्रजितः सन्निमं समाधिमुद्गृहीतवान्[14] । N 90
उद्गृह्य पर्यवाप्य धारयित्वा वाचयित्वा भावनायोगमनुयुक्तो व्यहार्षीत् । स तेनैव कुशलमूलेन

---

* This chapter is edited by Régamey, Warsaw, 1939.

[1] C तत्र खलु भगवान् पुनरेव for तत्र पुनरपि भगवान्. [2] After स्म, ABT read a passage given in App. I (No. 7). [3] C असंख्येयतरे विपुलेऽप्रमेयेऽचिन्त्येऽपरिमाणे for असंख्येयैः ... माणैः. [4] B उदानयामासु॰ for उदीरयामासुः. [5] C प्रक्रम्य for प्रक्रमित्वा. [6] B °दीरयन् for °दीरयति. [7] C om. तस्य तथागतस्य. [8] C पर्वतेभ्य for °शैलशिखरेभ्यः. [9] B निःसरति for निश्चरति. [10] A B om. परम ...गतः. [11] After इमं, C adds सर्वधर्मस्वभाव° ... स्म. [12] A B om. तुष्ट ... जातः. [13] A B om. अभूत्. [14] C उद्गृह्णाति धारयति वाचयति पर्यवाप्नोति भावनायोगमनुयुक्तश्च विहरति for उद्गृहीतवान् ...व्यहार्षीत्.

विंशतिकल्पकोट्यो न जातु दुर्गतिविनिपातमगमत् । [1]त्रिंशतीनां कल्पानामत्ययेन अनुत्तरां सम्यक्संबोधिमभिसंबुद्धोऽभूत् । सुविचिन्तितार्थो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोक उदपादि । सर्वेषु च तेषु कल्पेषु विंशतिं च बुद्धकोटीरारागयामास[2] । पश्य कुमार यथायं समाधिर्बहुकरो बोधिसत्त्वानां महासत्त्वानामनुत्तरस्य बुद्धज्ञानस्य परिपूरणाय संवर्तते ॥

N 91 अथ खलु भगवांस्तस्यां वेलायामिमा[3] गाथा अभाषत—

स्मराम्यहं पूर्वमतीतमध्वनि
अचिन्तिये कल्पि नराणमुत्तमः[4] ।
उत्पन्नु लोकार्थकरो महर्षि-
र्नाम्ना हि सोऽभावसमुद्गतोऽभूत् ॥ १ ॥

10 स जातमात्रो गगने स्थिहित्वा
सर्वेष धर्माण अभावु देशयी ।
तदानुरूपं कृतु नामधेयं
शब्देन सर्वं त्रिसहस्र विज्ञपी ॥ २ ॥

देवापि सर्वे प्रमुमोच शब्दं
15 अभावु नाम्नेति जिनो भविष्यति ।
यो जातमात्रः पद सप्त प्रक्रम-
न्नभावु धर्माण ब्रवीति नायकः ॥ ३ ॥

बुद्धो यदा भेष्यति धर्मराजः
सर्वेष धर्माण प्रकाशको मुनि. ।
20 तृणवृक्षगुल्मौषधिशैलपर्वते
अभावु धर्माण रवो भविष्यति ॥ ४ ॥

N 92 यावन्ति शब्दास्तहि लोकधातौ
सर्वे ह्यभावा न हि कश्चि भावः ।
तावन्ति खो तस्य तथागतस्य
25 स्वरु निश्चरी लोकविनायकस्य ॥ ५ ॥

तस्मिंश्च काले अभु राजपुत्रः
करुणाविचिन्ती सद नामधेय. ।
अभिरूप प्रासादिक दर्शनीय
उपागमी तस्य जिनस्य अन्तिकम्[5] ॥ ६ ॥

---

१ A B T om. from त्रिंशतीना up to कल्पेषु. २ After आरागयामास, ABT read a passage given in App. I (No 8) ३ After वेलायाम्, ABT read भूयस्या मात्रया एतमेव पूर्वयोगपरिवर्तं चन्द्रप्रभस्य कुमारभूतस्य विस्तरेण गाथाभिगीतेन सप्रकाशयति स्म for इमा गाथा अभाषत. ४ C °मुत्तमम् for °मुत्तम. ५ C अन्तिके.

वन्दित्व पादौ मुनिपुंगवस्य
    प्रदक्षिणं कृत्य च गौरवेण ।
प्रसन्नचित्तो निषसाद तत्र
    *श्रवणाय धर्मं विरजमनुत्तरम् ॥ ७ ॥*
स चो जिनो आशयु ज्ञात्व धीरः
    प्रकाशयामास समाधिमेतम् ।
श्रुत्वा च सो इमु विरजं समाधिं
    लघु प्रव्रजी जिनवरशासनेऽस्मिन् ॥ ८ ॥
स प्रव्रजित्वान इमं समाधिं
    धारित्व वाचित्व पर्यापुणित्वा ।
कल्पान कोट्यः परिपूर्ण विंशतिं
    न जातु गच्छे विनिपातभूमिम् ॥ ९ ॥
स तेन चैवं कुशलेन कर्मणा
    आरागयी विंशति बुद्धकोट्यः ।
तेषां च सर्वेषु जिनान अन्तिका-
    *दिमं वरं शान्त समाधि मार्ग्यी ॥ १० ॥*
स पश्चिकाले अभु बुद्ध लोके
    सुचिन्तितार्थो सदनामधेयः ।
कृत्वा च अर्थं बहुप्राणकोटिनां
    स पश्चकालस्मि शिखीव निर्वृतः ॥ ११ ॥
तस्माद्धि य इच्छति बोधि बुद्धितुं
    सत्त्वांश्च उत्तारयितुं भवार्णवात् ।
धारेत सूत्रमिमु बुद्धवर्णितं
    न दुर्लभा मेष्यति सोऽग्रबोधिः ॥ १२ ॥
इति श्री समाधिराजे अभावसमुद्गतपरिवर्तो नामाष्टम. ॥ ८ ॥

---

१ C प्रशान्तचित्तो. २ B शासनस्मिन्. १ A C जग्मुः for गच्छे. २ C अन्तिके अयं. ४ A B T read st. 12 in the next chapter in the add. passage is App I. No (8).

## गम्भीरधर्मक्षान्तिपरिवर्तः ।

N 94

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म–तस्मात्तर्हि कुमार[1] बोधिसत्त्वेन महासत्त्वेनेमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन गम्भीरधर्मक्षान्ति कुशलेन भवितव्यम् । कथं च कुमार[2] बोधिसत्त्वो महासत्त्वो गम्भीरधर्मक्षान्तिकुशलो[3] भवति ? इह कुमार बोधिसत्त्वेन महासत्त्वेन मायोपमाः सर्वधर्मा यथाभूतं प्रज्ञातव्याः[4] । स्वप्नोपमा

5 मरीच्युपमाः प्रतिश्रुत्कोपमाः प्रतिभासोपमा उदकचन्द्रोपमा निर्मितोपमाः प्रतिबिम्बोपमा आकाशोपमाः

N 95

सर्वधर्माः प्रज्ञातव्याः । यदा च कुमार बोधिसत्त्वेन महासत्त्वेन मायोपमाः सर्वधर्माः परिज्ञाता भवन्ति, स्वप्नोपमा मरीच्युपमाः प्रतिश्रुत्कोपमाः प्रतिभासोपमा उदकचन्द्रोपमा निर्मितोपमाः प्रतिबिम्बोपमा आकाशोपमाः सर्वधर्माः[5] परिज्ञाता भवन्ति यथाभूतं, तदायं कुमार बोधिसत्त्वो महासत्त्वो गम्भीरधर्मक्षान्तिकुशल इत्युच्यते । स गम्भीरया धर्मक्षान्त्या समन्वागतो रञ्जनीयेषु

10 धर्मेषु न रज्यते, दोषणीयेषु धर्मेषु न दुष्यते[7], मोहनीयेषु धर्मेषु न मुह्यते । तत् कस्य हेतोः ? तथा हि–स तं धर्मं न समनुपश्यति, तं धर्मं[6] नोपलभते । यो रज्येत, यत्र वा रज्येत, येन वा रज्येत । यो दुष्येत, यत्र वा दुष्येत, येन वा दुष्येत । यो मुह्येत, यत्र वा मुह्येत, येन वा मुह्येत । स तं धर्मं न समनुपश्यति, तं धर्मं नोपलभते । तं धर्ममसमनुपश्यन्ननुपलभमानोऽरक्तोऽदुष्टोऽमूढोऽविपर्यस्तचित्तः समाहित इत्युच्यते । निष्प्रपञ्चः[8] । तीर्णः पारगतः ।

15 स्थलगतः[9] । क्षेमप्राप्तः । अभयप्राप्तः । शीलवान् । ज्ञानवान् । प्रज्ञावान् । पुण्यवान् ।

N 96

ऋद्धिमान् । स्मृतिमान् । मतिमान् । गतिमान् । ह्रीमान् । धृतिमान् । चारित्रवान् । धुतगुणसंलेखवान् । अनङ्गनः । निष्किंचनः । अर्हन् । क्षीणास्रवः । निष्क्लेशो वशीभूतः सुविमुक्तचित्तः सुविमुक्तप्रज्ञ आजानेयो महानागः कृतकृत्यः कृतकरणीयोऽपहृतभारोऽनुप्राप्तस्वकार्थः परिक्षीणभवसंयोजनः सम्यगाज्ञासुविमुक्तचित्तः सर्वचेतोवशिपरमपारमिताप्राप्तः श्रमणः । ब्राह्मणः स्नातकः । पारगो वेदकः श्रोत्रियः । बुद्धपुत्रः । शाक्यपुत्रः । मर्दितकण्टकः ।

20 उत्क्षिप्तपरिखः[10] । उद्धीर्णपरिखः । आक्षिप्तशल्यः । निर्जरः । भिक्षुः । अपरिवेष्टनः[11] । पुरुषः । सत्पुरुषः । उत्तमपुरुषः । महापुरुषः । पुरुषसिंहः । पुरुषनागः[12] । पुरुषाजानेयः । पुरुषधौरेयः । पुरुषशूरः । पुरुषवीरः । पुरुषपुष्पः[13] । पुरुषपद्मः । पुरुषपुण्डरीकः । पुरुषदमकः । पुरुषचन्द्रः ।

N 97

अमापुरुषः । पुरुषानुपलिप्त इत्युच्यते । अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत[14]–

यद लोकधातु न विवर्ति[15] भोति
आकाशु भोति अयु सर्वलोकः 1

[1] After कुमार A B read a passage given in App I (No 9) T does not trans late it [2] B om कुमार [3] C om °क्षान्ति [4] C प्रत्यवेक्षितव्या for प्रज्ञातव्या [5] After सर्वधर्मा, C adds यथाभूतं प्रत्यवेक्षिता भवन्ति [6] C om धर्मं [7] B दूष्यते throughout [8] The dots stand for the expression इत्युच्यते A om निष्प्रपञ्च [9] B om अभयप्राप्त [10] C उत्क्षिप्तपरिधि तीर्णपरिधि for °परिख [11] A अनवधानवेष्टन B °अपर्यवनाग° C अनवसान° [12] C पुरुषगन्त for °नाग [13] B om पुष्प° [14] AB °वानिममेव गम्भीरधर्मक्षान्त्यवतार धर्मपर्यायमुद्भावयन्निमा गाथा अभाषत [15] A विवर्ष for विवत

यथैव तं पूर्वु तथैव पश्चात्
  तथोपमान् जानथ सर्वधर्मान् ॥ १ ॥
इदं जगद् यावं च किंचि वर्तते
  अथस्तमेति सभूदापस्कन्धः ।
यथैव तं हेष्टे तथैव ऊर्ध्वे
  तथोपमान् जानथ सर्वधर्मान् ॥ २ ॥
यथान्तरीक्षस्मि न किंचिदभ्रं
  क्षणेन चो[2] दृश्यति अभ्रमण्डलम् ।
पूर्वान्तु जानीय कुतः प्रसूतं
  तथोपमान् जानथ सर्वधर्मान् ॥ ३ ॥
तथागतस्यो यथै निर्वृतस्यं
  मनसि करोन्तः प्रतिबिम्बु दृश्यते ।
यथैव तं पूर्वु तथैव पश्चात्
  तथोपमान् जानथ सर्वधर्मान् ॥ ४ ॥
यथैव फेनस्य महान्तु पिण्ड-
  मोघेनै उच्छेत्तु नरो निरीक्षते ।
निरीक्ष्य सो तत्र न सारसंदर्शी
  तथोपमान् जानथ सर्वधर्मान् ॥ ५ ॥
देवे यथा वर्षति स्थूलैर्बिन्दुके
  पृथक् पृथग् बुद्बुद संभवन्ति ।
उत्पन्नभग्ना न हि सन्ति बुद्बुदा-
  स्तथोपमान् जानथ सर्वधर्मान् ॥ ६ ॥
यथैव[6] ग्रामान्तरि लेखदर्शनात्
  क्रियाः प्रवर्तन्ति पृथक् शुभाशुभा ।
न लेखसंक्रान्ति गिराय विद्यते
  तथोपमान् जानथ सर्वधर्मान् ॥ ७ ॥
यथा नरो मीनमदेन मोहितो
  भ्रमन्ति संजानतिमां वसुंधराम् ।
न चो महीया चलितं न कम्पितं
  तथोपमान् जानथ सर्वधर्मान् ॥ ८ ॥

---

१ A यावत; B यावदन्त for याव च. २ B चोद्दस्यन्ति for चो दृश्यति. ३ A B परिनिर्वृतस्य for यथ नि°. ४ A जाल्पेन उच्छद्धेतु for ओघेने उच्छेतु. ५ AB °बिन्दुके for °बिन्दुके. ६ C यथापि for यथैव. ७ C प्रकुर्वन्ति for प्रवर्तन्ति ८ A B पानमदेन.

आदर्शपृष्ठे तथ तैलपात्रे
निरीक्षते नारि मुख स्वलंकृतम् ।
सा तत्र राग जनयित्व बाला
प्रधाविता काम गवेषमाणा ॥ ९ ॥

5 मुखस्य सक्रान्ति यदा न विद्यते
बिम्बे मुखं नैव कदाचि लभ्यते ।
यथा स मूढा जनयेत रागं
तथोपमान् जानथ सर्वधर्मान् ॥ १० ॥

यथैव गन्धर्वपुरं मरीचिका
10 यथैव माया सुपिन यथैव ।
N 100 स्वभावशून्या तु निमित्तभावना
तथोपमान् जानथ सर्वधर्मान् ॥ ११ ॥

यथैव चन्द्रस्य नभे विशुद्धे
ह्रदे प्रसन्ने प्रतिबिम्ब दृश्यते ।
15 शशिस्य सक्रान्ति जले न विद्यते
तल्लक्षणान् जानथ सर्वधर्मान् ॥ १२ ॥

यथा नर शैलवनान्तरे स्थितो
भणेय्य गायेय्य हसेय्य रोदये ।
प्रतिश्रुत्का श्रूयति नो च दृश्यते
20 तथोपमान् जानथ सर्वधर्मान् ॥ १३ ॥

गीते च वाद्ये च तथैव रोदिते
प्रतिश्रुत्का जायति त प्रतीत्य ।
गिराय घोषो न कदाचि विद्यते
तथोपमान् जानथ सर्वधर्मान् ॥ १४ ॥

25 यथैव कामान् सुपिनन्त सेविय
प्रतिबुद्धसत्त्व पुरुषो न पश्यति ।
स बाल कामेष्वतिकामलोभी
तथोपमान् जानथ सर्वधर्मान् ॥ १५ ॥

N 101 रूपाणि यथा निर्मिणि मायकारो
30 हस्तीरथानश्वरथान् विचित्रान् ।

---

१ C नारि अलङ्कृतं मुखम्  २ A बाल प्रधावित for बाल प्रधाविता  ३ C विशुद्धे for प्रसन्ने.
४ C तल्लक्षण  ५ A B प्रतिबुद्धवन्त for बुद्धसत्त्व  ६ B कामरति कामलोभी for कामेष्वतिकामलोभी
७ B रूपाण्यथो for रूपाणि यथा

न चात्र कश्चिद् रथ तत्र दृश्यते
तथोपमान् जानथ सर्वधर्मान् ॥ १६ ॥

यथा कुमारी सुपिनान्तरस्मिन्
सो पुत्र जातं च मृतं च पश्यति ।
जातेऽतितुष्टा मृते दौर्मनःस्थिता
तथोपमान् जानथ सर्वधर्मान् ॥ १७ ॥

यथा मृतां मातरमात्मजं वा
स्वप्ने तु वै रोदिति उच्चशब्दम् ।
न तस्य माता म्रियते न पुत्र-
स्तथोपमान् जानथ सर्वधर्मान् ॥ १८ ॥

यथैव रात्रौ जल चन्द्र दृश्यते
अच्छस्मि वारिस्मि अनाविलस्मि ।
अग्राह्य तुच्छो जल चन्द्रशून्य
तथोपमान् जानथ सर्वधर्मान् ॥ १९ ॥

यथैव ग्रीष्माण मध्याह्नकाले
तृषाभितप्तः पुरुषो व्रजेत ।
मरीचिकां पश्यति तोयराशिं
तथोपमान् जानथ सर्वधर्मान् ॥ २० ॥

मरीचिकायामुदकं न विद्यते
स मूढ सत्त्वः पिबितुं तदिच्छति ।
अभूतवारिं पिबितुं न शक्यते
तथोपमान् जानथ सर्वधर्मान् ॥ २१ ॥

यथैव आर्द्रं कदलीय स्कन्धं
सारार्थिकः पुरुषु विपाटयेत ।
बहिर्वा अध्यात्म न सारमस्ति
तथोपमान् जानथ सर्वधर्मान् ॥ २२ ॥

न चक्षुः प्रमाणं न श्रोत्रं घ्राणं
न जिह्व प्रमाणं न कायचित्तम् ।
प्रमाण यद्येत भवेयुरिन्द्रिया
कस्यार्यमार्गेण भवेत कार्यम् ॥ २३ ॥

१ B स्वपुत्र for सो पुत्र. २ B उच्चशब्दा. ३ C यथापि for यथैव. ४ B C शक्य for शक्यते.
१ C चक्षु for श्रोत्र.

5 10 15 N 102 20 25 30

आदर्शपृष्ठे तथ तैलपात्रे
निरीक्षते नारि[1] मुखं स्वलंकृतम् ।
सा तत्र रागं जनयित्व बाला[2]
प्रधाविता काम गवेषमाणा ॥ ९ ॥
मुखस्य संक्रान्ति यदा न विद्यते
बिम्बे मुखं नैव कदाचि लभ्यते ।
यथा स मूढा जनयेत रागं
तथोपमान् जानथ सर्वधर्मान् ॥ १० ॥
यथैव गन्धर्वपुरं मरीचिका
यथैव माया सुपिनं यथैव ।
N 100
स्वभावशून्या तु निमित्तभावना
तथोपमान् जानथ सर्वधर्मान् ॥ ११ ॥
यथैव चन्द्रस्य नभे विशुद्धे
ह्रदे प्रसन्ने[3] प्रतिबिम्ब दृश्यते ।
शशिस्य संक्रान्ति जले न विद्यते
तल्लक्षणान्[4] जानथ सर्वधर्मान् ॥ १२ ॥
यथा नरः शैलवनान्तरे स्थितो
भणेय्य गायेय्य हसेय्य रोदये ।
प्रतिश्रुत्का श्रूयति नो च दृश्यते
तथोपमान् जानथ सर्वधर्मान् ॥ १३ ॥
गीते च वाद्ये च तथैव रोदिते
प्रतिश्रुत्का जायति तं प्रतीत्य ।
गिराय घोषो न कदाचि विद्यते
तथोपमान् जानथ सर्वधर्मान् ॥ १४ ॥
यथैव कामान् सुपिनन्त सेविय
प्रतिबुद्धसत्त्वः[5] पुरुषो न पश्यति ।
स बाल कामेष्वतिकामलोभी[6]
तथोपमान् जानथ सर्वधर्मान् ॥ १५ ॥
N 101
रूपाणि[7] यथा निर्मिणि मायकारो
हस्तीरथानश्वरथान् विचित्रान् ।

---

१ C नारि अलंकृतं मुखम्. २ A बाल· प्रधावित. for बाला प्रधाविता. ३ C विशुद्धे for प्रसन्ने. ४ C तल्लक्षणं. ५ A B प्रतिबुद्धवन्तः for °बुद्धसत्त्व. ६ B कामरति कामलोभी for कामेष्वतिकामलोभी. ७ B रूपाण्यथो for रूपान् यथा.

न चात्र कश्चिद् रथ तत्र दृश्यते
तथोपमान् जानथ सर्वधर्मान् ॥ १६ ॥

यथा कुमारी सुपिनान्तरस्मिन्
सो पुत्र जातं च मृतं च पश्यति । 5
जातेऽतितुष्टा मृते दौर्मनःस्थिता
तथोपमान् जानथ सर्वधर्मान् ॥ १७ ॥

यथा मृतां मातरमात्मजं या
स्वप्ने तु वै रोदिति उच्चैशब्दम् ।
न तस्य माता म्रियते न पुत्र- 10
स्तथोपमान् जानथ सर्वधर्मान् ॥ १८ ॥

यथैव रात्रौ जल चन्द्र दृश्यते
अच्छस्मि वारिस्मि अनाविलस्मि ।
अग्राह्य तुच्छो जल चन्द्रशून्य
तथोपमान् जानथ सर्वधर्मान् ॥ १९ ॥ 15

यथैव ग्रीष्माण मध्याह्नकाले
तृषाभितप्तः पुरुषो व्रजेत ।
मरीचिकां पश्यति तोयराशिं
तथोपमान् जानथ सर्वधर्मान् ॥ २० ॥ N 102

मरीचिकायामुदकं न विद्यते 20
स मूढ सत्त्वः पिबितुं तदिच्छति ।
अभूतवारिं पिबितुं न शक्यते
तथोपमान् जानथ सर्वधर्मान् ॥ २१ ॥

यथैव आर्द्रं कदलीय स्कन्धं
सारार्थिकः पुरुषु विपाटयेत । 25
बहिर्वा अध्यात्म न सारमस्ति
तथोपमान् जानथ सर्वधर्मान् ॥ २२ ॥

न चक्षुः प्रमाणं न श्रोत्रं घ्राणं
न जिह्व प्रमाणं न कायचित्तम् ।
प्रमाण यद्येत भवेयुरिन्द्रिया 30
कस्यार्यमार्गेण भवेत कार्यम् ॥ २३ ॥

---

१ B स्वपुत्र for सो पुत्र. २ B उच्चशब्दा. ३ C यथापि for यथैव. ४ B C शक्य for शक्यते.
५ C चक्षु for श्रोत्र.

एवं नरः शीलविहीन मूढः
　　पलायितुमिच्छति संस्कृतातः ।
स शीलहीनो न प्रभोति गच्छितुं
　　जराय व्याध्या मरणेन हन्यते ॥ ३९ ॥
यथैव चौराण बहू सहस्रो
　　नानामुखेहि प्रकरोति पापम् ।
एवं किलेशा विविधैर्मुखेभि-
　　र्यथैव चौरो हनि शुक्लपाक्षम् ॥ ४० ॥
येन सुनिध्याप्तु निरात्मस्कन्धा
　　आकुष्टु परिभाष्टु न शङ्कु भोति ।
स क्लेशमारस्य वशं न गच्छते
　　यः शून्यतां जानति सो न कुप्यते ॥ ४१ ॥
बहू जनो भाषति स्कन्धशून्यता
　　न च प्रजानाति यथा निरात्मकाः ।
ते अप्रजानन्त परेहि चोदिताः
　　क्रोधाभिभूता परुषं वदन्ति ॥ ४२ ॥
यथा नरो आतुरु कायदुःखितो
　　बहूहि वर्षेहि न जातु मुच्यते ।
स दीर्घग्लान्यदुखेन पीडित
　　पर्येषते वैद्यु चिकित्सनार्थिकः ॥ ४३ ॥
पुनः पुनस्तेन गवेषता च
　　आसादितो वैद्य विदू विचक्षणः ।
कारुण्यता तेन उपस्थपेत्वा
　　प्रयुक्तु भैषज्यमिद निषेव्यताम् ॥ ४४ ॥
गृहीत्व भैषज्य पृथुं वरा वरा
　　न सेवते आतुरु येन मुच्यते ।
न वैद्यदोषो न च भेषजाना
　　तस्यैव दोषो भवि आतुरस्य ॥ ४५ ॥
एवमिह शासनि प्रव्रजित्वा
　　पर्यापुणित्वा बल ध्यान इन्द्रियान् ।
न भावनायामभियुक्त भोन्ति
　　अयुक्तयोगीन कुतोऽस्ति निर्वृति ॥ ४६ ॥

---

१ A बहूसहस्रा　२ A शुक्लपक्षम्　३ A परिदृष्टु for °भाष्टु　४ A सक्लेश°; C अक्लेश° for स क्लेश°.
५ A B प्रजानन्ति for प्रजानाति　६ B उपस्थपित्वा.　७ B पृथु वराणो for पृथु वरा वरा.　८ B इन्द्रिया.
९ A B निर्वृत

स्वभावशून्याः सद सर्वधर्मा
वस्तुं विभावेन्ति जिनान पुत्राः ।
सर्वेण सर्वं भव सर्वशून्यं
प्रादेशिकी शून्यता तीर्थिकानाम् ॥ ४७ ॥

न विज्ञ बालेहि करोन्ति विग्रहं
सत्कृत्य बालान् परिवर्जयन्ति ।
ममान्तिके एन्ति प्रदुष्टचित्ता
न बालधर्मेहि करोति संस्तवम् ॥ ४८ ॥

न विज्ञ बालान करोति सेवनां
विदित्व बालान स्वभावसंततिम् ।
कियच्चिरं बालु सुसेवितोऽपि
पुनोऽपि[1] ते भोन्ति अमित्रसंनिभाः ॥ ४९ ॥

न विज्ञ बालेष्विह विश्वसन्ति
विज्ञाय बालान स्वभावधर्मताम् ।
स्वभावभिन्न प्रकृतीय बाला
न चास्ति मित्रं हि पृथग्जनानाम् ॥ ५० ॥

सद्धर्मिकेनो[2] वचनेन उक्ताः
क्रोधं च दोषं[3] च अप्रत्ययं च ।
प्राविष्करोन्ति इमि बालधर्मान्
इममर्थु विज्ञाय न विश्वसन्ति ॥ ५१ ॥

बाला हि बालेहि समं समेन्ति
यथा अमेध्येन अमेध्यु सार्धम् ।
विज्ञाः पुनर्विज्ञजनेन सार्धं
समेन्ति सर्पिर्यथ सर्पिमण्डैः[4] ॥ ५२ ॥

संसारदोषाण[5] अप्रत्यवेक्षणात्
कर्माण विपाकस्मनोतरन्तः[6] ।
बुद्धान चो वाक्यमश्रद्दधाना-
स्ते श्वेत्यमेधसि चरन्ति बालाः ॥ ५३ ॥

सुदुर्लभं लभ्य मनुष्यलाभं
न शिल्पस्थानेषु भवन्ति कोविदाः ।

---

१ C पुरतो हि ते for पुनोऽपि ते. २ B सद्धर्मि तेनो वचनेन उक्तः for the line. ३ A रोषं or दोषं. ४ B सर्पिकुण्डे. ५ B संसारदोषाण for संसार°. ६ A विपाकुमनोचरन्त.

N 110

दरिद्रभूतान धन न विद्यते
अजीवमानास्तद[1] प्रव्रजन्ति ॥ ५४ ॥

ते प्रव्रजित्वा इह बुद्धशासने
अध्येषिता[2] भोन्तिह पात्रचीवरे ।
ते पापमित्रेहि[3] परिगृहीता-
स्ता नाचरन्ते सुगतान शिक्षाम् ॥ ५५ ॥

ते आत्मन शीलमपश्यमाना
चित्त[4]व्यवस्था न लभन्ति बाला ।
रात्रिंदिव भोन्ति अयुक्तयोगा
न ते जुगुप्सन्ति च पापकर्मत[5] ॥ ५६ ॥

5

शठेन[6] चित्तेन असंयताना
न किंचि वाचाय सु[7]जल्पितव्यम् ।
सदा गवेषन्ति परस्य दोषान्[8]
अपराद्धु किं केन मा चोदयिष्ये ॥ ५७ ॥

10

आहारि अध्युषित भोन्ति बाला
न चास्ति मात्रज्ञ[9]तु भोजनस्मिन् ।
बुद्धस्य पुण्येहि लभित्व भोजन
तस्यैव बाला अकृतज्ञ भोन्ति ॥ ५८ ॥

15

N 111

ते[10] भोजन स्वादुरस प्रणीत
लब्ध्वा[11] च भुञ्जन्ति अयुक्तयोगा ।
तेषा स आहारु वधाय भोति
यथ हस्तिपोतान बिसा[12] अधौतका ॥ ५९ ॥

20

किं चापि विद्वान् मतिमान् विचक्षणो
भुञ्जीत आहारु शुचि[13] प्रणीतम् ।
न चैव अध्युषित तत्र भोति
अगृद्धु[14] सो भुञ्जति युक्तयोगी[15] ॥ ६० ॥

25

किं चापि विद्वान् मतिमान् विचक्षणो
आभासते वाल्गु कुतो हि स्वागतम् ।

---

१ C यद for तद २ B अध्योषिता ३ A पापमित्रेण ४ C चित्तस्य व्यवस्थ ५ A पापकर्म C पापकर्मा- ६ C शठेन चित्तेन सुसंयमानो for the line. ७ A न जल्पि°, C वाजल्पितव्यम् for सुजल्पितव्यम् ८ B दोषं ९ B मात्रज्ञ C मात्राज्ञ for मात्रज्ञतु १० B न भोजनस्वादरसंप्रणीतो for the line ११ A लब्ध्वा १२ B बिसा C बिशा for बिसा १३ B शुचिप्रणीतम् for शुचि प्रणीतम् १४ A अगृद्धु B अगृद्ध for अगृद्धु १५ C तत्र योगी for युक्तयोगी

तथ संगृहीत्वा प्रियवचताय
  कारुण्यतां तत्र उपस्थपेति ॥ ६१ ॥
यो भोति बाल्यन हितानुकम्पी
  तस्यैव बाला व्यसनेन तुष्टाः।
एतेन दोषेण जहित्व बालान्
  मृगोऽवदेयको विहरेदरण्ये ॥ ६२ ॥
इम ईदृशान् दोष विदित्व पण्डितो
  न जातु बालेहि करोति संगतिम्।
विहीनप्रज्ञानुपसेवतो मे
  स्वर्गात्तु हानिः कुत बोधि लप्स्ये ॥ ६३ ॥ 10
मैत्रीविहारी च भवन्ति पण्डिताः
  करुणाविहारी मुदिताविहारी।
उपेक्षकाः सर्वभवेषु नित्यं
  समाधि भावेत्व स्पृशन्ति बोधिम् ॥ ६४ ॥
ते बोधि बुद्धित्व शिवामशोकां 15
  विदित्व सत्वान् जरव्याधिपीडितान्।
कारुण्यतां तत्र उपस्थपेत्वा
  कथां कथेन्ति परमार्थयुक्ताम् ॥ ६५ ॥
ये तां विजानन्ति जिनान धर्मता-
  मनाभिलप्यं सुगतान सत्यम्। 20
ते धर्म श्रुत्वा इम एवरूपां
  लभन्ति क्षान्ति अरियां निरामिषाम् ॥ ६६ ॥

इति श्रीसमाधिराजे गम्भीरधर्मक्षान्तिपरिवर्तो नाम नवमः ॥ ९ ॥

N 112

१ B मृगोव एको २ A प्रमोदगान्, ३ AB संस्तवम् for संगतिम्. ४ C निहीन॰ for विहीन॰.
५ B लप्स्यते

## पुरप्रवेशपरिवर्तः ।

N 113 तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मार्त्तर्हि कुमार प्रतिपत्तिसारो भविष्यामीत्येवं त्वया कुमार सदा शिक्षितव्यम् । तत् कस्य हेतोः ? प्रतिपत्तिसारस्य हि कुमार बोधिसत्त्वस्य महासत्त्वस्य न दुर्लभा भवत्यनुत्तरा सम्यक्संबोधिः, किं[1] पुनरयं समाधिः । अथ खलु चन्द्रप्रभः कुमारभूत उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां

5 प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत् — आश्चर्यं[2] भगवन् यावत् सुभाषिता चेयं भगवता बोधिसत्त्वानां महासत्त्वानामववादानुशासनी सर्वबोधिसत्त्वशिक्षा देशिता स्वाख्याता सुप्रज्ञप्ता । सर्वतथागतगोचरोऽयं भगवन् यत्र अभूमि सर्वश्रावकप्रत्येकबुद्धानां कः पुनर्वादोऽन्यतीर्थिकानाम् ? प्रतिपत्तिसाराश्च वय भगवन् भविष्यामः अनपेक्षाः कायजीविते[3] च भूत्वा तथागतस्यानु[4] शिक्षिष्यामहे । तत् कस्य हेतोः ? शिक्षितुकामाश्च वयं भगवंस्तथागतस्य,

10 अभिसंबोद्धुकामा वयं भगवन्[5]ननुत्तरां सम्यक्संबोधिम् । अर्थिका वयं भगवन् अनुत्तरायाः[6] सम्यक्संबोधेः । निर्ध्वंसयितुकामाश्च वयं भगवन् मारं पापीयासम् । मोचयितुकामा वयं भगवन् सर्वसत्त्वान्[7] सर्वभयेभ्यः सर्वदुःखेभ्यः[8] । अधिवासयतु मे भगवान् श्वस्तने मम गृहे भक्तं भोक्तुं सार्धं बोधिसत्त्वगणेन

N 115 सार्धं भिक्षुसंघेन चानुकम्पामुपादाय । अधिवासयति स्म भगवांश्चन्द्रप्रभस्य कुमारभूतस्य तूष्णींभावेन श्वस्तने[10] गृहे भक्तं भोक्तुं सार्धं बोधिसत्त्वगणेन भिक्षुसंघेन[11] चानुकम्पामुपादाय[9] ।

15 अथ खलु चन्द्रप्रभः कुमारभूतो भगवतस्तूष्णींभावेनाधिवासनं[12] विदित्वा उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा भगवतः पादौ शिरसाभिवन्द्य भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवतोऽन्तिकात् प्राक्रामत्[13] ॥

N 116 अथ खलु चन्द्रप्रभः कुमारभूतो[14] येन राजगृहं महानगरं येन[15] च स्वकं निवेशनं

N 117 तेनोपसमक्रामत् । उपसंक्रम्य चन्द्रप्रभो[16] स्वगृहं प्राविशत् । प्रविश्य च तामेव रात्रिं प्रभूतं प्रणीतं

N 118 खादनीयं भोजनीयं स्वादनीयमभिसंस्कारयति स्म । शतरसं च भोजनं संपाद्य[17] तस्या एव रात्र्या

20 अत्ययेन राजगृहं महानगरं सुसिक्तं सुसंमृष्टं मुक्तकुसुमाभिकीर्णं[18] गन्धघटिकानिर्धूपितमुच्छ्रित-

---

१ A रिमद्र पुन ; B रिमन पुन for किं पुन. २ After भगवता, A adds अर्हता सम्यक्संबुद्धेन प्रतिपत्तिसमायतार सुदेशित सुप्रज्ञप्त, while B adds तथागतेनार्हता. ३ B कायजीविता for °जीविते. ४ B तथागतेभ्य for तथागतस्य ५ A C om भगवन् ६ A अनुत्तराया सम्यक्संबोधौ for अनुत्तराया सम्यक्संबोधे. ७ After °सत्त्वान् B adds सर्वभयेभ्य. ८ After °दुःखेभ्य, AB read a passage given in App I (No 10)

९ After उपादाय, A B add तत्रेदमुच्यते—

अभियाचमि सपुरनरेन्द्रं शुचि मम मन्दिर भुञ्जि भक्तम् ।

अधिवासयतु सुगतनाथो मम्मनुकम्पयमान मुनीन्द्रो ॥

१० B श्वस्तनया, C श्वस्तनया for श्वस्तने ११ After °संघेन, B adds सार्धं बोधिसत्त्वसंघेन.

१२ A C अधिवासनं ... १३ After ... A B read a passage ...

१४ After ...

B adds ...

देन, A B ...

(B सर्वेन्द्रियै). १७ A B संपाद्य for संपाद्य १८ After °भिकीर्णं, AB read a passage given in App I (No 12)

च्छत्रध्वजपताकं धूपनधूपितं वितानवितितमवसक्तपट्टदामकलापं सरथ्यान्तरापणमध्यगतपाषाण- N 119
शर्करकठल्लं विचित्रपुष्पाभिकीर्णं चन्दनचूर्णाभिकीर्णं गवाक्षतोरणनिर्यूहपञ्जरजालार्धचन्द्रसमलंकृतं
चन्दनानुलिप्तमकार्षीत् । सर्वावन्तं नगरमुत्पलकुमुदपद्मपुण्डरीकाभ्यवकीर्णमकार्षीत् । स्वं च गृहं
सर्वालंकारव्यूहितमकार्षीत् । अथ खलु चन्द्रप्रभः कुमारभूत इमानेवंरूपान् नगरव्यूहान् गृहव्यूहान् N 120
भोजनव्यूहान् समलंकृत्य राजगृहान्महानगरान्निष्क्रम्य येन गृध्रकूटपर्वतो येन भगवांस्तेनोपसमक्रामत् । 5 N 121
उपसंक्रम्य भगवन्तं त्रिः प्रदक्षिणीकृत्य एकान्तेऽस्थात् । एकान्ते स्थितः चन्द्रप्रभः कुमारभूतो
भगवतः कालमारोचयामास—कालो भगवन्, कालः सुगत, सिद्धं भक्तं यस्येदानीं कालं
मन्यसे । अथ खलु भगवान् उत्थायासनात् कल्यमेव निवास्य पात्रचीवरमादाय महता भिक्षुसंघेन N 122
सार्धं परिपूर्णेन भिक्षुशतसहस्रेण संबहुलैश्च बोधिसत्त्वैर्महासत्त्वैः परिवृतः पुरस्कृतोऽनेकैश्च
देवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरगमनुष्यामनुष्यशतसहस्रैः पूज्यमानोऽभिष्टूयमानो महता 10 N 123
बुद्धानुभावेन महता बुद्धप्रातिहार्येण महता बुद्धेर्यापथेन रश्मिकोटिनियुतशतसहस्रैर्निश्चरद्भिर्नाना-
तूर्यशतसहस्रैः पुष्पगन्धमाल्यविलेपनचूर्णचीवरैः प्रवर्षद्भिर्येन राजगृहं महानगरं तेनोपसंक्रामति
स्म । चन्द्रप्रभस्य कुमारभूतस्य निवेशने प्रक्षिप्तश्च भगवता दक्षिणश्चक्ररत्नसमलंकृतः अपरिमित-
कुशलसंचितपादरत्न इन्द्रकीले, अथ तावदेव तस्मिन् महानगरे अनेकानि आश्चर्याद्भुतानि
प्रातिहार्याणि संदृश्यन्ते स्म । इयमत्र धर्मता । तत्रेदमुच्यते— 15 N 124

पुरवर[१] प्रविशन्ति[२] नायकस्मिन्[३]
चरणवर स्थपितश्च इन्द्रकीले ।
चलि[४] वसुमती शिरीय तस्य
प्रमुदित भोन्ति पुरोत्तमस्मि सत्त्वाः ॥ १ ॥

ये नर क्षुधिताः पिपासिता वा 20 N 125
न भवति तेष जिघत्स तस्मि काले ।
अपगत भवती क्षुधा पिपासा
यद जिनु निक्षिपतीन्द्रकीलि पादम् ॥ २ ॥

तथ पुन नर ये भवन्ति अन्धाः N 126
श्रोत्रविहीन अनाथ अल्पपुण्याः । 25
सर्वि प्रतिलभन्ति चक्षु श्रोत्रं
यद जिनु निक्षिपतीन्द्रकीलि पादम् ॥ ३ ॥

यमविषये ये केचि भोन्ति प्रेताः
सुदुःखित खेटसिंघाणकभोजनाशाः ।
सर्वि सुखित भोन्ति आत्मतृप्ता 30
यद जिनु निक्षिपतीन्द्रकीलि[५] पादम् ॥ ४ ॥

---

१ B पुरवरु. २ A C प्रविशन्तु. ३ A नायकेन; B नायकेनो. ४ B चलित. ५ A मुनिपति for निक्षिपति.

शैलशिखरशृङ्गपर्वताश्च
तथ वरपादपशालकर्णिकाराः ।
सर्वि अभिनमन्ति येन बुद्धो
यद जिनु निक्षिपतीन्द्रकीलि पादम् ॥ ५ ॥

5 सनगरनिगमा ससागरान्ता
प्रचलि वसुंधरि षड्विकार सर्वा ।
न भवति विहेठ कस्यपि चेह
यद जिनु निक्षिपतीन्द्रकीलि पादम् ॥ ६ ॥

N 127 मरुमनुजकुम्भाण्डराक्षसाश्च
10 नमस्यित तुष्ट उदग्रचित्ताः ।
छत्र धरिय च लोकनायकस्य
परमप्रीणित जनेत्व बोधिछन्दम् ॥ ७ ॥

श्रूयति च मनोज्ञ वाद्यशब्द-
स्तूर्यसहस्र अघट्टिता रणन्ति ।
15 प्रमुदितास्तद भोन्ति सर्वसत्वा
यद जिनु निक्षिपतीन्द्रकीलि पादम् ॥ ८ ॥

वृक्षशतसहस्र ओनमन्ति
सर्वि प्रपुष्पित भोन्ति तस्मि काले ।
देवशतसहस्र अन्तरीक्षे
20 पूज करोन्ति अमानुषी जिनस्य ॥ ९ ॥

ऋषभगण तदा नदन्ति हृष्टा
हयद्विरदाधिपती प्रवृद्धकायाः ।
मृगपतयो नदन्ति सिंहनादं
यद जिनु निक्षिपतीन्द्रकीलि पादम् ॥ १० ॥

25 महीपतय ये केचि भूमिपाला
दिशिविदिशासु च आगता भवन्ति ।
N 128 धरणितलि पतन्ति हृष्टचित्ता
दृष्ट्व जिनस्य शिरीमिममेवरूपाम् ॥ ११ ॥

अन्ये अभिष्टुवन्ति लोकनाथम्
30 अपरि क्षिपन्ति जिनस्य पुष्पवृष्टिम् ।

---

१ B °विधारि सर्वा.. २ C स्तुत° for मरु.° ३ A पुष्ट for तुष्ट. ४ B °पणीत; B °परीत for °प्रीणित. ५ A दशादिशि विदिशासु for दिशिविदिशासु.

अपरि दशनखाञ्जलिं करित्वा
　　अहो जिनु कारुणिको भणन्ति[१] वाचम् ॥ १२ ॥
केचि वर क्षिपन्ति मुक्तहारान्
　　बहुविध आभरणान् जनेत्व प्रीतिम् ।
चीवर रतनान् क्षिपन्ति अन्ये
　　अतुलिय अग्रु जनित्व बोधिचित्तम्[२] ॥ १३ ॥
केचि वर क्षिपन्ति हेमजालं[३]
　　अपरि पुनर्मुखपुल्लकं क्षिपन्ति[४] ।
केचि वर क्षिपन्ति हेमनिष्कां-
　　स्तथ अपरे परिहारकान् क्षिपन्ति ॥ १४ ॥
स्फटिकवर क्षिपन्ति केचि तत्र
　　अपरि केयूर क्षिपन्ति रत्नचित्रान् ।
अम्बर कुसुमान् क्षिपन्ति अन्ये
　　चित्त जनेत्व ‘ सियां वयं पि बुद्धाः[५] ’ ॥ १५ ॥
अपरि नरः क्षिपन्ति हेमचित्रां-[६]
　　स्तथ मणिसूत्रहारान्[७] प्रसन्नचित्ताः ।
केचि च रतनजालकं[८] क्षिपन्ति
　　द्वारि यदा स्थितु भोति लोकनाथः ॥ १६ ॥
परमदुःखित ये भवन्ति सत्त्वा
　　बहुविधुपद्रुतु शोकशल्य प्राप्ताः ।
सर्वि सुखसमर्पिता भवन्ति
　　पुरुषवरस्य शिरीय नायकस्य ॥ १७ ॥
परभृतशुकसारिकामयूरा-
　　स्तथपि च सारसचाषहंसक्रौञ्चाः ।
सर्वि द्विजगणा नभे स्थिहित्वा
　　परममनोज्ञरुतानि व्याहरन्ति ॥ १८ ॥
प्रमुदित तद भोन्ति पक्षिसंघा
　　मधुरमनोज्ञरुतं प्रमुञ्चमानाः ।
रागु तथ समेन्ति[९] दोषमोहं
　　ये च शृणन्ति मनोज्ञ पक्षिशब्दान् ॥ १९ ॥

---

१ B हरन्ति; C महन्ति for भणन्ति. २ C बोधिसत्त्वम्. ३ C हेमसाल्म. ४ In C, portion from °पन्ति upto 49st. *ab* is missing on damaged folio. ५ B बिबुधा for पि बुद्धा.. ६ B हेमसूत्रां. ७ B मणिचूडधरान्. ८ B °जालिकां for °जालकं. ९ A गमेन्ति for समेन्ति.

श्रुणिय रज्ञनीय सत्त्वकोट्यः
सर्वि च लभन्ति क्षान्तिमानुलोमाम्।
N 130 तांश्च सुगत व्याकरोति सर्वान्
भविष्यथ यूय जिना अनागताश्च ॥ २ ॥
5 न भवति किलेशु तस्मि काले
सर्वि सगौरव भोन्ति धर्मराजे।
अपगतभयदोषमोहजालाः
प्रणिपतिताः सुगतमभिष्टुवन्तः ॥ २१ ॥
पेश्यिय तद् रूप नायकस्य
10 स्पृह जनयन्ति वरस्मि बुद्धज्ञाने।
यद् वय लभे ज्ञानमेवरूपम्
आशयु ज्ञात्व जिनोऽस्य व्याकरोति ॥ २२ ॥
रश्मि शतसहस्र निश्चरन्ति
एकैकतः सुगतस्य रोमकूपात्।
15 तदुत्तरि यथ गङ्गवालिका वा
न पि च निमित्तु गृहीतु शक्यु तासाम् ॥ २३ ॥
सूर्यप्रभ न भान्ति तस्मि काले
न पि मणि नाग्नि न सर्वदेवतानाम्।
N 131 सर्वि प्रभ न भान्ति तस्मि काले
20 यद् प्रविशन्त पुरं विभाति बुद्धः ॥ २४ ॥
पद्मशतसहस्र प्रादुर्भूता
धरणितु कोटिसहस्रपत्र शुद्धाः।
यत्र दशबलः स्थपेति पादं
मार्गे गतः सुगतो महागणेन ॥ २५ ॥
25 अशुचि केलिमला न भोन्ति तस्मि काले
नगरवरं प्रविशन्ति नायकस्मिन्।
नगरु सुरभि सर्वि धूपनेन
गन्ध मनोज्ञ प्रवायते समन्तात् ॥ २६ ॥
वीथि नगरि तदे भोति सर्वा
30 अपगतलोष्टकठल्ल सिक्त गन्धैः।

१ B अनागतेश्च २ B सर्विप गौरव भोन्ति धर्मराजा for the line. ३ T om. अपगत ..... ष्टुवन्त.. ४ B प्रविशतितु सुगतस्य निश्चरन्तः for the line. ५ B एकैकता for एकैकत. ६ A भोन्ति for भान्ति. ७ B मार्गगतः. ८ B om. महा°. ९ B करमल न भान्ति for कलिमला न भोन्ति. १० B नगरवने for °वरं. ११ B शुद्ध भोन्ति for तद भोति.

पुष्प दशबलस्य एवरूपा
  विविध विकीर्णु भवन्ति मुक्तपुष्पाः ॥ २७ ॥
यक्ष शतसहस्र रौद्रचित्ताः
  कनकनिभं द्विपदेन्दु दृष्ट्व बुद्धम् ।
जनयि विपुलु नायकस्मि प्रेमं  5
  शरणे[1]मुपेति च बुद्धधर्मसंघान् ॥ २८ ॥
ये च देवशतसहस्र कोटियो वा  N 132
  उपगत सर्वि नरेन्द्रदर्शनाय ।
वर्षति सुगतस्य पुष्पवर्षं
  गगनतले च स्थिहन्ति मुक्तपुष्पा. ॥ २९ ॥  10
ये मनुज क्षिपी जिनस्य पुष्पं
  गगनतले भवतीति पुष्पछत्रम् ।
ये[2] पुन कुसुमान् क्षिपन्ति देवा
  धरणितले स्तृ[3]त भोन्ति दिव्यपुष्पाः ॥ ३० ॥
न[4] भवति कदाचि दृष्ट्व तृप्ती  15
  देवमनुष्यकुम्भाण्डराक्षसानाम् ।
यद दशबलु दृष्ट्व लोकनाथं
  प्रमुदित भोन्ति उदग्रकल्यचित्ताः ॥ ३१ ॥
न मनसि तद भोन्ति दिव्यपुष्पा  N 133
  न च पुन विस्मयु जायते च तत्र ।  20
यद पुरुषवरस्य कायु दृष्ट्वा
  तुष्ट भवन्ति उदग्र सर्वसत्त्वा ॥ ३२ ॥
ब्रह्म दशबल[5]स्य दक्षिणेनो
  तथ पुन वामतु शक्र देवराजा ।
गगनतलगता अनल्प देवकोट्य  25
  पुरुषवरस्य जनेन्ति चित्रिकारम् ॥ ३३ ॥
परिवृत जिनु देवदानवेहि
  मरुमनुजान शिरिं प्रसित्व सर्वाम् ।
धरणि क्रमतलेहि चित्रयन्तो
  प्रविशि पुरं भगवान्निमन्त्रणाय ॥ ३४ ॥  30

[1] B शरणमुपन्ति for °मुपेति [2] B कन् for ये. [3] A B स्थित for स्तृत. [4] B नच for न
[5] B °बल दृष्ट्व लोकनाथो for °बलस्य दक्षिणेनो

कुसुमित अनुव्यञ्जनेहि काये[1]
यथ गगनं परिपूर्ण तारकेहि ।
(N 134) प्रतपति स्थितु राजमार्गि बुद्ध-
श्चन्द्रो नभःस्थ यथैव पूर्णमास्याम् ॥ ३५ ॥
मणिरतनु यथा विशुद्धु श्रेष्ठं[2]
व्यपगतदोषमलं प्रभासमानम् ।
दिशि विदिशि प्रमुञ्चि आभ शुद्धां
तथ जिनु भासति सर्वलोकधातुम् ॥ ३६ ॥
परिवृतु जिनु देवदानवेहि
प्रविशति राजगृहं नराण श्रेष्ठ ।
धरणि क्रमतलेहि चित्रयन्तो
प्रविशति चन्द्रप्रभस्य गेहि बुद्धः ॥ ३७ ॥
पुरवरु समलंकृतं समन्ताद्
बहु ध्वज कोटिसहस्र[3] उच्छ्रितात्र ।
गन्धवरविलिप्त सर्वभूमी
सुमनःप्रकीर्ण[4] तथैव वार्षिकारम्[5] ॥ ३८ ॥
यद सुगतु कथां कथेति नाथो
वीथिगतो मनुजान् कृपायमानः ।
(N 135) निर्मितु जिनु तत्र निर्मिणित्वा
विचरति तेषु प्रणीत बुद्धधर्मान् ॥ ३९ ॥
दर्शनियुत जिनान निर्मितान[7]
कनकनिभा अभिरूप दर्शनीया ।
परिवृतु जिनु बुद्ध[8] निर्मितेहि
विचरति शून्यत शान्त बुद्धबोधिम् ॥ ४० ॥[6]
प्राणिशतसहस्र तं शृणित्वा
प्रणिदधि चित्त[9] वराग्रबुद्धज्ञाने ।
यद वय लभि ज्ञानमेवरूपं
आशयु ज्ञात्व जिनोऽस्य व्याकरोति ॥ ४१ ॥
केचि स्पृह जनेन्ति तत्र काले
परम अचिन्तिय लब्ध[10] तेहि लाभा ।

[1] B काया for काये [2] B श्रेष्ठु for श्रेष्ठ [3] A बोधिसत्त्व for कोटिसहस्र. [4] A समनुकीर्ण for सुमन प्रकीर्ण. [5] B वाशिका च for वार्षिकारम् [6] T om st. 40 [7] A जिनस्य निर्मि; B जिनस्य निर्मितानि for जिनाना निर्मितान. [8] B तत्र for बुद्ध [9] B जिनु for चित्त [10] A तेहि लब्ध लाभान् for लब्ध तेहि लाभा

येहि जिनु निमन्त्रितो नरेन्द्रो
　न च पर्यन्त ▪ तेषु[1] दक्षिणायाः ॥ ४२ ॥
केचि पुनरुपपादयि सुचित्तं
　श्वो वय कारुणिकं निमन्त्रयामः ।
हितकरमनुकम्पकं[2] प्रजानां　5
　यस्य सुदुर्लभु दर्शनं भवेषु[3] ॥ ४३ ॥
केचि स्थित निर्यूहखोटके हि　N 136
　सुभगु विभूषितगात्र प्रेमणीयाः[4] ।
दिव्य दशबलस्य मुक्तपुष्पा-
　प्यवकिरतेऽपु जनित्व बोधिचित्तम् ॥ ४४ ॥　10
सुरुचिर वर चम्पकस्य मालां
　तथ अतिमुक्तक गन्धवार्षिकां[5] च ।
अपरि पुन क्षिपन्ति पट्टदामान्
　परम निरन्तर चित्तु संजनित्वा ॥ ४५ ॥
केचि स्थित गृहे गृहीतपुष्पाः[6]　15
　परमविभूषितकायु वीथेहि ।
पुष्प विविध गृहीत्व[7] पट्टदामान्
　प्रेक्षर्षि[8] येन जिनो महानुभावः ॥ ४६ ॥
पदुमकुमुदोत्पलान् क्षिपन्ति केचि
　अपरि क्षिपन्ति विशिष्ट हेमपुष्पान् ।　20
मणिरतन क्षिपन्ति केचि तस्मिन्
　अपरि क्षिपन्ति च चूर्ण चन्दनस्य ॥ ४७ ॥
अपरिमित भवन्ति अप्सरीया
　अतुलिय ये न च शक्यु कीर्तनाय ।
पुरवर प्रविशन्ति नायकस्मिन्　25　N 137
　बहुजनकोट्य[9] स्थिहिंसु सुदृशाने ॥ ४८ ॥
अवृह अतपाश्च दृष्टसत्याः[10]
　सुदृश सुदर्शन ये च अन्य देवाः ।
तथ[11] पुनरकनिष्ठ वीतरागा[12]
　उपगत सर्वि[13] नरेन्द्रदर्शनाय ॥ ४९ ॥　30

१ A देश for तेषु　२ B हितकर for हितकरम्　३ B भवेषु- for भवेषु.　४ A प्रेमणीयाम् for °णीयाः.　५ A गन्धवार्षिकाणाम्　६ B गृहीत्व पुष्पान् for गृहीतपुष्पा　७ A गृह्य for गृहीत्व.　८ B प्रवशितु for प्रक्षर्षि.　९ B °कोटि for °कोट्य.　१० B सद्दश　११ C अथ for तथ.　१२ After वीतरागा. C adds : मृदुकलहंसाश्च हंससत्या मन ... यथा प्रभासमानो.　१३ C तत्र for सर्वि.

तथ शुभमरुताश्च अप्रमेया
अपरिमित शुभा उदग्रचित्ताः ।
शुभकृत्स्न नियुताश्च अप्रमेया
उपगत पश्यितु नायकं महर्षिम् ॥ ५० ॥
5 अपरिमितु तथाप्रमाण-आभा
तथ पुन देव परीत्त आभ ये च ।
बहु नियुत आभस्वराण तस्मिन्
उपगत पश्यितु तेऽपि लोकनाथम् ॥ ५१ ॥
बहव शतसहस्र पारिषद्या-
10 स्तथ पुन ब्रह्मपुरोहिताः प्रसन्नाः ।
N 138 बहुशत पुन ब्रह्मकायिकानां
उपगत नायकदर्शनाय सर्वे ॥ ५२ ॥
तथ पुन परनिर्मितापि देवा-
स्तथ निर्माणरतिश्च शुद्धसत्त्वाः ।
15 प्रमुदित तुषिताश्च यामदेवा
उपगत सर्वि नमस्यमान बुद्धम् ॥ ५३ ॥
त्रिदश अपि च शक्र देवराजा
अप्सरकोटिशतैः सहागतोऽत्र ।
कुसुमवर्ष संप्रवर्षमाणो
20 उपगत बुद्धमुनीन्द्रदर्शनाय ॥ ५४ ॥
चतुरि चतुर्दिशासु लोकपाला
वैश्रवणो धृतराष्ट्र नागराजा ।
विरूढकु विरूपाक्षु हृष्टचित्ता
उपगत सर्वि नरेन्द्र ते स्तुवन्ता ॥ ५५ ॥
25 ऐलविल वलवन्त यक्षराजा
परिवृत यक्षशतेहि प्रेमजातः ।
गगनतलि स्थिहित्व हृष्टचित्तः
क्षिपति अनेक विचित्र पुष्पवर्षम् ॥ ५६ ॥
N 139 अपरि पुनरनन्त मालधारी
विविध विचित्र गृहीत्व माल्यगन्धान् ।

---

१ A C अपरिपरित्त for अपरिमित. २ B पारिषद्याः for पारिषद्याः. ३ C तथागत for उपगत. ४ Mss. परिनिर्मितापि. ५ B विरूपक for विरूढकु. ६ C यक्षशतेहि for यक्षशतेहि. ७ A C अपि पुन शर् गत for अपरि पुनरनन्त. ८ A मध्यमाल्यान् for माल्यगन्धान्.

सर्वि सपरिवार हृष्टचित्ताः
　　पुरवरस्य करोन्ति तत्र पूजाम् ॥ ५७ ॥
बहव शत करोटपाणि[1] यक्षा
　　अपि च सुभूमि[2] तेपि यक्षकन्याः ।
सुमधुर सुमनोज्ञ यक्षवाद्यै-　　5
　　स्तूर्यशतेहि[3] करोन्ति बुद्धपूजाम् ॥ ५८ ॥
ललित-मधुर-गीत-वादितस्मिन्
　　सुकुशलैः सह किन्नरीसहस्रैः ।
द्रुम उपगत गन्धमादनातो
　　जिनवरु पूजितु[4] किन्नराण राजा[5] ॥ ५९ ॥　　10
शंबर बल वेमचित्र राहु
　　दानवकन्य सहस्रपरिवाराः ।
असुरगण महर्द्धिकाश्च[6] अन्ये
　　उपगत ते रतनानि वर्षमाणा ॥ ६० ॥
शतनियुत अनन्त राक्षसाना　　15　　N 140
　　राक्षसकोटिशतैरुपास्यमानाः[7] ।
पृथु विविध विचित्र मुक्तपुष्पान्
　　पुरवरस्य क्षिपन्ति गौरवेण[8] ॥ ६१ ॥
तथपि च अनवतप्तु नागराजा
　　परमसुशिक्षिताश्च[9] नागकन्याः ।　　20
तूर्यशतसहस्र वादयन्त्यो[10]
　　उपगत पूजन तं लोकनाथम् ॥ ६२ ॥
पञ्चशत अनवतप्तु[11] पुत्रा
　　विपुल अनुत्तर ज्ञान प्रार्थयन्तः ।
स्वजनपरिवृता उदग्र[12] भूत्वा　　25
　　उपगत पूजयितुं स्वयं स्वयंभूम् ॥ ६३ ॥
तथपि च अपलालु नागराजा　　N 141
　　पुरवरस्य कृताञ्जलिः प्रणम्य ।

---

१ C कोडपाद for करोटपाणि. २ B अभूपिय, C अभूपि for सुभूमि. ३ B सूर्यशतेहि करोन्ति तत्र पूजाम् for the line. ४ A पूजने; B पूजन for पूजितु. ५ C पूजां for राजा. ६ B महर्षिकाश्च for महर्द्धि°. ७ A B उपास्यमानः. ८ After गौरवेण in st. [illegible], A B T read a passage given in App. I (No. 13). ९ B °क्षित तस्य नागकन्या. १० C वादयन्त्यो for वाद°. ११ B °तप्तपुत्रा; C अनोपततपुत्रा. १२ C उदग्रभूता.

वर रुचिर गृहीत्व नागपुष्पान्
स्थित गगने मुनिराज् सत्करोन्तः ॥ ६४ ॥

तथपि च मुचिलिन्द नागराजा
प्रीतमनाः परितुष्ट हर्षजातः।
विविध रत्नमौक्तिकं गृहीत्वा
उपगमि नायकु अभिकिरन्तु तत्र ॥ ६५ ॥

तथपि च कालिकोऽपि नागराजा
उपगतु मुखु तथागतस्य हर्षचित्तः।
वर रुचिर गृहीत्व रत्नदामान्
10 पुरुषवरस्य पूज करित्व श्रेष्ठाम् ॥ ६६ ॥

सोऽपि परम गौरवं जनित्वा
अनुस्मरमाणु गुणांस्तथागतस्य।
N 142 स्वजनपरिवृतः सनागसंघो
बहुविधु भाषति वर्ण नायकस्य ॥ ६७ ॥

15 नन्दु तथा उपनन्दु नागराजा
तथ पुनस्तक्षक कृष्णगौतमी च।
उपगत जिनु ते नमस्यमानाः
प्रणिपतिताः सुगतस्य पादयोर्हि ॥ ६८ ॥

उपगत एलपत्रु नागराजा
20 परिवृत नागशतेहि रोचमानः।
मुनिवर जिनु काश्यपं स्मरन्तो
स्वक उपपत्ति अपश्यि अक्षणेषु ॥ ६९ ॥

अहो अहु पुरि आसि काङ्क्षप्राप्तो
मयि पुरि छिन्नु परित्तमेलपत्रम्।
25 सो अहु उपपन्नु अक्षणस्मिन्
न सुलभ धर्म विजानितुं जिनस्य ॥ ७० ॥

क्षिप्र अहु जहित्व नागयोनिं
परम जुगुप्सितमेतु जन्तुकायम्।

---

१ A नागसुका; C नागपुष्प. २ C अचलेन्द for मुचिलिन्द. ३ C नायकमोकिरन्ति तत्र. ४ After ॰हर्षचित्तः, B reads the following

वर रुचिर गृहीत्व नागराजा विविध रतनमौक्तिकं गृहीत्वा।
उपगमि नायके किरन्तु तत्र तथपि च कालिककोऽपि नागराजा ॥

and repeats st. ६६. ५ B रत्नदामां for ॰दामान्. ६ C मौक्तिकं for गौरवं. ७ C ॰गोतमश्च for ॰गौतमी च. ८ A C रोदमानः.

धर्ममहु विजानि शान्तिमात्रं[1]

पुष्पवरेण च ज्ञातु बोधिमण्डे ॥ ७१ ॥ N

सागर अहिराजचक्रवर्ती

परिवृतु नागत्रिकोटिसहस्रैः ।[2]

वरुण मनस्वी गृहीत्व मुक्ताहारान्[3] 5

उपगतु ते भगवन्तु पूजनार्थं ॥ ७२ ॥[4]

क्षिप्तं शिल जिनस्य तत्र येनो[5]

गगनस्थितेन गृहीत्व तस्मि काले ।

राजगृहि स किम्पिलोऽपि यक्षः

पुरतः स्थितः सुगतस्य गौरवेण ॥ ७३ ॥ 10

अलकवती समग्र राजधानी N

शून्य अभूषि न तत्र कश्चि यक्षः ।

सर्वि क्रिय करित्व अन्यमन्यं

उपगत पश्यितु सर्वलोकनाथम् ॥ ७४ ॥

तथपि च खरकर्ण सूचिरोमा 15

आटविकस्तथ यक्ष मेषकक्ष ।[6]

हैमवत शातगिरिश्च यक्ष

उपगत गर्दभको जिनं स्वयंभूम् ॥ ७५ ॥

इन्द्रकेतु विचर्टश्च सुरूपो[7]

वक्कुल[8] पश्चिकु शाक्य प्रद्वेषो[9] । 20

एते परेऽपि च यक्षेन्द्र सहस्ता

उपगत धूपघटं[10] परिगृह्य ॥ ७६ ॥

निहत बहु दुःसंस्थितात्मभावा

विगलित-आभरणा अनेकरूपा ।

महय शतसहस्र तस्मि काले 25

उपगत तत्र गृहीत्व यक्ष पुष्पान्[11] ॥ ७७ ॥

---

१ B धर्म अहु निज निशीतिमात्रं; C धर्मु [illegible] विजानि शीतिमात्र for the line. २ T शान्तबोधि for शान्तिमात्र. ३ C नागन्य त्रिप्राणिकोटि सहस्रैः for the line. ४ C वरुण तथ मनस्वि मुक्तहारैः for the line. ५ B रत्नहारे for मुक्ताहारान्. ६ After पूजनाय in st. 72 AB add:

अन्यि बहुसहस्र नागराजा अपि च मनस्विय सागरो भुजगेन्द्रः ।

[illegible] रुचिर गृहीत्व नाग पुष्पं उपगतु ते सुगतस्य पूजनाय ॥

७ C क्षिप्तशील for क्षिप्त शिल. ८ B मेषकक्ष; C मेषकक्ष for मेषकक्ष. ९ B विस्तरस्य for विचर्टश्च. १० B वहुल ११ B प्रवर्षो for प्रद्वेषो. १२ B धूपघट for °घटं. १३ After पुष्पान् in st. 77, ABT read a passage given in App. I (No.14).

जलनिधि निवसन्ति ये[1] सुपर्णा
उपगत आह्वर्णवेश निर्मिणित्वा ।
मुकुटधर विचित्र दर्शनीया
गगनस्थिताः सुगतं नमस्यमानाः ॥ ७८ ॥

N 146 5 नगरशत[3] ये केचि जम्बुद्वीपे
वनविहरेषु य तत्रै[4] देवताश्च ।
सर्वे नगरदेवताः समग्रा[5]
उपगत पूज करोन्ति नायकस्य ॥ ७९ ॥

उपगत वनदेवता अनन्ता-
10 स्तथपि च सर्वे य शैलदेवताश्च ।
तथपि च नदिदेवताः समग्रा
उपगत पूज करोन्ति नायकस्य ॥ ८० ॥

अटविमरुषु देवताशतानि
गिरिशिखरेषु य देवताः समग्राः ।
15 उत्स-सर-तडागदेवताश्च
उपगत सागरदेवताश्च बुद्धम् ॥ ८१ ॥

देव-असुर-नाग-यक्ष-संघा
गरुड-महोरग-किंनराः कुम्भाण्डा ।
तथपि च बहु प्रेतपूतनाश्चो[6]
20 पुरवरस्य करोन्ति चित्रिकारम् ॥ ८२ ॥

N 147 तेऽपि च जिनवरे करित्व पूजां[7]
नगरवरं प्रविशन्ति नायकस्मिन् ।
देव असुरनागयक्षराजा
सततमतृप्त भवन्ति दर्शनेन ॥ ८३ ॥

25 यथ पुरिमभवेषु लोकनाथ
पुरिमजिनेषु अकार्षि पूज श्रेष्ठाम् ।
पुण्यफलविपाक एवरूपो
न च जनु तृप्तु नरेन्द्र पश्यमानः ॥ ८४ ॥

मेरु तथ सुमेरु चक्रवाला
30 हिमगिरिस्तथ गन्धमादनश्च ।

१ B येषु पत्र for ये सुपर्णा. २ C आश्रवेश निर्मिहित्वा. ३ B नगरपनय for नगरशत ये. ४ T कुरादेवताश्च for तत्र देव°. ५ A om. समग्रा. ६ B °प्रेतनाश्चो for °पूतनाश्चो. ७ B नित्यपूजां for पूजां

आवरणा न ते जिनस्य भोन्ति
आम यदा जिनु मुखि बुद्धक्षेत्रे ॥ ८५ ॥
ये च इह समुद्र बुद्धक्षेत्रे
तेऽपि महीय समास्तदा भवन्ति ।
सर्वमिमु समन्तु बुद्धक्षेत्रं
समु भवती कुसुमेहि संप्रकीर्णम् ॥ ८६ ॥
N 148
रश्मि शतसहस्र अप्रमेया
[1]अवकिरि पादतलेहि धर्मराजा ।
सर्वि निरय शीतला भवन्ति
धर्मदुःख उपनीत सुखं च वेदयन्ति ॥ ८७ ॥
धर्म दशबल संप्रभाषि तत्रो
महमनुजान विशुद्ध भोति चक्षुः ।
प्राणि शतसहस्र अप्रमेया
नियत भवन्ति च सर्वि बुद्धज्ञाने ॥ ८८ ॥
बहु इमि सुगतस्य प्रातिहार्या
न सुकरु वक्तु च कल्पकोटियेभिः ।
पुरवर प्रविशन्ति नायकस्मिन्
प्रमुदित सर्व जगज्जिनप्रवेशे ॥ ८९ ॥
इमि गुण सुगतस्य अप्रमेया
नरवृषभस्य गुणाग्रपारगस्य ।
सर्वगुणविशेषपारगस्य
शिरसि नमस्यथ बुद्धपुण्य[3]क्षेत्रम् ॥ ९० ॥

इति श्रीसमाधिराजे पुरप्रवेशपरिवर्तो नाम दशमः ॥

---

१ A अवगिरि for अवकिरि. २ B om. st. 87 *cd* and 88 *ab* ३ C बुद्धमक्षेत्रम् for बुद्धपुण्यक्षेत्रम्.

निःसंशयी संशयकाङ्क्षछेदके[1]
प्रकाशयाही मम बुद्धबोधिम् ॥ १२ ॥

अथ खलु भगवांश्चन्द्रप्रभस्य कुमारभूतस्य चेतसैव चेतःपरिवितर्कमाज्ञाय चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म–एकधर्मेण कुमार समन्वागतो बोधिसत्त्वो महासत्त्वः एतान् गुणान् प्रतिलभते, क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते। कतमेनैकेन धर्मेण इह कुमार बोधिसत्त्वो महासत्त्वः[2] सर्वधर्माणां स्वभावं यथाभूतं प्रजानाति? कथं[3] च कुमार बोधिसत्त्वो महासत्त्वः सर्वधर्माणां स्वभावं जानाति? इह कुमार बोधिसत्त्वो महासत्त्वः सर्वधर्माननामकान् नामापगतान् प्रजानाति। घोषापगतान् वाक्पथापगतान् अक्षरापगतान् उत्पादापगतान्[4] निरोधापगतान् हेतुविलक्षणान् प्रत्ययविलक्षणान् विपाकलक्षणानारम्भणलक्षणान् विवेकलक्षणान् एकलक्षणान् यदुतालक्षणान् निमित्तापगतान् अचिन्त्यांश्चिन्तापगतान् मनोपगतान् सर्वधर्मान् यथाभूतं[5] प्रजानाति। अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत–

एकु निर्देश धर्माणां सर्वधर्मा अलक्षणाः[6]।
देशिता वरप्रज्ञेन यथाभूतं प्रजानता ॥ १३ ॥
य[7] एवं धर्मनिर्देशं बोधिसत्त्वः प्रजानति।
न तस्य भोति विष्ठानं सूत्रकोट्या[8] प्रभाषतः ॥ १४ ॥
अधिष्ठितो नायको हि भूतकोटीं प्रजानति।
प्रजानाति च तां कोटीं न चात्रो किंचि भाषितम् ॥ १५ ॥
एकेन सर्वं जानाति सर्वमेकेन पश्यति।
कियद् बहुं पि भाषित्वा न तस्योत्पद्यते मदः ॥ १६ ॥
तथास्य चित्तं निध्यातं सर्वधर्मा अनामकाः[9]।
शिक्षितो नामनिर्देशे भूता वाचं प्रभाषते ॥ १७ ॥
शृणोति घोषं यं कंचित् पूर्वान्तं तस्य जानति।
ज्ञात्वा घोषस्य पूर्वान्तं घोषेण ह्रियते न[10] सः ॥ १८ ॥
यथा घोषस्य पूर्वान्तं एवं धर्माण लक्षणम्।
एवं धर्मान् प्रजानन्तो न गर्भेषूपपद्यते ॥ १९ ॥
अजातिः सर्वधर्माणामनुत्पत्तिं प्रजानति।
प्रजानन् जातिनिर्देशं भवेज्जातिस्मरः सदा ॥ २० ॥
यदा जातिस्मरो भोति तदा च चरते क्रियाम्।
क्रियामोतरमाणस्य परिवारो न भिद्यते[11] ॥ २१ ॥

१ AB °छेदक. २ C om. महासत्त्व ३ B om. from कथं ■ upto जानाति. ४ A om विपाक-लक्षणानारम्भणलक्षणान्. ५ A om. यथाभूतं. ६ C सुलक्षणाः for अलक्षणाः. ७ B यत्र तं for य एवं. ८ A भूतकोट्याः for सूत्रकोट्या. ९ A अनामका for अनामकाः. १० B तम for न सः. ११ B विद्यते for भिद्यते

य एवं शून्यकान् धर्मान् बोधिसत्वः प्रजानति ।
न तस्य किंचिदज्ञातमेषा कोटिरचिंत्वना ॥ २२ ॥

अकिंचनायां कोट्यां हि किंचिद् बालैर्विकल्पितम् ।
येन ते कल्पकोटीयः संसेरन्ति पुनः पुनः ॥ २३ ॥ 5

सचेत्ते कल्प जानीयुर्यथा जानति नायकः ।
न तेषां दुःखु जायेत नापि गच्छेयु दुर्गतिम् ॥ २४ ॥

एवं पृथग्जनाः सर्वे अजानन्त इमं नयम् ।
क्षिपन्ति ईदृशान् धर्मान् यत्र दुःखं निरुध्यते ॥ २५ ॥

अलब्धिः सर्वधर्माणां धर्मसंज्ञा प्रवर्तते । 10
सा एकजातिका संज्ञा संज्ञामेव विजानथ ॥ २६ ॥ N 157

विजानना च संज्ञा च बालैरेतद्विकल्पितम् ।
प्रकल्पितेषु[6] धर्मेषु नात्र मुह्यन्ति पण्डिताः ॥ २७ ॥

पण्डितानामियं भूमिर्बालानां नात्र गोचरः ।
गोचरो बुद्धपुत्राणां शून्या धर्मा अनाविलाः ॥ २८ ॥ 15

बोधिसत्वानामियं भूमिर्बुद्धपुत्रचरी इयम् ।
बुद्धधर्माणलंकारो देशिता शान्त शून्यता ॥ २९ ॥

यदा च बोधिसत्वानां प्रहीणा भोति वासना ।
न ते ह्रियन्ति रूपेहि बुद्धगोत्रस्मि ते स्थिताः ॥ ३० ॥

अस्थान सर्वधर्माणां स्थानमेषां न विद्यते । 20
ये एवं स्थान जानाति बोधिस्तस्य न दुर्लभा ॥ ३१ ॥

दानं शीलं श्रुतं क्षान्ति सेवित्वा मित्र भद्रकान् ।
इमां क्रियां विजानन्तः क्षिप्रं बोधिं स बुध्यते ॥ ३२ ॥

देवाश्च नागाः सद सत्करोन्ति
गन्धर्व यक्षा असुरा महोरगाः ।
सर्वे च राजान सुपर्णि किन्नरा 25
निशाचराश्चास्य करोन्ति पूजाम् ॥ ३३ ॥

यशोऽस्य भाषन्ति च बुद्धकोटियो N 158
बहुकल्पकोट्योऽपि अधिष्ठिहन्तः ।

---

१ C संसरन्ते. २ B पृथग्गुणाः for पृथग्जनाः. ३ A अस्तरन्त इमं भयं for अजानन्त इमं नयम्. ४ C °संज्ञाय वर्तते for °संज्ञा प्रवर्तते. ५ B चोभे ते तद्विकल्पिते for बालैरेतद्विकल्पितम्. ६ A अकल्पितेषु धर्मेषु; B अकल्पिते बुद्धधर्मे. ७ A संश्रयः for गोचरः. ८ [illegible] बुद्धधर्माणां for °पुत्राणां. ९ B यत्र च for य एवं. १० B इमाः क्रिया विजानन्तो क्षिप्रं बोधिं च बुध्यति for the line. ११ A देवाश्च for देवाश्च.

## समाध्यनुशिक्षणापरिवर्तः ।

N 167 तत्र कुमार यो[1] बोधिसत्त्वो महासत्त्वः सर्वधर्माणां स्वभावं[2] प्रजानाति, तस्येमे एवंरूपा गुणानुशंसा भवन्ति—स तथागतानां भूतं गुणवर्णं भाषते। न च तथागतान् व्याख्याति[4] असता अभूतेन। तत् कस्य हेतोः? यया धर्मतया तथागतः प्रभाव्यते[5], तां धर्मतां यथाभूतं प्रजानाति[3]। अनन्तान् बुद्धगुणान् प्रजानाति[6]। तत् कस्य हेतोः? अनन्ता हि कुमार 5 बुद्धगुणा अचिन्त्याधिष्ठानगताः। तेनाशक्यं[7] चिन्तयितुं वा प्रमातुं वा। तत् कस्य हेतोः? चित्तं हि कुमार निःस्वभावमरूप्यमनिदर्शनम्। इति हि कुमार यत्स्वभावं चित्तं तत्स्वभावा बुद्धगुणाः, यत्स्वभावा बुद्धगुणास्तत्स्वभावास्तथागताः, तत्स्वभावाः[8] सर्वधर्माः। यः कुमार बोधिसत्त्वो महासत्त्व एवं सर्वगुणस्वभावनिर्देशं यथाभूतं प्रजानाति, अयं कुमार उच्यते N 168 बोधिसत्त्वो महासत्त्वो निष्प्रपञ्चमानसः। निःसरणकुशलः। त्रैधातुकनिःसरणं यथाभूतं 10 प्रजानाति। यथावादी अवितथवादी अनन्यथाभाषी[9], यथावादी तथाकारी, अनभिनिविष्टस्त्रैधातुके त्रैधातुकसमतिक्रान्तः। समतिक्रान्तः कामभूमिं रूपभूमिम् आरूप्यभूमिं क्लेशभूमिं नामभूमिं[10] घोषभूमिम्। अक्षरपदनयकुशलः। अक्षरविभक्तिज्ञानः। अनभिलप्यधर्मकोविदः। अक्षरज्ञः। अक्षरकुशलः। अक्षरपदप्रभेदज्ञानकुशलः[11]। अक्षरपदप्रभेदविस्तारज्ञानकुशलः। सर्वधर्मपदप्रभेदकुशलः[12]। सर्वधर्मपदप्रभेदविस्तारकुशलः। सर्वधर्मव्यवस्थानज्ञानकुशलः। 15 निश्चितया बुद्ध्या समन्वागतोऽनभिभूतः[13] सर्वैर्मारैः पापीयोभिर्मारकायिकाभिश्च देवताभिः॥

अस्मिन् खलु पुनर्[14] धर्मपर्याये भाष्यमाणे अष्टानवतीनां नियुतानां देवमानुषिकायाः प्रजायाः पूर्वपरिकर्मकृतायाः[15] कोटीशतसहस्रावर्तायाः धारण्या अनावरणायाश्च धर्मनिध्यप्तनायाः क्षान्तेः N 169 प्रतिलम्भोऽभूत्। ते च सर्वे भगवता व्याकृता अष्टाचत्वारिंशता कल्पैरसंख्येयशतसहस्रैरनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते। सर्वे च अयान्यनामान एकायुष्प्रमाणा अन्यान्येषु बुद्धक्षेत्रेषु 20 अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते। तत्रेदमुच्यते—

यो बोधिसत्त्व मतिमान् प्राप्नोति[16] अनुत्तरां वरां[17] बोधिम्।
अर्थे च धर्मि कुशलो चरति स धर्मस्वभावस्मिं॥ १॥

नाभूत भणति वाच बुद्धानां यादृशा गुणविशेषाः।
स हि धर्मु तं जिनानां जानति शूरो विगतकाङ्क्षः॥ २॥

25 एकार्थं सर्वधर्मान् प्रजानति च शून्यता स एकाशम्।
नानार्थु नास्ति तेषां एकार्थे शिक्षितो भवति॥ ३॥

---

१ B C om. यो २ C स्वभावचिन्तितां यथाभूतां for स्वभावं ३ A जानाति for प्रजानाति ४ B अभ्याख्याति for व्याख्याति ५ B प्रभाषते for प्रभाव्यते ६ B om अनन्तान् बुद्धगुणान् प्रजानाति ७ B C तेन शक्य for तेनाशक्यं ८ C तथागतस्वभावाः for तत्स्वभावाः ९ B अवितथभाषी अनन्यभाषी १० B नामभूमिं गोत्रभूमिं for नामभूमिं ११ A B अक्षरधर्मनय° for अक्षरपदप्रभेदज्ञान° १२ C om पदप्रभेद १३ A om सर्वै° १४ A om पुनर् १५ B पूर्वकर्म for पूर्वपरिकर्म १६ B प्रार्थेति for प्राप्नोति १७ B नाम उत्तमां वरां for वरां

N 170

निष्कल्पानविकल्पान् अनोपलम्भांश्च जानाति मतिमान् ।
क्षयि अक्षयेऽस्य संज्ञा प्रहीण सर्वा निरवशेषा ॥ ४ ॥
न हि रूपतो दशबलान् पश्यति सो धर्मकाय नरसिंहान् ।
नापि लक्षणेहि तस्य प्रहीण सर्वे विपर्यासाः ॥ ५ ॥  5
धर्मा अचिन्त्य एते चिन्तापगता स्वभावउपशान्ताः ।
एवं प्रजानमानः पश्यति बुद्धान् द्विपदश्रेष्ठान् ॥ ६ ॥
यथ ज्ञात्वात्मसंज्ञास्तथैव[1] सर्वत्र प्रेषिता बुद्धिः ।
सर्वे च तत्स्वभावा धर्म विशुद्धा गगनकल्पाः[2] ॥ ७ ॥  N 171
न हि जात मानसेऽस्य निःसरणं ज्ञात्व सर्वधर्माणाम् ।  10
त्रैधातुके विमुक्तिप्रणिधातु न विद्यते तस्य ॥ ८ ॥
यथावद्दर्शी भोति अवितथवचनोऽनन्यथाभावी ।
सर्वं च तस्य वचनं निश्चरति जिनानुभावेन ॥ ९ ॥
अतिक्रान्तु कामभूमिं क्लेशभूमिं[3] च रूप आरूप्यान् ।
धर्मेष्वसक्तमनसः प्रमुदित चरते जगहिताय ॥ १० ॥  15
अतिक्रान्तु नामभूमिं घोषो ज्ञान स्वभावेन चैयिकः[4] ।
यावच्चिरं पि भणतो न विद्यते निश्चयस्तस्य ॥ ११ ॥  N 172
संज्ञाप्रचारु[5] नास्ति दृष्टिविपर्यासु सर्वशः क्षीणः ।
सुनिश्चिता[6] बुद्धिश्च ते गगनोपमधीराः ॥ १२ ॥
विहार कोटीनियुता भवेयु विक्षेपणार्थं चित्तस्य ।  20
अभिभवति सर्वमारान् न चापि तेषां वशमुपैति ॥ १३ ॥
सर्वं जहु मारजालं परिशुद्धः शीलवानपरिदाहः ।
ध्यानसुखस्मि निरतः प्रजानति च शून्यकं[7] लोकम् ॥ १४ ॥
लोकाश्च स्कन्ध उक्तास्तांश्चापि स शून्यकान् प्रजानति ।
अनुत्पादाननिरोधान् सर्वान् गगनोपमान् धर्मान् ॥ १५ ॥  25  N 173
आत्मानं स त्यजते न चैव शिक्षां श्रुतां दशबलस्य ।
सो शीलपारमिं गत उपपद्यति यत्र प्रणिधेति[8] ॥ १६ ॥
विचरन्तु बुद्धक्षेत्रान् पश्यति बुद्धकोटीनियुतानि ।
न स्वर्गं प्रार्थयते न[9] चापि प्रणिधानतो मुक्तः ॥ १७ ॥

---

१ C om. ज्ञात्वा. २ B विशुद्धागगनसत्त्वाः for विशुद्धा गगनकल्पाः. ३ C om. क्लेशभूमिं. ४ A सरिकः for चयिकः. ५ In B, portion from st. 12 upto स्पर्शिता in chapter 15. 12" is lost on missing folios. The portion is found in A C T. ६ C अनिश्चितास्य for सुनिश्चिता. ७ C शून्यतां for शून्यकं. ८ C प्रणिदधेति. ९ C यथा for न चापि.

न भ्रंशयति स वीर्यं मुहूर्तमात्रमपि धर्म चरमाणः ।
प्रशंसितश्च भोति बुद्धैर्दशदिशो लोके ॥ १८ ॥

तस्मात्तर्हि कुमार श्रुत्वा धर्मानिमान् समाधिस्मिन् ।
जहियान ज्ञात्रलाभं प्रकाशय महाजने धर्मम् ॥ १९ ॥

5 य इच्छति स्वयंभूर्भविय बुद्धो महागुणसमङ्गी ।
इह शिक्षित्वा कुशलो दशबलधारी भवति बुद्धः ॥ २० ॥

इति श्रीसमाधिराजे समाध्यनुशिक्षणापरिवर्तो नाम द्वादशः ॥ १२ ॥

## समाधिनिर्देशपरिवर्तः ।

N 174

तत्र खलु भगवान् पुनरेवं चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन समाधिनिर्देशकुशलेन भवितव्यम् । तत्र कुमार कतमः समाधिनिर्देशः ? या यथावत्ता सर्वधर्माणां समता अविषमता । अकल्पना अविकल्पना । अविठपना असमुत्थापना । अनुत्पादः अनिरोधः । कल्पविकल्पपरिकल्पसमुच्छेदः । चित्तानालम्बनता । अमनसिकारः । प्रज्ञप्तिसमुच्छेदः । वितर्कविकल्पसमुच्छेदः । रागद्वेषमोहसमुच्छेदः । स्मृतिमतिगतिह्रीनान्तानन्तमनसिकारः । मनसिकारसमुच्छेदः । स्कन्धधात्वायतनस्वभावज्ञानम् । धृतिचारित्राचारगोचरप्रतिपत्तिस्थानम् । अरणाभूमिः । शान्तभूमिः । सर्वप्रपञ्चसमुच्छेदः । सर्वबोधिसत्त्वशिक्षा । सर्वतथागतगोचरः । सर्वगुणपरिनिष्पत्तिः । अयमुच्यते कुमार समाधिनिर्देशः । यत्र समाधिनिर्देशे प्रतिष्ठितो बोधिसत्त्वो महासत्त्वोऽविरहितो भवति समाधिना, अभ्रान्तचित्तश्च भवति, महाकरुणासमन्वागतोऽप्रमेयाणां च सत्त्वानमर्थं करोति ॥ 10

N 175

अथ खलु भगवांस्तस्यां वेलायामिमाँ गाथा अभाषत—

समाध्यविषमा भूमिः शान्ता सूक्ष्मा सुदुर्दृशा ।
सर्वसंज्ञासमुद्घातः समाधिस्तेन चोच्यते ॥ १ ॥

अकल्पश्चाविकल्पश्चाग्राह्यत्वमनिदर्शनम् । 15
अनुपलम्भश्चित्तस्य समाधिस्तेन चोच्यते ॥ २ ॥

समाहितो यदा भोति सर्वधर्मा न मन्यते ।
अमन्यना यथाभूतं समाधिरिति शब्दितः ॥ ३ ॥

न धर्मोऽस्ति रजोमात्र रजश्चापि न विद्यते ।
अनुपलब्धिर्धर्माणां समाधिस्तेन चोच्यते ॥ ४ ॥ 20

चित्तस्यानुपलब्धिश्च विकल्पो ह्येष चोच्यते ।
अविकल्पिताश्च ते धर्मा समाधिरेष जानथ ॥ ५ ॥

शब्देन सूचितो ह्यर्थः स च शब्दो अवस्तुकः ।
प्रतिश्रुत्कोपमः शब्दो अन्तरीक्षं यथा नभः ॥ ६ ॥

अस्थिता हि इमे धर्माः स्थितिरेषां न विद्यते । 25
अस्थितिः स्थितिशब्देन स्वभावेन न लभ्यते ॥ ७ ॥

N 176

च्यवते अगतीत्येवं गतिश्चासौ न विद्यते ।
अगतिर्गतिशब्देन समाधिर्निर्दिष्टस्तथा ॥ ८ ॥

---

१ After पुनरेव, A reads भगवान्. २ C om. अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन. ३ C om. °निर्देश°. ४ C प्रतिरोधता for अनिरोधः. ५ A T om. वितर्कविकल्पसमुच्छेदः. ६ A om. अरणाभूमि-, शान्तभूमि-. ७ A इमां गाथां for इमा गाथा. ८ A अकल्पना विकल्पश्चा° for अकल्पश्चा° विकल्पश्चा°. ९ A om. st. 3 and 4. १० C damaged; our text is reconstructed from T. ११ C अविकल्पित for °ल्पिताश्च. १२ C स्थितिर्येषां न लभ्यते.

असमाहितो बुध्यति एष मयना
समाहितो एष द्वितीय मयना ।
अमन्यमाना विचरन्ति चोक्षे
अमन्यमाना स्पृशि बोधिमुत्तमाम् ॥ ९ ॥

समविषम एष शान्तभूमि[1]
शमथविपश्यनानिमित्त एषा ।
सेविय इमु शान्त बुद्धबोधि[2]
स इह प्रयुक्त समाधिभावनायाम् ॥ १० ॥

न च पुनरियमक्षरेहि शक्य
10 प्रविशितु अर्थगति प्रवेशो ।
सर्वरुत जहित्व भाष्यघोष[3]
भवति समाहित नो च मन्यनास्य ॥ ११ ॥

यथ इह समाधि बोधिसत्त्वो
यथउपदिष्टु तथा स्थिहेत युक्त ।
N 177 15 सचेदिह भवि कल्पदाहु क्षेत्रे
गिरिवरमभ्यगत न तं दहेऽग्नि ॥ १२ ॥

यथ गगनु न जातु दग्धपूर्वं[4]
सुबहुकल्पशतेहि दह्यमानम् ।
गगनसम अभिजानमान धर्मा-
20 स्ते न जातु दह्यति सोऽग्निमध्ये ॥ १३ ॥

सचि पुन ज्वलमान बुद्धक्षेत्रे
प्रणिधि करोति समाधिये स्थिहित्वा ।
ज्वलनु अयु प्रशाम्यतामशेष
पृथिवी विनश्यि न चास्य अन्यथात्वम् ॥ १४ ॥

25 ऋद्धिबलु अनन्तु तस्य भोति
खगपथि गच्छति सो असज्जमान ।
इमि गुण अनुभोति बोधिसत्त्वो
यथअनुशिष्टु समाधिये स्थिहित्वा ॥ १५ ॥

जायते च्यवते वापि न च जाति न च्युति ।
30 यस्य[5] विजानना एषा समाधिस्य न दुर्लभा ॥ १६ ॥

---

१ T बुद्धभूमि for शान्तभूमि २ C बुद्धगोत्र for °बोधि ३ C भाष्यघोष ४ After दह्यति C adds जातु ५ A यस्या for यस्य

न च्युतिर्नापि चो जाति लोकनाथेन देशिता ।
लोकनाथं विदित्वैवं समाधिं तेन जानथ[1] ॥ १७ ॥
अनोपलिप्ता लोकेन लोकधर्मे न सज्जति ।
असज्जमानः कायेन बुद्धक्षेत्राणि गच्छति ॥ १८ ॥
क्षेत्रेषु पश्यते नित्यं संबुद्धान् लोकनायकान् । N 178
धर्मं च शृणुते तत्र बुद्धक्षेत्रेषु[2] भाषितम् ॥ १९ ॥
न जातु तस्य[3] अज्ञानं धर्मधातुं च भाषते ।
गम्भीरः सततो धर्मे धर्मधातुमयो हि सः ॥ २० ॥
भाषतः कल्पकोट्योऽपि प्रतिभानं न हीयते ।
निर्मिणोति बहूनन्यान् बोधिसत्त्वान् विचक्षणः ॥ २१ ॥
क्षेत्रातः क्षेत्र गच्छन्ति बोधिसत्त्वान निर्मिताः ।
सहस्रपत्रपद्मेषु पर्यङ्केन निषण्णकाः ॥ २२ ॥
बुद्धबोधिं प्रकाशेन्ति धारणीसूत्रशोभनम् ।
अन्यांश्च सूत्रकोटीयो समाधिं शान्त भावयन् ॥ २३ ॥
अनिर्वर्तिनाये[4] स्थापेन्ति बहून् सत्त्वानचिन्तियान् ।
प्रतिभानं क्षयं नैति बुद्धबोधिं प्रकाशिय ॥ २४ ॥
कूटागारे हि गच्छन्ति रत्नेहि [5]विचित्रिते ।
ओकिरन्ति च पुष्पेहि गन्धवद्भिर्विनायकम् ॥ २५ ॥
ओकिरन्ति च चूर्णेहि गन्धवन्तेहि नायकम् ।
कुर्वन्ति विपुलां पूजां सर्वे ते बोधिकारणात् ॥ २६ ॥[6]
अप्रमेया गुणा एते बोधिसत्त्वान तायिनाम्[7] ।
निष्क्लेशा यदा भोन्ति तदा ऋद्धिं लभन्ति ते ॥ २७ ॥
अनुपचिक्लेशान अच्छाः शुद्धाः प्रभास्वराः । N 179
असंस्कृता अक्षोभ्याश्च बोधिसत्त्वान गोचराः ॥ २८ ॥
प्रशान्ता उपशान्ताश्च निष्क्लेशा अनङ्गनाः ।
अप्रपञ्चा निष्प्रपञ्चाः प्रपञ्चसमतिक्रमाः ॥ २९ ॥
अप्रचारोऽक्षराणां च सर्वधर्माण लक्षणम् ।
दुर्विज्ञेयश्च घोषेण समाधिस्तेन चोच्यते ॥ ३० ॥
अक्षया उपशान्ता च अनाभोगा अदर्शना ।
गोचरः सर्वबुद्धानां भूतकोटिरनाविला ॥ ३१ ॥

1 C जानति for जानथ. 2 C बुद्धैः क्षेत्रेषु. 3 C तस्य चित्त for जातु तस्य. 4 C अनिवर्तिकाये स्थापेन्ति. 5 C विचित्रिते. 6 A om. this line. 7 C मायिनाम् for तायिनाम्.

सर्वबुद्धानियं शिक्षा सर्वधर्मस्वभावता।
इह शिक्षित्व संबुद्धा गुणानां पारमिं गताः॥ ३२ ॥
न संपारं ने[1] वापारं पूर्वान्तो न विकल्पितः।
तेन ते सर्वे संबुद्धा गुणानां पारमिं गताः॥ ३३ ॥
5 अनागतानगतिकान् धर्मान् ज्ञात्वा स्वभावतः।
निष्प्रपञ्चाननाभोगांस्तत्र ते पारमिं गताः॥ ३४ ॥

इति श्रीसमाधिराजे समाधिनिर्देशपरिवर्तस्त्रयोदशः॥ १३ ॥

---

१ C व पारं वा for न वापारं.

## १४

## स्मितसंदर्शनपरिवर्तः।

N 180

अथ खलु चन्द्रप्रभः कुमारभूत उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—आश्चर्यं भगवन् यावत् सुभाषितेयं भगवता तथागतेनार्हता सम्यक्संबुद्धेन सर्वधर्मस्वभावसमता सर्वबोधिसत्त्वशिक्षा-समाधिनिर्देशः। यथापि नाम भगवन् दीर्घरात्रमत्र शिक्षित्वा समुदागतोऽनुत्तरायां सम्यक्संबोधौ। प्रतिभाति च मे भगवन्, प्रतिभाति च मे सुगत। भगवानाह—प्रतिभातु ते कुमार यस्येदानीं 5 कालं मन्यसे। अथ खलु चन्द्रप्रभः कुमारभूतो भगवता कृतावकाशो भगवन्तं संमुखं सारूप्याभिर्गाथाभिरभ्यष्टावीत्—

दृष्ट्वान सत्त्वान् दुःखितानुपद्रुतान्
रागेण दोषेण सदाभिभूतान्। 10
चित्तं त्वयोत्पादितु बोधिकारणाद्
बुद्धो भवेयं ति प्रजान मोचकः॥ १॥

चीर्णोऽसि वीर्ये बहुकल्पकोटियो
दाने दमे संयमि नित्यु शिक्षित। N 181
शीले च क्षान्तौ तथ वीर्येऽतन्द्रितो 15
दानं च दत्तं विपुलमनन्तकम्॥ २॥

न चो तव मानसु जातु खिन्नं
हस्ताश्च पादांस्त्यजमातु जीवितम्।
हिरण्यसुवर्णं तथ पुत्रदारं
राज्यं च त्यक्तमनपेक्ष भूत्वा॥ ३॥ 20

शीलं तवाच्छं विमलं विशुद्धम्
आत्मा च त्यक्तो न च शील खण्डितम्।
कायेन वाचा मनसा सुसंवृता
सुदान्तचित्ता सुगता नमोऽस्तु ते॥ ४॥

क्षान्तीरताः क्षान्तिपथे प्रतिष्ठिता 25
काये कृते खण्ड पि नैव क्रुध्यसे।
क्षीरं ततः प्रस्रवि मैत्रभावना
आश्चर्यभूता सुगता नमोऽस्तु ते॥ ५॥

---

* B missing for the whole chapter. १ After खलु A adds भगवान्. २ C om from उत्थाय॰ upto प्रणम्य. ३ C नित्युपस्थित for ॰नित्यु शिक्षित. ४ C सदाच्छो for तवाच्छं. ५ C विपुलं॰. ६ C क्षान्तिबले for ॰पथे.

क्लेशैरुपेता दशभिर्बलै स्थिता
असङ्गज्ञानी विदि सर्वधर्मान्।
करुणानि लोकहितकर धर्मस्वामिन्
अनुकम्पसे प्रजा इमे अर्थकाम ॥ ६ ॥

N 182 5 शून्य ति ज्ञान न च पुनिहास्ति सत्त्वो
लोक च दृष्ट्व तथा ति प्रनष्टमार्गम्।
विबोधितास्ते प्रकृतिनिरामधर्मे
निर्मुक्तिजाता न च कवि सा विमुक्ति ॥ ७ ॥

प्रत्यादिश जहिय सदा प्रमत्त
10 जित्वा च मार सबलमन तसैयम्।
बुद्धित्व बोधि विपुलामनन्तज्ञान
दिशेहि धर्म परम विशुद्धशान्तम् ॥ ८ ॥

गगन पतेय्या सह शशितारकेहि
पृथिवी विनश्येत् सनगरशैलसत्त्वा।
15 आकाशधातुरपि च सियान्यथात्व
नो चैव तुभ्य वितथ भणेय्ये वाचा ॥ ९ ॥

दृष्ट्वा त्व दुःखितान् सत्त्वानुपलम्भरता प्रजा।
अनोपलम्भ देशेसि गम्भीरा शान्तशून्यताम् ॥ १० ॥
शिक्षितोऽसि महावीर कल्पकोटीरचिन्तिया।
20 अनोपलम्भशिक्षाया स्खलित ते न विद्यते ॥ ११ ॥
यादृशो शिक्षितो धर्मे तादृशं धर्मु भाषसे।
अभूमिरत्र बालाना यावन्त अन्यतीर्थिका ॥ १२ ॥
N 183 ये स्थिता आत्मसंज्ञाया ते स्खलन्ति अविद्दसु।
ज्ञात्वा धर्माण नैरात्म्य स्खलित ते न विद्यते ॥ १३ ॥
25 भूतवादी महावीर भूतधर्मप्रतिष्ठित।
भूते सत्ये स्थितो नाथ भूता वाच प्रभाषसे ॥ १४ ॥
भूता ते चारिका आसीद् यथा ते प्रणिधि कृत।
तस्य भूतस्य निष्पन्दा भूता वाच प्रभाषसे ॥ १५ ॥
भूतचर्यासु सपन्नो भूतकोटीसुशिक्षिता।
30 भूताशया भूतचरी भूतप्रज्ञ नमोऽस्तु ते ॥ १६ ॥

१ A दृष्टु for दृष्ट्व २ A om. दृष्टु तथा ३ C ज्ञात्वा उदारं for जित्वा च मारं, ४ C भवेय for भणेय्य, ५ A °रतान् सदा for °रता प्रजा ६ C ज्ञुत्वा धर्मा निरामान्° for ज्ञात्वा धर्माण नैरात्म्य

समस्ते प्रज्ञया नास्ति ज्ञानवादि प्रभाकर ।
ज्ञाने विशेषतां प्राप्त ज्ञानवादि नमोऽस्तु ते ॥ १७ ॥

मित्रस्त्वं सर्वसत्त्वानां मैत्री तव सुभाविता ।
अप्रकम्प्यो यथा मेरुरचलः सुप्रतिष्ठितः ॥ १८ ॥

गणे सुविपुले शास्तुर्गुणान् संपरिकीर्तयसि ।
गम्भीरप्रज्ञा सुगता नदसे परिषद्गता ॥ १९ ॥

सिंहनादं नदि बुद्धः सिंहविक्रान्तविक्रमः ।
जिनास्ते तीर्थिकाः सर्वे सिंहेन क्रोष्टुका यथा ॥ २० ॥

अदान्तदमको वीर अदान्ता दमितास्त्वया ।
ते च मित्रा दृढा भोन्ति अभेद्या भोन्ति सुस्थिताः ॥ २१ ॥ N 184

दृष्ट्वा त्वं दुःखितान् सत्त्वानात्मदृष्टिसमाश्रितान् ।
नैरात्म्य धर्मं देशेसि यत्र नास्ति प्रियाप्रियम् ॥ २२ ॥

अशिक्षितानां बालानां कुमार्गपथचारिणाम् ।
मार्गं त्वं संप्रकाशेसि येन गच्छन्ति नायकाः ॥ २३ ॥

ये स्थिता आत्मसंज्ञायां दुःखे ते सुप्रतिष्ठिताः ।
न ते जानन्ति नैरात्म्यं यत्र दुःखं न विद्यते ॥ २४ ॥

अस्खलितपदधर्मदेशकोऽसि
स्खलितु न लभ्यति लोकनाथ ।
अचिन्तिय गिर संप्रभाषसे त्वं
दुःखमोक्षकरा नमस्ते नाथ ॥ २५ ॥

बहुनियुतशता सहस्रकोट्यो
गगनस्थिताः पृथु देवनागयक्षाः ।
सर्वि स्पृह जनेन्ति नायकस्मिन्
भाषतु वाच शृणित्व अर्थयुक्ताम् ॥ २६ ॥

स्निग्धमृदुमनोज्ञकाव्ययुक्तां
सुमधुर वाच प्रणीत प्रेमणीयाम् ।
अपरिमितस्वराङ्गसंप्रयुक्तां
हितकर मोक्षकरीं बहुजनस्य ॥ २७ ॥ N 185

तुरियशतसहस्र अप्रमेया
सुमधुर युक्त मैत्रियुक्तकाले ।

१ A गगने विपुले for गणे सुविपुले. - २ C सर्वान् for सत्त्वान्. - ३ A अस्खलिते पदे धर्मं देशकोऽसि for the line. ४ A भणेयु. for भवेयु-

दिव्यस्वर विशिष्ट प्रेमणीया
अभिभवति सुगतस्य एकवाचा ॥ २८ ॥

द्विजगणकलविङ्कमञ्जुघोषा
सुरुचिर प्रेमणीया सुगीतशब्दा ।
5 शङ्खपटहभेरिवीणशब्दा
कलमपि नै लभन्ति बुद्धशब्दे ॥ २९ ॥

परभृतशुकशारिकाण शब्दा
स्तथ पुन क्रौञ्चमयूरकिन्नराणाम् ।
रुत रवित य केचि प्रेमणीया
10 कलमपि बुद्धस्वरस्य नानुभोन्ति ॥ ३० ॥

प्रिय मधुर मनोज्ञ प्रेमणीया
सुमधुर शान्तगिरा प्रशंसनीया ।
सर्वि गिर प्रयुक्त एककाले
गिरवर हर्षणियास्तथागतस्य ॥ ३१ ॥

15 सुरमनुजनरेन्द्रदानवाना
सकलभवे त्रिभवे य अस्ति सत्त्वा ।
N 186 या प्रभा अभवत् प्रभाकराणा
अभिभवति सुगतस्य एकरश्मि ॥ ३२ ॥

कुसुमितु सुगतस्य आत्मभाव
20 परिवृतु विचित्रैर्तु सर्वलक्षणी ।
पुण्यशतनिर्वृत्तु अच्छ शुद्ध
प्रतपति सर्वजगे जिनस्य काय ॥ ३३ ॥

शङ्खान शब्द पणवसुघोषकाणा
भेरीण शब्द तथपि च किम्पलानाम् ।
25 सर्वे च शब्द सुमधुर प्रेमणीया
बुद्धस्य शब्दे शतिम कला न भोन्ति ॥ ३४ ॥

तूर्याण कोटिनियुतसहस्रशब्दा
आस्वादनीय सुमधुर दिव्यकल्पा ।
प्रामोद्यनीय मनुजाणअप्सराणा
30 बुद्धस्य शब्दे शतिम कला न भोन्ति ॥ ३५ ॥

---

१ T 'बो लेत' for 'लभन्ति' २ After शब्दा, C adds अयिप्रेमणिया स्वरा कुणाला सर्वे द्विजाल स्तोन्ति दन्दे ३ C भानुमेन्ति for न लभन्ते ४ C विचित्रु for विचित्रु

क्रौञ्चा मयूर परभृत चक्रवाका
हंसाः कुणाला बहुविधपक्षिसंघाः ।
ये ते सशब्दाः सुमधुर एककाले
बुद्धस्य शब्दे शतिम कलां न भोन्ति ॥ ३६ ॥ E N 187

नागान यक्षाण असुरमहोरगाणां
देवेन्द्रब्रह्ममरुपतीनां च शब्दाः ।
यावन्त शब्दास्त्रिभवे मनोज्ञ कान्ता
बुद्धस्वरस्य कलमपि ते न भोन्ति ॥ ३७ ॥

या ब्रह्मणो वा मरुपतिनश्च आभा 10
प्रभास्वराणां मणिरतनान आभा ।
सर्वा य आभा विविधमनेकरूपाः
सर्वास्त एका अभिभवि बुद्धरश्मि ॥ ३८ ॥

कायेन शुद्धो वचसा मनेन चैव
ज्ञानेन शुद्धस्त्रिभवि अनोपलिप्तः । 15
गुणसारराशि गुणरतनो नरेन्द्रः
सर्वगुणेहि असमसमः स्वयंभूः ॥ ३९ ॥

एवं स्तवित्वा दशबल सत्यवादिं
वाचं प्रभाषि मुदितमनः कुमारः । 20
पूजित्व बुद्धमतुलियमप्रमेयं
बुद्धो भवेय यथ इव शाक्यसिंह ॥ ४० ॥ N 188

तस्यो विदित्वा सुगतु विशिष्ट चर्या-
मसङ्गज्ञानी स्मितमकरोन्नरेन्द्रः ।
मैत्रेयु पृच्छी दशबलज्येष्ठपुत्रं
कस्यार्थि एतं स्मितु कृतु नायकेन ॥ ४१ ॥ 25

आकम्पिताभूद्वसुमति षड्विकारं
देवाश्च नाग गगनस्थिता उदग्रा ।
प्रेक्षन्ति बुद्धं प्रमुदित हृष्टचित्ता-
स्तं व्याकरोहि सुगत अनाभिभूतः ॥ ४२ ॥ 30

अमूमिरस्मि मर्गवतु श्रावकाणां
यत्र प्रवृत्तं पुरुषवरस्य ज्ञानम् ।
सुविशुद्धज्ञानिन्ननुपमप्रज्ञभूमि
आखिला ते स्मितु कृतु जिन कस्य अर्थे ॥ ४३ ॥

---

१ A मरुपतीनां च for °पतिनश्च. २ C सुगतुमनन्तचर्या ३ C भवतु for भगवतु.

येष मैत्रि करुणा सुभाविता
सर्वप्राणिषु जगे अचिन्तिया ।
सत्वसंज्ञ न च येष वर्तते
तेष अर्थि द्विपदेन्द्र पृच्छियाम् ॥ ६० ॥

5 येष ज्ञानमतुलमचिन्तियं
तेष प्राप्त न कदाचि विद्यते ।
चित्तगोचरिय पारमिं गता
तेष अर्थि अहु नाथ पृच्छमि ॥ ६१ ॥

शीलज्ञानगुणपारमिं गता
10 ज्यायज्ञानमतुलं मिवर्तते ।
नैव तुभ्य स्खलितप्रकम्पते
कस्य अर्थि स्मितु एतु दर्शितम् ॥ ६२ ॥

शारिपुत्र अनिरुद्ध कोलिता
ये च अन्य सुगतस्य श्रावकाः ।
N 193 15 नैव तेष इह ज्ञानु वर्तते
बुद्धगोचरु अयं निरुत्तरः ॥ ६३ ॥

सर्वधर्मवशिपारमिं गताः
सर्वशिक्ष-चरियाय उद्गता.
संजनेत्व करुणां विनायका
20 मुख येष परमार्थकोविदा ॥ ६४ ॥

येऽपि पूर्व बहुकल्पकोटियो
एव चिन्ति द्विपदेन्द्र पृच्छित. ।
भव्यमस्तु शरणं परायणं
तेष अद्य फल ब्रूहि नायका ॥ ६५ ॥

25 यक्षराक्षसकुम्भाण्डगुह्यकाः
प्रेक्षमाण द्विपदानमुत्तमम् ।
सर्वि प्राञ्जलिस्थिताः सगौरवाः
श्रोतु व्याकरणमग्रपुद्गलान् ॥ ६६ ॥

बोधिसत्त्व बहवोऽद्य आगता
30 ऋद्धिमन्त बहुक्षेत्रकोटिभिः ।

१ C लभ्यते for विद्यते २ C नैव for नैव. ३ C संजनेतु for ° नेत्व. ४ A येहि for येऽपि

जेष्ठपुत्रे सुगतस्य औरसाः
सर्वि प्राञ्जलिस्थिताः सगौरवाः ॥ ६७ ॥

N 194

गन्धहस्ति पुरिमादिशा गतो-
ऽक्षोभ्यक्षेत्र दिशि लोकविश्रुतः ।
बोधिसत्त्वनयुतैः पुरस्कृतः 5
शाक्यसिंह द्विपदेन्दु पृच्छना ॥ ६८ ॥

सुखावतीय वरलोकधातुतो
महास्थाम प्राप्त अवलोकितेश्वरः ।
बोधिसत्त्वनयुतैः पुरस्कृतः
शाक्यसिंह द्विपदेन्दु पृच्छना ॥ ६९ ॥ 10

येन पूर्व बहुकल्पकोटियो
अप्रमेय सुगता उपस्थिताः ।
सागराण सकला च वालिका
एषता परम ज्ञानमुत्तमम् ॥ ७० ॥

सर्वबुद्धसुत संप्रशंसितः 15
सर्वधर्मगुणपारमि गतः ।
सर्वलोकदिशतासु विश्रुतो
मञ्जुघोष स्थितु प्राञ्जलीकृतः ॥ ७१ ॥

बुद्धक्षेत्रनियुतैश्चरित्वना
सुदुर्लभमीदृशकान दर्शनम् । 20
बुद्धपुत्रगुणवत् सुशिक्षिताः
सर्वि प्राञ्जलिस्थिताः सगौरवाः ॥ ७२ ॥

N 195

नास्ति अन्य इह कश्चि भाजनं
एवरूपि यथ एत सूरताः ।
धर्मकोशधर सर्वशास्तुनां 25
स्निग्धभाव गिर मुञ्च नायका ॥ ७३ ॥

न ह्यकारणक जिना विनायका
दर्शयन्ति स्मितमप्रमुद्गलाः ।
मुञ्च घोषवर दुन्दुभिस्वर
कस्य अर्थि स्मितु एतु दर्शितम् ॥ ७४ ॥

---

१ C °ष्ठ for °पुत्र. २ A om. this line. ३ A C एवि सूरता for एत सूरताः. ४ A स्निग्धवाच for °भाव.

पृच्छमि दशबलं विनायकं
शाक्यसिंह द्विपदानमुत्तमम् ।
ज्ञानपारमि गतं प्रभाकरं
रागद्वेषखिलमोहसादकम् ॥ ४४ ॥

5 कल्पकोटि चरितोऽसि नायको
गङ्गवालुकसमास्तनोत्तरम् ।
N 189 एषमाणु वरबोधिमुत्तमां
यस्य अर्थि स्मितु एतु दर्शितम् ॥ ४५ ॥
हस्त पाद परित्यक्त शास्तुना
10 पुत्रदार प्रियज्ञाति बान्धवान् ।
एषमाणु वरज्ञानमुत्तमं
को नु हेतु स्मितदर्शने मुने ॥ ४६ ॥
अश्वहस्तिरथपत्तियो त्वया
दासदासिमणिरत्नरूप्यकम् ।
15 नैत्र द्रव्यरतन च त्यक्ते
यत्र त्यक्तु चरता ति चारिकाम् ॥ ४७ ॥
ज्ञातु श्रेष्ठु त्रिभवेऽतिवर्तते
सर्वसत्त्वचरिया प्रजानसे ।
धातुचित्तु अभिमुक्तिकोविदा
20 यस्य अर्थि स्मितु एतु दर्शितम् ॥ ४८ ॥
केन पूजित नराणमुत्तमा
यस्य वीर्य विपुलो भविष्यति ।
N 190 को च अस्य चरियाय आहरे
कस्य अर्थि स्मितु दर्शित मुने ॥ ४९ ॥
25 षड्विकार पृथिवी प्रकम्पिता
पद्मकोट्य धरणीतु उत्थिता ।
कोटिपत्रपरमा प्रभास्वरा
हेमवर्णरुचिरा मनोरमा ॥ ५० ॥
यत्रिमे स्थित जिनस्य औरसा
30 बोधिसत्त्व परमा महर्द्धिका ।
धर्मभाणक बहू समागता
स्तोष कारणिक पृच्छि नायकम् ॥ ५१ ॥

१ A परित्यक्त २ A °भणिमुक्ति° for °मणिरत्न° ३ C स्मितमेतु ४ A अर्थु for वार्य

मेरिशङ्खतुणवाः सुघोषका-
स्तूर्य कोटिनियुताः प्रवादिताः ।
तेष शब्द गगेनस्मि श्रूयते
यादृशः सुगतघोष अचिन्तिय ॥ ५२ ॥

हंसक्रौञ्चकलविङ्ककोकिलाः
पक्षिसंघ बहुकाः समागताः ।
मुञ्चि घोष परमं प्रभास्वरं
बुद्धघोषकल नानुभोन्ति ते ॥ ५३ ॥

केन दान दम संयमः पुरे
कल्पकोटि बहुका निषेविताः ।
केन पूजित नराण उत्तमा
कस्य अर्थि स्मितु एतु दर्शितम् ॥ ५४ ॥

केन पूर्वि द्विपदेन्दु पृच्छितो
गौरवं परमु संजनित्वन ।
बुद्धबोधि कथमेव लभ्यते
कस्य अर्थि स्मितु एतु दर्शितम् ॥ ५५ ॥

यात्तिका दशबला अतीतका.
प्रत्युत्पन्न सुगता अनागता. ।
सर्व जानसि नराणमुत्तमो
तेन पृच्छमि प्रजाय कारणात् ॥ ५६ ॥

चित्तसंतति प्रजाय जानते
सर्वि प्राणिन अनन्तगोचराः ।
यस्य यादृशु नरस्य आशय-
स्तेन पृच्छमि नराणमुत्तमम् ॥ ५७ ॥

ये चरन्ति चैरियामनुत्तमा
हेतुयुक्तिविनयस्मि कोविदा. ।
बुद्धज्ञान कथमेतु लभ्यते
एतदर्थि द्विपदेन्दु पृच्छिहम् ॥ ५८ ॥

ये हि धर्म सुसुमा सुदुर्दृशा
शून्य शान्त अतुला अचिन्तिया ।
भाविता दशबलान गोचरा-
स्तेष अर्थ अहु पृच्छि नायकम् ॥ ५९ ॥

१ C गगने हि for गगनस्मि. २ C स्मितमेतु almost everywhere ३ A चरिमाणमुत्तमां for चरियामनुत्तमा. ४ C कारणम् for नायकम्.

हंसकोकिलमयूरसारसा
मेघनाद वृषभाः प्रगर्जिताः।
दिव्यवाद्यमधुराः प्रवादिता
व्याकरोहि गिर सत्त्वमोचनी ॥ ७५ ॥

मैत्रसंजननि प्रेमवर्धनी[1]
ज्ञानदर्शनि अविवैरिघ्नी[2]।
अर्थतीरणि प्रज्ञाविवर्धनी
धल्पकोटिनियुता विशोधनी ॥ ७६ ॥

विनिश्चितभावविभावित-
दुःखनिरोधपदार्थनिदर्शनी।
सर्वकुतीर्थकवादध्वंसनी
शून्य निसत्त्व निजीव विभावनि ॥ ७७ ॥

पुण्यसहस्रशतेहि अलंकृतः
बुद्धसहस्रशतेहि चरित्विह।
देवसहस्रशतेहि सुसंस्तुतः
ब्रह्मसहस्रशतेहि नमस्कृतः ॥ ७८ ॥

राक्षसयक्षकुम्भाण्डप्रसादनि
नागसुपर्णमहोरगमोचनि।
नित्यमसक्त-प्रयुक्त-उदीरणि[3]
धर्मफलेहि शुभेहि समुद्गतः ॥ ७९ ॥

ये च केचि जिनाः परिनिर्वृता
ये च अनागत ये च अवस्थिताः।
सर्वि प्रजानसि सङ्ग न तेऽस्तीति
सर्वगुणेहि समुद्गत नायक ॥ ८० ॥

भूतधरा ससमुद्रपर्वत
सर्वि मही षड्विकार प्रकम्पिता।
देवगणा नभि पुष्प क्षिपन्ति च
दिव्यु प्रवायति गन्धु मनोरमु ॥ ८१ ॥

हतरागदोषतिमिरा निखिला
परिशुद्धशील परिशुद्धमनाः।

१ C प्रीतिवर्धनी for प्रेम°. २ A अविघरजिनी. ३ C उदीरित for उदीरणि.

प्रशान्त शून्य अनिमित्तरता
नैरसिंहनादु नद कारुणिका[1] ॥ ८२ ॥
प्रतिभानवन्त सुविशालयशा
सुसमाप्तप्रज्ञ तथज्ञान जिना । 5
तवे[2] लोकि नास्ति समु कारुणिका
भण कस्यु आर्य स्मितु दर्शयसे ॥ ८३ ॥
कलविङ्ककोकिलमयूररवा-
स्तथ जीवंजीवे जीवकमनोज्ञरुताः ।
रञ्जनीय शब्दु भुवि एकक्षणे 10
कल तेन भोन्ति सुगतस्य स्वरे ॥ ८४ ॥
भेर्यो मृदङ्गपणवाश्च तथा N 198
शङ्ख सवेणु तथ वल्लरियो ।
तूर्यसहस्र सिय एकरवाः
कल नानुभोन्ति सुगतस्य रुते ॥ ८५ ॥ 15
तूर्यसहस्र वर दिव्यरुता
रञ्जनीय गीत सिय अप्सरसाम् ।
सुगीति शब्दरति संजने
कल न भोन्ति सुगतस्य रुते ॥ ८६ ॥
एकस्वरा तु तव लोकहिता 20
नानाधिमुक्ति स्वरु निश्चरति ।
एकैकु मन्यि मम भाषि जिनो
ब्रूहि स्मितं ति श्रुतु कस्य कृते ॥ ८७ ॥
देवान शब्द तथ नागरुता
ये चापि किंनररुता मधुराः । 25
प्रशमेन्ति क्लेश न कदाचिदपि
बुद्धस्वरास्तु सद क्लेशनुदाः ॥ ८८ ॥
प्रीतिं जनेति न च रागरतिं
मैत्रीं जनेति न च दोपमतिम् ।
प्रज्ञां जनेति न च मोहरतिं 30
बुद्धान सर्व मलनाशि स्वरः ॥ ८९ ॥ N 199
न बहि च शब्दु परिपातु प्रजा
सर्वेष छिन्दति स काङ्क्षशतान् ।

---

[1] A नद सिंहनादु वर कारुणिका for the line. [2] A न तवास्ति लोकि for तव लोकि नास्ति.

न च ओनतो न हि च औन्नमतो
समसीस्यदर्शन स्मरो मुनिनः ॥ ९० ॥
भज्यादियं मही सशैलवना
क्षीयते सागरजलं च तथा ।
चन्द्रोऽथ सूर्यु धरणीं प्रपतेद्
गिरमन्यथा न पुन भाषि जिनः ॥ ९१ ॥
सर्वाङ्गवाक्य परिशुद्धगिरा
सिंहस्वरा मधुरमञ्जगिरा ।
ब्रह्मस्वरा सुगत चक्षणिना
भण कस्य अर्थि स्मितु दर्शयसे ॥ ९२ ॥
यावन्त सत्त्व इह सर्व जगे
सर्वेष चित्त चरते कुशलः ।
ये अतीतनागत ये सांप्रतिका
भण कस्य अर्थि स्मितु दर्शयसे ॥ ९३ ॥
यावन्त केचिज्जिन कारुणिका
ज्ञानस्मि सर्वि वशि पारमि गताः ।
न च ते जिना विमलचन्द्रमुखा
नैहैतुकं स्मित सद् दर्शयसे ॥ ९४ ॥
अपि कल्पकोटि भणि अप्रतिमा
यथ गङ्गवालिक भणेय्य गुणान् ।
न च शक्यु कीर्तितु प्रमाण गुणे
भण कस्य अर्थि स्मितु दर्शयसे ॥ ९५ ॥

इति श्रीसमाधिराजे स्मितसंदर्शनपरिवर्तश्चतुर्दशः ॥ १४ ॥

---

1 C अहैतुकं स्मितकरो for नाहैतुकं स्मित सद्.

## स्मितव्याकरणपरिवर्तः ।

अथ खलु भगवांस्तस्यां वेलायां मैत्रेयं बोधिसत्त्वं महासत्त्वमाभिः सारूप्याभिर्गाथाभिः प्रत्यभाषत — N 201

चन्द्रप्रभो एष कुमारभूतः
संस्तुत्य बुद्धमतुलीय प्रीतिया ।
भावित्व बुद्धान विशिष्ट वर्णं
प्रशंसनीयः सद कालि भेष्यति ॥ १ ॥ 5
इहैव चो राजगृहस्मि पूर्वे
दृष्ट्वैव बुद्धान् सहस्रकोटयः ।
सर्वेष चानेन जिनान अन्तिके
अयं वरः शान्तसमाधि पृच्छितः ॥ २ ॥ 10
सर्वत्र चो एष ममासि पुत्रो
इमां चरन्तो वरबोधिचारिकाम् ।
सर्वत्र चासीत् प्रतिभानवन्त
सर्वत्र चासीत् सद ब्रह्मचारी ॥ ३ ॥
स पश्चिमे कालि महाभयानके 15
त्वमेव साक्षी अजिता ममात्र ।
स्थिहित्व शुद्धे सद ब्रह्मचर्ये N 202
वैस्तारिकं एष समाधि काहिते ॥ ४ ॥
समाधिनेमन्तु इदं प्रणीतं
एतेन मार्गेण स बोधि लप्स्यते । 20
परिगृहीतो बहुबुद्धकोटिभिः
पूजां वरां काहिति नायकानाम् ॥ ५ ॥
ज्ञाने स्थिहित्वा अहु व्याकरोमि
चन्द्रप्रभस्याचरितं विशिष्टम् ।
न पश्चकालेऽस्य भवेऽन्तरायो 25
न ब्रह्मचर्यस्य न जीवितस्य ॥ ६ ॥
हस्ते मया आमलकानि पञ्च
प्रजानाति बुद्धसहस्रकोटयः ।

* B is missing upto st 12*. १ A reads तस्यां वेलायां after महासत्त्वं. २ A प्रयाति for ०ति. ३ C अजितममात्र. ४ C वद for सद. ५ C समाधि for स बोधि.

## ॥ पूर्वयोगपरिवर्तः ॥

N 206

स्मरामि पूर्वे चरमाणु चारिकां
सिद्धजस्य सुगतस्य शासने ।
अभूषि भिक्षु विदु धर्मभाणको
नामेन सो उच्यति ब्रह्मदत्त ॥ १ ॥
अहं तदासीन्मति राजपुत्रो [5]
आचारिको बाढ गिलान दुःखित ।
मह्य च सो आचरियो अभूषि
यो ब्रह्मदत्तस्तद धर्मभाणकः ॥ २ ॥
पञ्चोत्तरा वैद्यशता अनूनका
व्याधिं चिकित्सन्ति उदग्रमानसा । [10]

N 207

व्याधिं न शक्नोति मम चिकित्सितु
सर्वे मम ज्ञातय आसि दुःखिता ॥ ३ ॥
श्रुत्वा च गैलान्यु स मह्य भिक्षु
गिलानपृच्छो मम अन्तिकागत ।
कृपां जनेत्वा मम ब्रह्मदत्तो [15]
इमं समाधिं मम तत्र देशयी ॥ ४ ॥
तस्य ममा एतु समाधि श्रुत्वा
उत्पन्न प्रीति अरिया निरामिषा ।
स्वभावु धर्माण प्रजानमानो
उत्थासि व्याधी तुदु तस्मि काले ॥ ५ ॥ [20]
दीपंकरः सो चरमाणु चारिका
मभूषि भिक्षुर्विदु धर्मभाणकः ।
अहं च आसी मतिराजपुत्र
समाधिज्ञानेन हुं व्याधि मोचित ॥ ६ ॥
तस्मात् कुमारा बहु पश्चकाले [25]
अनुस्मरन्तो इमु पारिहाणिम् ।
सहेसि बालान दुरुक्त वाक्य
धारेन्तु वाचेतु इम समाधिम् ॥ ७ ॥

---

१ Before स्मरामि ABT read a passage given in App I (No 17) २ A अहं च आसीन्महिराजपुत्रो for the line ३ C ज्ञातिक for ज्ञातय ४ B तस्मा for तस्य ५ A द्वि for हु ६ AB तुदु for बहु

भेष्यन्ति भिक्षु बहु पश्चकाले    N 203
  लुब्धाश्च दुष्टाश्च असंयताश्च ।
पात्रेषु अध्योषित पात्रचीवरे
  प्रतिक्षिपिष्यन्ति इम समाधिम् ॥ ८ ॥
ईर्ष्यालुका[1] उद्धत प्राकृतेन्द्रिया    5
  कुलेषु चाध्योषित[2] लाभकामा ।
प्रायोगिका मस्तकि नित्य स्थिता
  प्रतिक्षिपिष्यन्ति इम समाधिम् ॥ ९ ॥
हस्ताश्च पादाश्च तथ नियमाना
  हास्ये च लास्ये च सदा प्रयुक्ता ।    10
परस्पर कथिता क्षिप्यमाणा
  ग्रामेषु चर्यापथि अन्यु[3] भेष्यति ॥ १० ॥
अयुक्तयोगानिशि भोन्ति रक्षणा
  परकुमारीषु च नित्य अध्योषिता ।
रूपेण रक्ता[4] ग्रथिता भवन्ति    15    N 200
  हिण्डन्ति[5] ग्रामान्निगमांश्च राष्ट्रान् ॥ ११ ॥
ते खाद्यपेयस्मि सदा प्रयुक्ता
  नाट्ये च गीते च तथैव वादिते ।
क्रयविक्रय चो[6] सद भोन्ति उत्सुका
  पानेऽपि चाध्योषित नष्टलज्जा ॥ १२ ॥    20
ऐश्वान पिष्यन्ति अयुक्तयोगा
  शील तथेर्यापथु छोरयित्वा ।
मर्याद भिन्दित्व गृहीभि सार्धं
  ते भिन्नवृत्ता निरयप्रतिष्ठिता ॥ १३ ॥
ये धर्म बुद्धेहि सदा विवर्जिता    25
  तुल्मानकूटे[7] च सदा प्रयुक्ता ।
तत्कर्म कृत्वान विशिष्टपापकान्
  अपायु यास्यन्ति निहीनकर्मा ॥ १४ ॥
प्रभूतवित्त मणिहेमशङ्ख
  गृहांश्च ज्ञातींश्च विहाय प्रव्रजि ।    30

---

1 C ईर्ष्यासुका for °लुका  2 C कुले अवाध्योषित for कुलेषु चाध्योषित  3 B अभुपेष्यति for अन्यु भेष्यति  4 A मत्ता B सक्तो C शक्ता for रक्ता  5 B हिंसन्ति C भुञ्जन्ति for हिण्डन्ति  6 A चोत्सद B चोत्सव for चो सद  7 C कूट च

अदान्तकायाश्च अदान्तवाच.
  अदान्तचित्ताश्च अपायनिम्नाः ॥ ३० ॥

N 214

अहं च भाषेय्य गुणान धर्मान्
  न चो गुणान् भिक्षु समाचरेय्या ।
5 न घोषमात्रेण च बोधि लभ्यते
  प्रतिपत्तिसारेण न बोधि दुर्लभा ॥ ३१ ॥

इति श्रीसमाधिराजे पूर्वयोगपरिवर्तो नाम षोडशः ॥ १६ ॥

१ C अदान्तचित्ता अदान्तकायश्च २ B अपायनिम्न॰ for अपायनिम्ना ३ B समाधिसेव्या for समाचरेय्या. ४ AB लप्स्यते for लभ्यते. ५ C ॰साराद् for ॰सारेण.

N 210 ते प्रव्रजित्वानिह बुद्धशासने
पापानि कर्माणि सदाचरन्ति[1] ॥ १५ ॥
धने च धान्ये च ते सारसंज्ञिनो[2]
धेनूश्च गाव. शकटानि सञ्चयी ।
5 किमर्थं तेहि इम केश छोरिता
शिक्षाय येषा प्रतिपत्ति नास्ति ॥ १६ ॥
मया च पूर्वे चरिया चरित्वा
सुदुष्करं कल्पसहस्र चीर्णम्[3] ।
अयं[4] च मे शान्त समाधिरेषितो
10 यत्तेष श्रुत्वा तद हास्यु भेष्यति ॥ १७ ॥
चिरं मृषावादि अब्रह्मचारिणो
अपायनिम्नाः[5] सद कामलाभाः ।
ते ब्रह्मचारीण ध्वजं गृहीत्वा
दु शील वक्ष्यन्ति न एष धर्मः ॥ १८ ॥
15 भेदाय स्थास्यन्ति च ते परस्परं
अयुक्तिभिर्लाभ गवेषमाणा. ।
N 211 अवर्ण भाषित्व ते[6] अन्यमन्यं
च्युता गमिष्यन्ति अपायभूमिम् ॥ १९ ॥
शत सहस्रेषु सुदुर्लभास्ते
20 क्षान्तीबलं येषु तदा भविष्यति ।
अतो बहू ये कलहस्मि उत्सुका
प्रपञ्च काहिन्ति जहित्व क्षान्तिम् ॥ २० ॥
घर्ष्यन्ति वाचा वय बोधिसत्त्वा
शब्दोऽपि तेषा व्रजि देशदेशे ।
25 अभूतशब्देन मदेन मत्ता
विपन्नशीलान कुतोऽस्ति बोधि ॥ २१ ॥
न मे श्रुतं नापि कदाचि दृष्ट-
मध्याशयो यस्य विशुद्धु नास्ति ।
इमेषु धर्मेषु च नास्ति क्षान्ति
30 सं लप्स्यते[7] बोधि क्षिपित्व धर्मान् ॥ २२ ॥

---

[1] A B समाचरन्ति for सदा°. [2] A भूतसंज्ञिनो for सार° [3] B चीर्णम् for चीर्णम् [4] A अय न तेषा न समाधि देशिते for the line [5] B अपायनिष्ठा. [6] A च for त [7] AB प्रतिलप्स्यते for स लप्स्यते.

भीताश्च त्रस्ताश्च गृहं त्यजन्ति
  ते प्रव्रजि दृढतरा भवन्ति ।
विरोधयामा विलयं प्रयान्ति
  क्षिपित्व यानं पुरुषोत्तमानाम् ॥ २३ ॥
[3]निहीनप्रज्ञा गुणविप्रहीना
  पश्यन्ति दोषं सद अप्रयाने ।
यस्मै च ते तच्छरणं प्रपन्ना-
  स्तत्रैव ते दोषशतान् वदन्ति ॥ २४ ॥
आजीविका ये बहु प्रव्रजिता
  अनर्थिकाः सर्वसुबुद्धबोधये ।
ते श्रामदसीय स्थिहित्व बाला
  उत्त्रस्त भेष्यन्ति श्रुणित्व शून्यताम् ॥ २५ ॥
विहारु कृत्वान त अन्यमन्यं
  व्यापाददोषांश्च खिलं जनित्वा ।
अभ्याख्य दत्वा च परस्परेण
  लप्स्यन्ति प्रामोद्य करित्व पापकम् ॥ २६ ॥
यः शीलवन्तो गुणवन्तु भेष्यति
  मैत्रीविहारी सद क्षान्तिकोविदः ।
सुसंवृतो मार्दवसूरतश्च
  परिभूत सो भेष्यति तस्मि काले ॥ २७ ॥
यो सो पुनर्भेष्यति दुष्टचित्तः
  सुदारुणो रौद्रनिहीनकर्मा ।
अधर्मचारी कलहे रतश्च
  स पूजितो भेष्यति तस्मि काले ॥ २८ ॥
आरोचयामि प्रतिवेदयामि
  सचेत् कुमारा मम श्रद्द गच्छसि ।
इमां स्मरित्वा सुगतानुशासनीं
  मा जातु विश्वस्तु गमेसि तेषाम् ॥ २९ ॥
ते[13] तीव्ररागास्तथ तीव्रदोषा-
  स्ते तीव्रमोहाः सद मानमत्ताः ।

1 A गाढतरा for दृढ°. २ AB प्रजन्ति for प्रयान्ति. ३ C om. st.24. ४ A यस्यैव for यस्मै च. ५ A तस्यैव for तत्रैव ६ A B विहार; C विचार्य for विहारु. ७ C जनेत्वा for जनित्वा. ८ C मैत्राविहारी. ९ C असंवृतो for सु°. १० B परिभुक्त for °भूत ११ A °विहीनकर्मा for °निहीन°. १२ B न for मा. १३ B तेऽतीव्ररागास् for ते तीव्र°.

अदान्तास्तापाश्च अदान्तवाचः
अदान्तचित्ताश्च अपायनिम्नाः ॥ ३० ॥

N 214

अहं च भाषेय्य गुणान वर्णान्
न चो गुणान् भिक्षु समाचरेय्या ।
न घोषमात्रेण च बोधि लभ्यते
प्रतिपत्तिसारेण न बोधि दुर्लभा ॥ ३१ ॥

इति श्रीसमाधिराजे पूर्वयोगपरिवर्तो नाम षोडशः ॥ १६ ॥

१ C अदान्तचित्ता अदान्तवाचश्च २ B अपायनिम्न: for अपायनिम्नाः ३ [illegible] समाधिमेय्या for समाचरेय्या. ४ AB लप्स्यते for लभ्यते. ५ C °सराद्ध for °सारेण.

## ॥ बहुबुद्धनिर्हारसमाधिमुखपरिवर्तः ॥

N 215 N 216

अथ खलु भगवांस्ता महती सागरोपमा पर्षद धर्मकथया[1] सदर्श्य[2] समुत्तेज्य सप्रहर्ष्य[3] समादाप्य उत्थायासनात् प्राक्रामत् । येन च गृध्रकूटपर्वतराजस्तेनैव उपसमक्रामत् । उपसक्रम्य च प्रज्ञप्त एवासने[4] न्यषीदत् । भिक्षुसघपरिवृतो[5] देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्यैर्नमस्कृत सागरोपमायां पर्षदि धर्म सदेशयति[6] स्म । अथ खलु चन्द्रप्रभ कुमारभूतो भगवन्त निर्गत विदित्वा[7] अशीत्या प्राणिकोटीशतै[8] सार्धं सबहुलै समृद्धिभूतैरन्यलोकधात्वागतैश्च सबहुलैर्बोधिसत्त्वमहासत्त्वनियुतै सार्धं पुष्पधूपगन्धमाल्यविलेपन गृहीत्वा तूर्यशतै वाद्यमानैश्छत्रध्वजघण्टापताकाभिरभ्युद्गताभि महामाल्याभिनिर्हारमादाय भगवत पूजाकर्मणे[9] येन गृध्रकूटपर्वतो[10] येन च भगवांस्तेनोपजगाम । उपेत्य च भगवत पादौ शिरसाभिवन्द्य भगवन्त त्रि प्रदक्षिणीकृत्य तै पुष्पधूपगन्धमाल्यविलेपनैस्तूर्यतालावचरै[11] प्रवाद्यमानैर्महतीं पूजा कृत्वा एकान्ते न्यषीदत् सगौरव सप्रतीशो[12] धर्मपरिपृच्छायै ॥

N 217

10

अथ खलु[13] चन्द्रप्रभ कुमारभूतो[14] भगवन्तमेतदवोचत्–पृच्छेयमह भगवन्त तथागतमर्हन्त सम्यक्सबुद्ध कञ्चिदेव प्रदेश सचेन्मे भगवानवकाश कुर्यात् पृष्टप्रश्नव्याकरणाय । एवमुक्ते भगवाश्चन्द्रप्रभ कुमारभूतमेतदवोचत्–पृच्छ त्व कुमार तथागतमर्हन्त सम्यक्सबुद्ध यद् यदेवाकाङ्क्षसि । कृतावकाशस्ते कुमार तथागतेनावकाश । एवमुक्ते चन्द्रप्रभ कुमारभूतो[15] भगवन्तमेतदवोचत्–कतिभिर्भगवन् धर्मै समन्वागतो बोधिसत्त्व[16] इम सर्वधर्मस्वभावसमता-विपञ्चित समाधि प्रतिलभते ? एवमुक्ते[17] भगवाश्चन्द्रप्रभ कुमारभूतमेतदवोचत्–चतुर्भि कुमार धर्मै समन्वागतो बोधिसत्त्व इम सर्वधर्मस्वभावसमताविपञ्चित समाधि प्रतिलभते । कतमैश्चतुर्भि ? इह कुमार बोधिसत्त्वो महासत्त्व सूरतो[18] भवति सुखसवासो[19] दान्तो दान्तभूमिमनुप्राप्त । स परैराक्रुष्टो वा परिभाषितो वा दुरुक्ताना[20] दुर्भाषिताना वचनपथाना क्षमो भवत्यधिवासनजातीय कर्मदर्शी निहतमानो धर्मकाम । अनेन कुमार प्रथमेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्व इम समाधि प्रतिलभते । पुनरपर कुमार बोधिसत्त्वो महासत्त्व शीलवान् भवति । परिशुद्धशील-

15 N 218

20

१ Before अथ, A B T read a passage given in App I (No 18) २ B reads कथया सदर्शते समुत्तेजसप्रहर्ष for कथया सप्रहर्ष्य ३ AC सदिश्य for सदर्श्य ४ For एवासने न्यषीदत्, A B T read आसनात्प्रक्रामत्तादृश्या एव च बुद्धचर्या राजगृहान्महानगरान्निष्क्रम्य तया तद्द्वारेणैव येन गृध्रकूट पर्वतराजस्तेनोपसक्रान्त । उपसक्रम्य च येन मैत्रयाभिनिर्मितो रत्नमाडस्तेनोपसक्राम दुपसक्रम्य मैत्र्याभिनिर्मिते महति रत्नसिंहासने न्यषीदत् ५ After °परिवृतो, AB add बोधिसत्त्वसघ पुरस्कृत ६ A B देशयामास ७ A B om भगवन्त निर्गत विदित्वा ८ A B °कोटीनियुतशतसहस्रै for °कोटीशतै , C ब्राह्मणकोटी° for प्राणिकोटी° ९ After °कर्मणे A B add राजगृहान्महानगराच्छिद्रद्वारेण निष्क्रम्य १० A B °कूट पर्वतराजो for °कूटपर्वतो ११ A °विलेपनचूर्णचीवरच्छत्रध्वजपताकाभिस्तूर्य° for °विलेपनैस्तूर्य° १२ A सप्रीतिक , B सप्रतीश for सप्रतीशो १३ After खलु, A B add दक्षिण जानुमण्डल पृथिव्या प्रतिष्ठाप्य येन भगवास्तेनाञ्जलिं प्रणम्य १४ After °भूतो, AB add धर्मपरिपृच्छायै कान्तानिषण्ण १५ After °भूतो, A B add भगवता कृतावकाशो १६ A B °सत्त्वो महासत्त्व for °सत्त्व १७ B om एवमुक्ते प्रतिलभते १८ A B शूरो for सूरतो १९ A B सुखसवासो for सुखिसवासो २० A दुरुक्तदुरागताना for दुरुक्ताना

अदान्तसत्त्वाश्च अदान्तवाचः
अदान्तचित्ताश्च अपायनिम्नाः ॥ ३० ॥

N 214

अहं च भाषेय गुणान वर्णान्
न चो गुणान् भिक्षु समाचरेय्या ।

5

न घोषमात्रेण च बोधि लभ्यते
प्रतिपत्तिसारेण न बोधि दुर्लभा ॥ ३१ ॥

इति श्रीसमाधिराजे पूर्वयोगपरिवर्तो नाम षोडशः ॥ १६ ॥

---

१ C अदान्तचित्ता अदान्तवाचश्च २ B अपायनिम्ना: for अपायनिम्नाः. ३ B समाधिमेव समाचरेय्या. ४ AB लप्स्यते for लभ्यते. ५ C °सारेह for °सारेण.

तेजेश्वरस्य द्विपदोत्तमस्य
  षट्सप्तती वर्षसहस्रं आयुः ॥ ३ ॥

तेजेश्वरस्योपरतेन बुद्धो
  मतीश्वरो नाम जिनो अभूषि ।
मतीश्वरस्य द्विपदोत्तमस्य
  वर्षाण कोटी परिपूर्ण आयु ॥ ४ ॥

मतीश्वरस्योपरतेन बुद्धो
  महेश्वरो नाम जिनो अभूषि ।
महेश्वरस्य द्विपदोत्तमस्य
  चतुर्दशो वर्षसहस्र आयु ॥ ५ ॥

महेश्वरस्योपरतेन बुद्धो
  अग्नीश्वरो नाम जिनो अभूषि ।
अग्नीश्वरस्य द्विपदोत्तमस्य
  षष्टिस्तदा वर्षसहस्र आयु ॥ ६ ॥

अग्नीश्वरस्योपरतेन बुद्धो
  महाननो नाम जिनो अभूषि ।
महाननस्य द्विपदोत्तमस्य
  रात्रिंदिवा सप्त अभूषि आयु ॥ ७ ॥

महाननस्योपरतेन बुद्धो
  गणेश्वरो नाम जिनो अभूषि ।
गणेश्वरस्य द्विपदोत्तमस्य
  पञ्चवर्षकोट्य परिपूर्ण आयु ॥ ८ ॥

गणेश्वरस्योपरतेन बुद्धो
  घोषेश्वरो नाम जिनो अभूषि ।
घोषेश्वरस्य द्विपदोत्तमस्य
  नववर्षकोट्य परिपूर्ण आयु ॥ ९ ॥

घोषेश्वरस्योपरतेन बुद्धो
  घोषाननो नाम जिनो अभूषि ।
घोषाननस्य द्विपदोत्तमस्य
  दशवर्षकोट्य परिपूर्ण आयु ॥ १० ॥

---

१ AC °श्वरस्यापरेण for °स्योपरतेन २ AC °स्योपरतेश्च for °परतेन ३ A om. 6cd

घोषाननस्योपरतेन बुद्ध-
थन्द्राननो नाम जिनो अभूषि।
चन्द्राननस्य द्विपदोत्तमस्य
रात्रिंदिवा एक अभूषि आयु ॥ ११ ॥

N 223 5
चन्द्राननस्योपरतेन बुद्ध
सूर्याननो नाम जिनो अभूषि।
सूर्याननस्य द्विपदोत्तमस्य
अष्टादशो वर्षसहस्र आयु ॥ १२ ॥

सूर्याननस्योपरतेन बुद्धो
10 ब्रह्माननो नाम जिनो अभूषि।
ब्रह्माननस्य द्विपदोत्तमस्य
त्रिंशैति वर्षसहस्र आयु ॥ १३ ॥

ब्रह्माननस्योपरतेन बुद्धो
महाब्रह्मो नाम जिनो अभूषि।
15 महाब्रह्मस्य द्विपदोत्तमस्य
अष्टादशो वर्षसहस्र आयु ॥ १४ ॥

एकस्मि कल्पस्मि इमे उपन्ना
दुवे शते लोकविनायकानाम्।
शृणोहि नामानिह कीर्तयिष्ये
20 अनाभिभूतान तथागतानाम् ॥ १५ ॥

N 224
अनन्तघोषश्च विघुष्टघोषो
विघुष्टतेजश्च विघुष्टशब्द।
स्वराङ्गिघुष्टश्च स्वरार्चितश्च
स्वराङ्गशूरश्च स्वराङ्गशब्द ॥ १६ ॥

25 ज्ञानाख्यो ज्ञानविराजशश्च
ज्ञानाभिभूर्ज्ञानसमुद्गतश्च।
ज्ञानार्चिमान् ज्ञान अभ्युद्गतश्च
विघुष्टज्ञानस्तथ ज्ञानशूर ॥ १७ ॥

ब्रह्मामलो ब्रह्मवसु सुनेत्र
30 ब्रह्मा च देवस्तथ ब्रह्मघोष।

१ C द्वात्रिंशतिं वर्षसहस्रमायु for the line २ C एकत्र for एकस्मि ३ A दुवे शता, B दुवं शता ४ C विविधघोषो for विघु° ५ B ज्ञानाभिभूतो for ज्ञानाभिभू ६ B विष्वस्त° for विघु°

ब्रह्मेश्वरो ब्रह्मनरेन्द्रनेत्रे
  महास्वराङ्ग स्वरनादचत्त ॥ १८ ॥
तेजोच्चयस्तेजगति सुतेजा
  तेजेश्वरस्तेजसमुद्गतश्च
तेजोऽभिभुस्तेजविनिश्चितश्च । 5
  तेजस्वरेन्द्र सुविघुष्टतेजा ॥ १९ ॥
भीष्मो बलो भीष्ममति सुभीष्मो N 225
  भीष्मानना भीष्मसमुद्गतश्च ।
भीष्मार्चि भीष्मोत्तर भीष्मघोषा
  एते जिना लोकविनायकाऽभूत् ॥ २० ॥ 10
गम्भीरघोष शिरिभीरणश्च
  विशुद्धघोषेश्वर शुद्धघोष ।
अनन्तघोष सुविमुक्तघोषो
  मारो बलो मारवित्रासनश्च ॥ २१ ॥
सुनेत्र शुद्धानतु नेत्रशुद्धो 15
  विशुद्धनेत्रश्च अनन्तनेत्र ।
समन्तनेत्रश्च विबुद्धनेत्रो
  नेत्राभिभूर्नेत्रअनिन्दितश्च ॥ २२ ॥
दान्तोत्तरो दान्त सुदान्तचित्त
  सुदान्त शान्तेन्द्रिय शान्तमानस । 20
शान्तोत्तर शान्तशिरी प्रशान्त
  शान्तीय पारगतु शान्तिशूर ॥ २३ ॥
स्थितोत्तर शान्त सुदान्तचित्त N 226
  सुदान्तशान्तेन्द्रिय शान्तमानस ।
शान्तोत्तर शान्तश्रिया अनन्त 25
  शान्तप्रशान्तेश्वर शान्तिशूर ॥ २४ ॥
गणेन्द्र गणमुख्यु गणेश्वरश्च
  गणाभिभूर्गणिवर शुद्धज्ञानी ।
महागणेन्द्रश्च गणेन्द्रशूरो
  अन्यो पुनो गणिवर प्रमोचक ॥ २५ ॥ 30
धर्मध्वजश्चो तथ धर्मकेतु
  धर्मोत्तरो धर्मस्वभावउद्गत ।

---

१ A सुविशुद्ध° for सुविघु° २ AB शिरिवारणश्च ३ B शान्तानन for शान्तोत्तर ४ C विमोचक

धर्मध्वजश्चैव सुधर्मशूरः
स्वभावधर्मोत्तरनिश्चितश्च ॥ २६ ॥
स्वभावधर्मोत्तरनिश्चितस्य
अशीतिकोट्यः सहनामधेयाः ।
द्वितीयकल्पस्मि उपन्न नायका
एते मया पूजित बोधिकारणात् ॥ २७ ॥
स्वभावधर्मोत्तरनिश्चितस्य
यो नामधेयं शृणुते जिनस्य ।
N 227 श्रुत्वा च धारेति विघुष्ट नाम
10 स क्षिप्रमेतं लभते समाधिम् ॥ २८ ॥
एतेन बुद्धान परेण अन्यो
अचिन्तियै अपरिमितस्मि कल्पे ।
अभूषि बुद्धो नरदेवपूजितः
स नामधेयेन नरेन्द्रघोषः ॥ २९ ॥
15 नरेन्द्रघोषस्य तथागतस्य
षट्सप्तती वर्षसहस्रमायुः ।
त्रयश्च कोटीशत श्रावकाणां
यः संनिपातः प्रथमो अभूषि ॥ ३० ॥
षड्भिश्च त्रैविद्य जितेन्द्रियाणां
20 महानुभावान महर्द्धिकानाम् ।
क्षीणास्रवाणान्तिमदेहधारिणां
संघस्तदा आसि प्रभाकरस्य ॥ ३१ ॥
अशीति कोटीनियुता सहस्रा
यो बोधिसत्त्वान गणो अभूषि ।
N 228 25 गम्भीरबुद्धीन विशारदानां
महानुभावान महर्द्धिकानाम् ॥ ३२ ॥
असिङ्गप्राप्ताः प्रतिभानवन्तो
गतिंगताः सर्वित शून्यतायाः ।
ऋद्धीय गच्छन्ति ते क्षेत्रकोटियो
30 ततोत्तरे यात्तिक गङ्गवालुकाः ॥ ३३ ॥

१ A धर्मध्वजश्चैव. २ After समाधिम्, T adds a colophon, and A B add: अथ खलु भगवान् भूयस्या मात्रया इमं बहुबुद्धनिर्हारसमाधिमुखं पूर्वयोगपरिवर्तं चन्द्रप्रभस्य कुमारभूतस्य गाथाभिगीतेन विस्तरेण सम्प्रकाशयति स्म. ३ A गम्भीरप्रज्ञान for °बुद्धीन. ४ AB शून्यतायाम्; C शुद्धताया. ५ AB च for तै. ६ B C गङ्गवालिका. for °वालुकाः

पृच्छित्व प्रश्नं द्विपदानुत्तमान्[1]
 पुनेन्ति तस्यैव जिनस्य अन्तिके।
सूत्रान्तनिर्हारनिरुक्तिकोविदा
 आलोकभूता विचरन्ति मेदिनीम् ॥ ३४
सत्त्वानमर्थाय चरन्ति चारिकां 5
 महानुभावाः सुगतस्य पुत्राः।
न कामहेतोः प्रकरोन्ति पापं
 देवा पि तेषां स्पृह संजनेन्ति ॥ ३५ ॥
अनर्थिका भवगतिषु न निश्रिताः[2]
 समाहिता ध्याननिर्हारगोचराः[3]। 10
विनिश्चितार्थाश्च विशारदाश्च N 229
 निरामगन्धाः सद ब्रह्मचारिणः ॥ ३६ ॥
अच्छेद्यवाक्याः[4] प्रतिभानवन्तो
 निरुक्तिनिर्देशपदार्थकोविदाः।
सर्वज्ञसंदर्शक बुद्धपुत्राः 15
 परिगृहीताः कुशलेन कर्मणा ॥ ३७ ॥
अनन्तकल्पाश्चरियाय[5] उद्गता
 स्तुताः प्रशस्ताः सद नायकेहि।
विमोक्षतत्त्वार्थपदान देशकाः
 असंकिलिष्टाः सुविशुद्धशीला[6] ॥ ३८ ॥ 20
अनोपलिप्ता पद्मेन वारिणा
 विमुक्त त्रैधातुकतोऽप्रमत्ता।
अनोपलिप्तायहि लोकधर्मै-
 र्विशुद्धकायाः परिशुद्धकर्मा[7] ॥ ३९ ॥
अल्पेच्छ संतुष्ट महानुभावा 25
 अगृद्ध ते बुद्धगुणाः प्रतिष्ठिता[8]।
सर्वेष सत्त्वान गतिः परायणा N 230
 न घोषमात्रप्रतिपत्तिसारा ॥ ४० ॥
यत्र स्थितास्तं च परेषु देशेषु
 सर्वेहि बुद्धेहि परिगृहीताः। 30

---

१ A द्विपदानुत्तम for °नुत्तमान्. २ A भवगतिर्हिअनिश्रिताः; B भवगतिष्ट अनिश्रिता for भवगतिषु न निश्रिताः. ३ B ध्यानविचार for °निर्हार°. ४ A अनाच्छेद्यवाक्या; B अनाक्षेद्या for अच्छेद्यवाक्याः. ५ B श्रय l. for °श्चरिया. ६ B °विनिश्चिसुविशुद्ध° for °क्लिष्टा सुविशुद्ध°. ७ AB परिशुद्धधर्माः °for कर्माः. ८ A °गुणप्रतिष्ठिताः

वैशारिद्याः कोशधरा जिनानां
ते सर्वि त्रैधातुकि त्रस्तमानसाः ॥ ४१ ॥
प्रशान्तचित्ताः सद रण्यगोचरा
अधिष्ठिता लोकविनायकेभि. ।
5 भाषन्ति सूत्रान्तसहस्रकोटियो
यं चैव भाषन्ति स बुद्धवर्णितम् ॥ ४२ ॥
विशारदाः सर्वपदेभि लौकिकाः
शून्याधिमुक्ताः परमार्थदेशकाः ।
अनन्तवर्णा गुणसागरोपमाः
10 बहुश्रुताः पण्डित विज्ञवन्तः ॥ ४३ ॥
सचेत् कुमारो बहुकल्पकोटिय
अधिष्ठिहन्तः प्रवदेय वर्णम् ।
स[२] अल्पकं तत् परिकीर्तितं भवेद्
यथा समुद्रादुदबिन्दुरेकः ॥ ४४ ॥
N 231 15 तस्मिंश्च काले स नरेन्द्रघोषो
देशेतिमं शान्त समाधि दुर्दशम् ।
महात्रिसाहस्रिय लोकधातु
देवेहि नागेहि स्फुटो अभूषि ॥ ४५ ॥
तस्यो इमं शान्त समाधि भाषतः
20 प्रकम्पिता मेदिनि षड्विकारम् ।
देवा मनुष्या यथ गङ्गवालिका
अविवर्तिकाये स्थित बुद्धज्ञाने ॥ ४६ ॥
तत्रासि राजा मनुजान ईश्वरः
शिरीबलो नाम महानुभाव ।
25 पुत्राण तस्यो शत पञ्च आस-
न्नभिरूप प्रासादिक दर्शनीयाः ॥ ४७ ॥
अशीति कोटीशत इस्त्रियाणा-
मन्तःपुरं तस्य अभूषि राज्ञः ।
चतुर्दशो कोटिसहस्र पूर्णा
30 दुहितरो[३] तस्य अभूषि राज्ञः ॥ ४८ ॥
स कार्तिकाया तद पूर्णमास्या-[४]
मथाह्निकं पोषधमाददित्वा ।

१ A प्रभणेष्य वाक्यम्; B प्रभशेषवाक्यम् (?). २ AB अल्पकं for स अल्पकं. ३ A धीतरो तस्य अभूषि भूपते for the line. ४ A पूर्णिमायाम् for पूर्णमास्याम्.

अशीतिकोटीनियुतेहि सार्ध- N 232

मुपागमल्लोकगुरुस्य[1] अन्तिकम् ॥ ४९ ॥

वन्दित्व पादौ द्विपदोत्तमस्य

न्यषीदि राजा पुरतो जिनस्य ।

अध्याशयं तस्य विदित्व राज्ञो

इमं समाधिं द्विपदेन्द्र देशयि ॥ ५० ॥

[2]स पार्थिवः श्रुत्व समाधिमेत-

मुत्सृज्य राज्यं यथ खेटपिण्डम् ।

परित्यजित्वा प्रिय ज्ञातिबान्धवान्[3] N 233

स प्रव्रजी तस्य जिनस्य शासने[4] ॥ ५१ ॥

पुत्राण पञ्चाशत प्रव्रजित्सु

अन्तःपुरं चैव तथैव धीतरो ।

अन्ये च तत्र पुत्रज्ञातिबान्धवा[5]

षट्सप्ततिर्नयुत त्रयश्च कोट्यः ॥ ५२ ॥

स प्रव्रजित्वेह सपुत्रदारं

स्थपेत्व आहारनिर्हार[6]भूमिम् ।

अधिष्ठितश्चंक्रमि अष्टवर्षं

स चंक्रमे वसित्व काल कार्षीत् ॥ ५३ ॥

स कालु कृत्वा तद राजकुञ्जरो

समाधिचित्तो सुसमाहितः सदा ।

तत्रैव सो राजकुले उपन्नो N 234

उपपादुको गर्भमलैरलिप्तः ॥ ५४ ॥

दृढबलो नाम पितास्य भूपि

महामती नाम जनेत्रि आसीत् ।

स जातमात्रो अवची[7] कुमारो

कच्चिन्नु[8] सो तिष्ठति लोकनाथः[9] ॥ ५५ ॥

जानाति मे आशयु लोकनाथो

येनो ममा शान्त समाधि देशितः ।

---

१ C लोकविदुस्यमन्तिके २ In B, st. 51 and a few more appear here and they are given in App. I (No 19.) In A and C they appear elsewhere as indicated in notes to passage No 18. ३ B °बान्धवम् for °बान्धवान्. ४ AB अन्तिके for शासने ५ A B प्रुत्रज्ञाति° for पुत्रज्ञाति°. ६ A °विहार° for °निर्हार°. ७ B प्रव्रजी for अवची. ८ C कदापि for कच्चिद्. ९ After st. 55, AB add: यो गायते धर्मविरागहेतोर्गायित्व धर्मं द्विपदानमुत्तमो (A °सर्व°) । सत्त्वान धर्मं प्रकरोति नायको कच्चिज्जिनो भाषति तं समाधिम् ॥ B reads अद्यापि मे तिष्ठति लोकनाथः for the last pāda.

सत्त्वान चो आशयु ज्ञात्व चोदको
देशेति धर्मं वरबुद्धबोधी ॥ ७१ ॥
विशेषज्ञानं उपपत्तिज्ञानं
अनन्तज्ञानं सुसमासज्ञानम् ।
सर्वगतीनां प्रतिसंधिज्ञानं
कथिजिनो भाषति तं समाधिम् ॥ ७२ ॥
गृहान् समुत्सृज्य प्रव्रज्यचित्तं
त्रैधातुके अनभिरती ननुग्रहः ।
चित्तस्य संप्रग्रहणं सहर्षणा
देशेति धर्मं द्विपदानमुत्तमः ॥ ७३ ॥
धर्मेषु चो नाभिनिवेश तायि
परिग्रहो धर्मवरे सदा च ।
कर्मविपाके च दृढाधिमुक्तिं
देशेति धर्मं द्विपदानमुत्तमः ॥ ७४ ॥
विनेयस्मि कौशल्य विपाकज्ञानं
कलहं विवादान तथोपशान्तिः ।
अविग्रहं वाप्यविवादभूमिं
देशेति धर्मं द्विपदानमुत्तमः ॥ ७५ ॥
क्षान्तीसमादानमक्रोधस्थानं
विनिश्चये धर्मि सदा च कौशलम् ।
पदप्रभेदेषु च ज्ञानदर्शनं
देशेति धर्मं करुणां जनेत्वा ॥ ७६ ॥
पूर्वान्तज्ञानमपरान्तज्ञानं
त्रियध्व-समता सुगतान शासने ।
परिच्छेद उक्तः स त्रिमण्डलस्य
एवं जिनो देशयि धर्मस्वामी ॥ ७७ ॥
चित्तव्यवस्थान एकाग्रता च
कायव्यवस्थान यथार्थभूमिः ।
ईर्यापथस्थो सद कालि रक्षणा
देशेति धर्मं पुरुषर्षभो मुनिः ॥ ७८ ॥

१ B सुसमाधिज्ञानम् for सुसमास°. २ A B गृहवाससमुत्सृज्य for गृहान् समुत्सृज्य. ३ A om. धर्मेषु … च. ४ AB विनयस्य for °यस्मि. ५ AB धर्मदेशनां for धर्मस्वामी. ६ A °व्यवस्थान एकाग्रता. ७ A रक्षण्य for रक्षणा.

हिरिश्च ओत्राप्यु प्रासादिकं च
 युक्तां गिरं भाषति लोकज्ञानम्।
प्रवृत्तिधर्मे प्रकृतिं च प्राणिनां
 देशेति धर्मं वरबोधिमग्र्याम् ॥ ७९ ॥
अनुग्रहं चो हिरिमोत्राप्यं च 5
 चित्तस्य चाकुशलता जुगुप्सना।
भूतस्यानुत्सर्गत पिण्डचर्यां
 देशेति धर्मं द्विपदानमुत्तमः ॥ ८० ॥
हिरिश्च ओत्राप्यु सदाचरेता
 गुरूणामभिवादन प्रत्युत्थानम्। 10
मानस्य चो निग्रह आदितैव
 एवं जिनो देशयि धर्मस्वामी ॥ ८१ ॥
चित्तसमुत्थानत चित्तकल्यता N 241
 ज्ञानप्रतीवेधु तथानुबोधम्।
अज्ञानपक्षस्य सदा विवर्जना 15
 देशेति धर्मान् वरबुद्धबोधिम् ॥ ८२ ॥
चित्तप्रवेशं च रुतस्य ज्ञानं
 निरुक्त्यवस्थान विनिश्चितार्थम्।
सर्वैर्व्यनर्थान सदा विवर्जनम्
 एवं जिनो देशयि धर्मस्वामी ॥ ८३ ॥ 20
संसङ्गता सत्पुरुषेहि नित्यं
 विवर्जना कापुरुषान चैव।
जिने प्रसादं सद प्रेमतां च
 एवं जिनो देशयि धर्म श्रेष्ठम् ॥ ८४ ॥
संकेतप्रज्ञप्तिव्याहारतां च 25
 संसारदुःखानि सदा विवर्जना।
अलाभि लाभे च असक्तभाव-
 मेवं जिनो देशयि धर्ममुत्तमम् ॥ ८५ ॥
सत्कार लब्ध्वा च न विस्मयेय्या N 242
 असत्कृतश्चापि भवेदुपेक्षकः। 30
मूलेऽपि वर्णं न कदाचि मोदिये
 इय देशना लोकहितस्य ईदृशी ॥ ८६ ॥

---

१ A हिरिं च ओत्राप्यु सवमना चरेत् for the line. २ A असक्तभावना for °भावम्.

अप्रत्यया अपगतप्रत्यया च
यो एक निर्देशु भवे गतीनाम् ॥ ५६ ॥

या सर्वधर्माण स्वभावमुद्रा
यः सूत्रकोटीनियुतान आगमः ।
5 यो बोधिसत्वान धनं निरुत्तरं
कच्चिज्जिनो भाषति तं समाधिम् ॥ ५७ ॥

N 235 कायस्य शुद्धी तथ वाच शुद्धी
चित्तस्य शुद्धिस्तथ दृष्टिशुद्धिः ।
आरम्बणानां समतिक्रमो यः
10 कच्चिज्जिनो भाषति तं समाधिम् ॥ ५८ ॥

अविप्रणाशः[1] पत्नधर्मदर्शनं
अष्टाङ्गिको मार्गवरस्य भावना ।
तथागतैः संगमु तीक्ष्णप्रज्ञता
सत्यप्रवेशः सद धर्मज्ञानम् ॥ ५९ ॥

15 स्कन्धपरिज्ञा समता च धातुना-
मपकर्षणं चायतनान सर्वशः ।
अनुत्पाद साक्षात्क्रियमवतारः
कच्चिज्जिनो भाषति तं समाधिम् ॥ ६० ॥

प्रतिसंविदा शान्त्यवतारज्ञानं
20 सर्वाक्षराणां च प्रभेद[2]ज्ञानम् ।
वस्तुनिवेशसमतिक्रमो यः
कच्चिज्जिनो भाषति तं समाधिम् ॥ ६१ ॥

घोषः परिज्ञाय प्रामोद्यलाभः
प्रीतिश्च मोती सुगतान[3] वर्णम् ।
N 236 25 आर्या गतिर्मार्दवता च उज्जुका
कच्चिज्जिनो भाषति तं समाधिम् ॥ ६२ ॥

ना जातु कुर्याद्भृकुटिं स सूरतः
सारिल्य माधुर्य स्मितं मुखं च ।
दृष्ट्वा च सत्वान्[4] प्रथमालपेति
30 कच्चिज्जिनो भाषति तं समाधिम् ॥ ६३ ॥

---

१ A om. sts 58–61. २ A प्रपमायसभ: for प्रभेद॰. ३ BC सुगतस्य for सुगतान. ४ A धर्मान् for सत्वान्.

अनालस्यता गौरवता गुरूणां
शुश्रूषणा वन्दन प्रेमदर्शना[1] ।
उपपत्ति संतुष्टित शुक्लता च
कश्चिज्जिनो भाषति तं समाधिम् ॥ ६४ ॥

आजीवशुद्धिस्तथ रण्यवासो
धूते स्थितानुस्मृतेरप्रमोषः ।
स्कन्धेषु कौशल्यमथापि धातुषु
कश्चिज्जिनो भाषति तं समाधिम् ॥ ६५ ॥ 5

आयतनकौशल्यमभिज्ञज्ञानं
क्लेशे[2]-अपकर्षण दान्तभूमि । 10
पृथुसर्वमन्त्राणमसात्वुच्छेदः
कश्चिज्जिनो भाषति तं समाधिम् ॥ ६६ ॥

समतिक्रमः सर्वभवगतीना
जातिस्मृति धर्मनिष्काङ्क्षता च ।
धर्मे च चित्तं श्रुत एषणा च
कश्चिज्जिनो भाषति तं समाधिम् ॥ ६७ ॥ 15

विशेषगामी सद भावनारति
आपत्ति कौशल्यत नि सृतो स्थित. ।
यत्र स्थितोऽनुशयिता जहाति
कश्चिज्जिनो भाषति तं समाधिम् ॥ ६८ ॥ 20

तीक्ष्णस्य ज्ञानस्य वरागमो यतो
अचालियो[3] शैलसमो अकम्पित[4] ।
अनिवर्तिताक्षण धारणीमुखं
कश्चिज्जिनो भाषति त समाधिम् ॥ ६९ ॥

शुक्लान धर्माण सदा गवेषणा
पापान धर्माण सदा विवर्जना ।
संक्लेशपक्षस्य सदा प्रचारु यो
कश्चिज्जिनो भाषति तं समाधिम् ॥ ७० ॥ 25

सर्वासु शिक्षासु गतिंगतो विदुः
समाध्यस्थानगतिंगतश्च । 30

---

१ A दर्शन for वन्दन २ A B क्लेशापकर्षण दान्तभूमि for the line ३ A अचालितो for °लियो. ४ A B अकम्पियः for °म्पित .

सत्वान चो आशयु ज्ञात्व चोदको
देशेति धर्मं वरबुद्धबोधौ ॥ ७१ ॥
विशेषज्ञानं उपपत्तिज्ञानं
अनन्तज्ञानं सुसमासज्ञानम् ।
5 सर्वगतीनां प्रतिसंधिज्ञानं
क्वचिज्जिनो भाषति तं समाधिम् ॥ ७२ ॥
गृहान् समुत्सृज्य प्रव्रज्यचित्तं
त्रैधातुके अनभिरती नत्नुग्रहः ।
चित्तस्य संप्रग्रहणं सहर्षणा
10 देशेति धर्मं द्विपदानमुत्तमः ॥ ७३ ॥
धर्मेषु चो नाभिनिवेश तायि
परिग्रहो धर्मवरे सदा च ।
N 230 कर्मविपाके च दृढाधिमुक्तिं
देशेति धर्मं द्विपदानमुत्तमः ॥ ७४ ॥
15 निर्नयस्मि कौशल्य विपाकज्ञानं
कलहं विवादान तथोपशान्तिः ।
अविग्रहं वाप्यविवादभूमिं
देशेति धर्मं द्विपदानमुत्तमः ॥ ७५ ॥
क्षान्तीसमादानमक्रोधस्थानं
20 विनिश्चये धर्मि सदा च कौशलम् ।
पदप्रभेदेषु च ज्ञानदर्शनं
देशेति धर्मं करुणां जनेत्वा ॥ ७६ ॥
पूर्वान्तज्ञानमपरान्तज्ञानं
त्रियध्वसमता सुगतान शासने ।
25 परिच्छेद उक्तः स त्रिमण्डलस्य
एवं जिनो देशयि धर्मस्वामी ॥ ७७ ॥
चित्तव्यवस्थान एकाग्रता च
कायव्यवस्थान यथार्थभूमिः ।
N 210 ईर्यापथस्थो सद कालि रक्षणा
30 देशेति धर्मं पुरुषर्षभो मुनिः ॥ ७८ ॥

१ B सुसमाधिज्ञानम् for सुसमास॰. २ A B गृहवासमुत्सृज्य for गृहान् समुत्सृत्य. ३ A om. कर्मविपाके च. ४ AB निनयस्य for ॰यस्मि. ५ AB धर्मदेशनां for धर्मस्वामी. ६ A ॰स्थानमभेद्यता for ॰स्थान एकाग्रता. ७ A रक्ष्णा for रक्षणा.

हिरिश्च ओत्राप्यु प्रासादिकं च
    युक्तां गिरं भाषति लोकनाथः।
प्रवृत्तिधर्मे प्रकृतिं च प्राणिनां
    देशेति धर्मे वरबोधिमग्र्याम् ॥ ७९ ॥
अनुग्रहं चो हिरिओत्राप्यं च 5
    चित्तस्य चाकुशलता जुगुप्सना।
धूतस्यानुत्सर्गत पिण्डचर्यां
    देशेति धर्मं द्विपदानमुत्तमः ॥ ८० ॥
हिरिश्च ओत्राप्यु सदाचरेता
    गुरूणामभिवादन प्रत्युत्थानम्। 10
मानस्य चो निग्रह आदितैव
    एवं जिनो देशयि धर्मस्वामी ॥ ८१ ॥
चित्तसमुत्थानत चित्तकल्पता N 241
    ज्ञानप्रतीवेधु तथानुबोधम्।
अज्ञानपक्षस्य सदा विवर्जना 15
    देशेति धर्मान् वरबुद्धबोधिम् ॥ ८२ ॥
चित्तप्रवेशं च रुतस्य ज्ञानं
    निरुक्त्यवस्थान विनिश्चितार्थम्।
सर्वेष्वनर्थान सदा विवर्जनम्
    एवं जिनो देशयि धर्मस्वामी ॥ ८३ ॥ 20
ससङ्गता सत्पुरुषेहि नित्यं
    विवर्जना कापुरुषान चैव।
जिने प्रसादं सद प्रेमतां च
    एवं जिनो देशयि धर्म श्रेष्ठम् ॥ ८४ ॥
संचेतप्रज्ञप्तिव्याहारतां च 25
    संसारदुःखानि सदा विवर्जना।
अलाभि लाभे च असक्तभाव-
    मेवं जिनो देशयि धर्ममुत्तमम् ॥ ८५ ॥
सत्कारु लब्ध्वा च न विस्मयेय्या N 242
    असत्कृतश्चापि भवेदुपेक्षकः। 30
भूतेऽपि वर्णे न कदाचि मोदिये
    इय देशना लोकहितस्य ईदृशी ॥ ८६ ॥

---

१ A हिरि च ओत्राप्यु सवासना चरेत् for the line. २ A असक्तभावना for °भावम्.

शीलस्य द्वारम्भि मार्गभावना
  प्रतिपत्ति-ओवाद-नयथ भद्रको ।
अनुशासनी अत्र चरित्व शासनी
  इयं जिने ईदृश आनुशासनी ॥ १०२ ॥

5 अनुलोमिकी क्षान्ति य बुद्धवर्णिता
  क्षान्तिस्थितो दोष विवर्जयेत ।
अज्ञान वर्जेय्य स्थिहित्व ज्ञाने
  इयं जिने ईदृश आनुशासनी ॥ १०३ ॥

[2]ज्ञानप्रतिष्ठा तथ योगभूमी
10 योगेश्वरी बोधयि प्रस्थितानाम् ।
निषेवणा सत्पुरुषाण नित्यं
  इयं जिने ईदृश आनुशासनी ॥ १०४ ॥

अयुक्तयोगीन सदा विवर्जना
  तथागतैर्भाषित बुद्धभूमि ।
15 अनुमोदिता सर्विहि पण्डितेहि
  इयं जिने ईदृश आनुशासनी ॥ १०५ ॥

N 247 बालैः प्रतिक्षिप्त [3]अज्ञातकेहि
  अभूमित्र पृथुश्रावकाणाम् ।
परिगृहीताः सद बोधिसत्त्वैः
20 इयं जिने ईदृश आनुशासनी ॥ १०६ ॥

तथागतेहि अनुबुद्धमेतं
  देवेहि चो सत्कृतु पूजितं च ।
अनुमोदितं कल्पसहस्रकोटिभिः
  कश्चिज्जिनो भाषति तं समाधिम् ॥ १०७ ॥

25 नागसहस्रेहि सदा [4]सुसत्कृतो
  सुपर्णयक्षेहि च किन्नरेहि ।
या भाषिता बोधिवरा जिनेभिः
  कश्चिज्जिनो भाषति तं समाधिम् ॥ १०८ ॥

पर्याप्त या नित्यु सुपण्डितेहि
30 धनं च श्रेष्ठं प्रवरं सुलभ्यम् ।

१ A om. st. 102 d and 103 a. २ A B om. st. 104. ३ A अज्ञानकेहि for अज्ञात°.
४ A नमस्कृते for सुसत्कृत.

निरामिषं ज्ञान चिकित्स उत्तमा
　यच्चिज्जिनो भाषति तं समाधिम् ॥ १०९ ॥
ज्ञानस्य कोषः प्रतिभानमक्षयं　　N 248
　सूत्रान्तकोटीन प्रवेश एषः ।
परिज्ञ त्रैधातुकि भूतज्ञानं
　यच्चिज्जिनो भाषति तं समाधिम् ॥ ११० ॥
नौका इयं देशित पारगामिनां
　नावा पि चो ओघगतान एषा ।
कीर्तिर्यशो वर्धति वर्णमाला
　येषामयं शान्त समाधि देशितः ॥ १११ ॥
प्रशंस एषा च तथागतानां
　स्तवश्च एषो पुरुषर्षभाणाम् ।
स्तव बोधिसत्त्वान नयश्च अक्षयो
　येही अयं शान्त समाधि देशितः ॥ ११२ ॥
मैत्री इयं दोषशमे प्रकाशिता
　उपेक्षियं कारुणिकान भूमिम् ।
आश्वासयन्तेष महाशयानां
　येषां श्रुतेनैव समाधि भाषितः ॥ ११३ ॥
प्रतिपत्तियं देशित सिंहनादिना-　　N 249
　मिमु बुद्धज्ञानस्य वरस्य आगमः ।
सर्वेष धर्माण स्वभावमुद्राः
　समाध्ययं देशितु नायकेहि ॥ ११४ ॥
सर्वज्ञज्ञानस्य च आहरित्रिमा
　चर्या इयं बोधयि प्रस्थितानाम् ।
वित्रासनं मारचमूय चापि
　समाध्ययं शान्त जिनेन देशितः ॥ ११५ ॥
त्रिधा इयं धर्मस्थितान तायिनां
　अमित्रमध्ये परमा च रक्षा ।
प्रत्यर्थिकानां सहधर्मनिग्रहः
　समाध्ययं शान्त जिनेन देशितः ॥ ११६ ॥

---

१ C भवति for वर्धति. २ After st. 115, C adds:
अनुबुद्धज्ञानस्य वरस्य आगमो सर्वेष धर्मान स्वभावमुद्रा ।
अनुत्पाद शान्त वरधर्ममुद्रा समाध्ययं देशित नायकेन ॥
३ B गाथिता; T seems to support भाषिता against A and C.

प्रतिभानभूमी इय संप्रकाशिता
बला विमोक्षा तथ इन्द्रियाणि ।
विशिष्ट अष्टादश बुद्धधर्माः
समाधि शान्तेम निषेवमाणाः ॥ ११७ ॥

दशान पर्येष्टि बलान भूता
पूर्वनिमित्तं पि च बुद्धज्ञाने ।
ये बुद्धधर्माः पुरुषोत्तमेन
प्रकाशिता लोकहितानुकम्पिना ॥ ११८ ॥

बुद्धान पुत्रेभिरयं प्रतीहितो
विमोक्षकामानयु मार्गु देशितः ।
प्रीतिश्च तस्मिन् सुगतात्मजानां
श्रुणित्विमं शान्त समाधि दुर्दृशम् ॥ ११९ ॥

या बुद्धज्ञानस्य च पारिपूरिता
यामेषते पण्डितु बोधिसत्त्वः ।
विशुद्धचित्तश्च शुचिर्निरङ्गणो
इमं निषेवेत समाधि शान्तम् ॥ १२० ॥

परिशुद्ध कायोऽस्य यथा जिनान
विमोक्षज्ञानं च विमुक्तिदर्शनम् ।
असंक्लिष्टः सद रागबन्धनैः
इमं निषेवेत समाधि भद्रकम् ॥ १२१ ॥

अभूमि दोषे विगमश्च मोहे
ज्ञानस्य चो आगमु मुक्तिमिच्छतः ।
विद्याय उत्पादु अविद्यनाशकम्
इमं निषेवेत समाधि शान्तम् ॥ १२२ ॥

विमुक्तिसाराणिय तृप्ति भाषिता
ध्यायीनयं शान्त समाधि देशितः ।
चक्षुश्च बुद्धानमनिन्दिताना-
मिमं निषेवेत समाधि शान्तम् ॥ १२३ ॥

अभिज्ञ एषा बहुक्षेत्रे दर्शिता
ऋद्धिश्च बुद्धान अनन्त दर्शिता ।
या धारणी सापि ततो न दुर्लभा
निषेवमाणस्य समाधिमेनम् ॥ १२४ ॥

1 B मनीन्द्रियाणां for अनिन्दितानाम्.

शान्तेन्द्रियस्यो इहे[1] स्थातु बोधये
   इदमधिष्ठानमनन्तदर्शितम् ।
सूक्ष्मं च ज्ञानं विपुलं विशुद्धं
   निषेवमाणस्य इमं[2] समाधिम् ॥ १२५ ॥                N 252

न बुध्यते नैव अयुक्तयोगै-                5
   र्विवर्तने सर्वसु अक्षराणाम् ।
न शक्यु घोषेण विजाननाय
   येनो अयं शान्त समाधि न श्रुतः ॥ १२६ ॥
ज्ञाते तु विज्ञेयु बोधिसत्त्वै-
   र्यथा च यं देशितु धर्मस्वामिना ।                10
प्रतिबुद्ध शान्तेहि अनिन्दितेहि
   इमं समाधिं प्रतिषेवमाणैः ॥ १२७ ॥

आरब्धवीर्येहि समुद्गृहीत-
   मुपस्थितं च सापि सदा सुधारितम् ।
दुःखक्षयो जातिनिरोधज्ञान-                15
   मिमं समाधिं प्रतिषेवमाणैः ॥ १२८ ॥

सर्वेण धर्माणम[3]जाति भाषिता
   एवं च सर्वासु भवगतीषु ।
ज्ञानाप्तु बुद्धान म[4]हाशयानां                N 253
   कश्चिज्जिनो भाषति तं समाधिम् ॥ १२९ ॥                20

तस्यो कुमारस्यिमि गाथ भा[5]षतो
   अष्टाशीतिनियुतसहस्र पूर्णाः ।
घोषानुगा क्षान्ति लभिंसु तत्र
   अविवर्तिकाये स्थितु बुद्धज्ञाने ॥ १३० ॥

दृढवलस्तम[6]वची कुमार-                25
   मद्यापि सो तिष्ठति लोकनाथः ।
पृच्छामि त्वं दारक एतमर्थं
   कुतस्त्वया एष श्रुतः समाधिः ॥ १३१ ॥
कुमारु राजन् [6]अवची शृणोहि
   दृष्टासि कोटीनियुतं जिनानाम् ।                30

---

१ A B अधिष्ठातु for इह स्थातु  २ A B समाधिमेताम् for इमं समाधिम्.  ३ B संक्रान्ति for अजाति. ४ B महायशानां for °शयानां.  ५ A B शृणोता for भाषतो.  ६ AB अवचो for °अवची.

अमत्सरी मोम्यहु नित्यकालं
त्यागस्य चो वर्ण सदा प्रभाषे।
आढ्यश्च भोमी धनवान् महात्मा
दुर्भिक्षकाले बहु भोमि दायकः॥ १४८॥

5 ये भिक्षु धारेन्ति इमं समाधिं
ये चापि वाचेन्ति य उद्दिशन्ति।
करोमि तेषां अहु पारिचर्यां
सर्वे च भेष्यन्ति नराणमुत्तमाः॥ १४९॥

कर्मणा तेनाहमनुत्तरेण
10 पश्यामि बुद्धान् बहु लोकनाथान्।
N 258 लभित्व प्रव्रज्य जिनानुशासने
भवामि नित्यं विदु धर्मभाणकः॥ १५०॥

धूताभियुक्तो अहु भोमि नित्यं
कान्तारमारण्य सदा निषेवी।
15 नाहारहेतोः कुहनां करोमि
संतुष्ट भोमी इतरेतरेण॥ १५१॥

अनीर्षुको भोम्यहु नित्यकालं
कुलेषु चाहं न भवामि निश्रितः।
कुलेषु सक्तस्य हि ईर्ष्य वर्धते
20 अनीर्ष्युकस्तुष्टि वनेषु विन्दमि॥ १५२॥

मैत्रीविहारी अहु भोमि नित्य-
माकुष्टु सन्ता न जनेमि क्रोधम्।
मैत्रीविहारिष्यमि सूरतस्य
चतुर्दिशं वर्धति वर्णमाल्य॥ १५३॥

25 अल्पेच्छु संतुष्टु भवामि नित्य-
मारण्यकश्चैव धुताभियुक्तः।
N 259 न चोत्सृजामी अहु पिण्डपातं
दृढं समाधान धुतेषु विन्दमि॥ १५४॥

आढ्यश्च भोमी मनसः प्रसादो
30 बहुप्रसादः सद बुद्धशासने।

---

१ A C तस्मि काले for नित्यकालं. २ A [illegible] बहु for अहु. ३ A B धर्मेण, C स कर्मणा for कर्मणा। ४ A B क्रोधम् for क्रोधम्. ५ A B सद सप्रसादे for मनसः प्रसादो.

प्रसाद बहु लप्स्यमि आनुशंसा
प्रासादिको भोमि अहीनइन्द्रियः ॥ १५५ ॥
यथैव भाषाम्यहु तत्र तिष्ठे
प्रतिपत्तिसारो अहु नित्यु भोमि ।
प्रतिपत्तिसारस्यिमि देवनागाः
कुर्वन्त्युपस्थानु प्रसन्नचित्ताः ॥ १५६ ॥ 5
गुणा इमे कीर्तित यावता मे
एते च अन्ये च बहू अनेके ।
ये शिक्षितव्याः सद पण्डितेन
यो इच्छती बुध्यितु बुद्धबोधिम् ॥ १५७ ॥ 10
स्मराम्यतो बहुलक दुष्कराणि
ये पूर्वकल्पे चरितान्यनेके ।
बहु पि दानीं भणितु न शक्यं
गच्छामि तावत् सुगतस्य अन्तिकम् ॥ १५८ ॥
श्रुतीक्ष्णप्रज्ञो विदु बोधिसत्त्वो 15 N 260
तस्मिन् क्षणे स्पर्शयि पञ्चभिज्ञा ।
ऋद्धीय सो गच्छि जिनस्य अन्तिके[२]
स प्राणिकोटीभिरशीतिभिः सह ॥ १५९ ॥
दृढबलो पारु उदग्र आसीत्
सार्धं तदा कोटिशतेहि पञ्चभिः । 20
उपसंक्रमी मूलु तथागतस्य
वन्दित्व पादौ पुरतो न्यषीदत् ॥ १६० ॥
अध्याशयं तस्य विदित्व राज्ञो
इमं समाधिं द्विपदेन्द्र देशयि ।
श्रुत्वा च सो पार्थिविमं समाधिं 25
उज्झित्व राज्यं निरपेक्षु प्रव्रजी ॥ १६१ ॥
स प्रव्रजित्वान इमं समाधिं
भावेति वाचेति प्रकाशयेति ।
स पञ्चभिः कल्पसहस्र पश्चात्
पद्मोत्तरो[३] नाम जिनो अभूषि ॥ १६२ ॥ 30
पञ्चिस्तदा कोटिशत अनूनका N 261
ये राज सार्धं उपसंक्रमी जिनान् ।

१ A B भोमि नित्यम् for नित्यु भोमि. २ A B अन्तिकम् for अन्तिके. ३ B पद्मोत्तमो for °त्तरो.

परम प्रियु मनापु पण्डितानां
भविष्यति चार्थपदं प्रभाषमाणः ।
N 265
ज्ञातु बहुजनस्य प्रज्ञवन्तो
इमु वरु शान्त समाधि भाषमाणः ॥ ७ ॥
5 लाभि परम श्रेष्ठ चीवराणां
शय्य निमन्त्रणमा(खा ?)द्यभोजनानाम् ।
भविष्यति सुकुमार दर्शनीयो
इमु वरु शान्त समाधि धारयन्तो ॥ ८ ॥
द्रक्ष्यति बहु बुद्ध लोकनाथान्
10 अतुलिय काहिति पूज नायकानाम् ।
न च भविष्यति तस्य अन्तरायो
इमु वरु शान्त समाधिमेषन्तो हि ॥ ९ ॥
भाषिष्यति पुरतः स्थित्व लोकनाथान्
सुरुचिर गाथशतेहि तुष्टचित्तः ।
15 न च भविष्यति तस्य जातु हानी
इमु वरु शान्त समाधि धारयित्वा ॥ १० ॥
स्थास्यति पुरतोऽस्य लोकनाथः
सुरुचिर लक्षण-कायु व्यञ्जनेभिः ।
न च भविष्यति तस्य ज्ञानहानी
20 इमु वरु शान्त समाधि धारयित्वा ॥ ११ ॥
N 266
न कदाचि भविष्यति दीनचित्तः
सतत भविष्यति आढ्यु नो दरिद्र ।
न च भविष्यति सङ्गृहीतचित्तो
इमु वरु शान्त समाधि धारयित्वा ॥ १२ ॥
25 न च भविष्यति वा अँक्षणेषु
महीपति मेष्यति राजचक्रवर्ती ।
सद भविष्यति राज्य तस्य क्षेमं
इमु वरु शान्त समाधि धारयित्वा ॥ १३ ॥
ज्ञातु विपुल नात्र संशयोऽस्ति
30 क्षपयितु कल्पशतेहि भाषमाणे ।

१ B om. the line. २ A भारयित्वा for धारयन्तो. ३ Mss. भविष्यति; T supports our reading ४ B व्यवस्यति for भविष्यति ५ A B (wrongly) भाषणेन

श्रुते इमु समाधि शान्तभूमी
 यथ उपदिष्ट तथा स्थिहेत धीरो ॥ १४ ॥
अपरिमित अनन्त कल्पकोट्यो
 दशबल तस्य भणेयुरथानुशासाम् ।
न च परिकीर्तिता कल्प भवेय्या 5
 यथ जलबिन्दु ग्रहीतु सागरातो ॥ १५ ॥
हर्षितु H कुमारु तस्मि काले N 267
 उत्थितु प्राञ्जलिको नमस्यमान ।
दशबलभिमुखो स्थितो उदग्रो
 गिरवराय उदानुदानयति ॥ १६ ॥ 10
अचिन्तियो महावीरो लोकनाथ प्रभंकर ।
यावन्तेमे नरेन्द्रेण अनुशासा प्रकाशिता ॥ १७ ॥
आख्याहि मे महावीर हितैषी अनुकम्पक ।
को नाम पश्चिमे काले इद सूत्र श्रुणिष्यति ॥ १८ ॥
तमेनमवदच्छास्ता कलविङ्करुतस्वर । 15
असङ्गज्ञानी भगवानिमा वाच प्रभाषते ॥ १९ ॥
कुमार शृणु भाषिष्ये प्रतिपत्तिमनुत्तराम् ।
यो धर्माननुशिक्षन्तो इद सूत्र श्रुणिष्यति ॥ २० ॥
पूजा कुर्वन् जिनेन्द्राणा बुद्धज्ञानगवेषक ।
मैत्रचित्त निषेवन्तो इद सूत्र श्रुणिष्यति ॥ २१ ॥ 20
धूतान् गुणाश्च सल्लेख्यान् गुणान् श्रेष्ठान् निषेवत ।
प्रतिपत्तौ स्थिहित्वा च इद सूत्र श्रुणिष्यति ॥ ॥ २२ ॥
न पापकारिणा हस्तादिद सूत्र श्रुणिष्यति । N 268
न येर्विरागित शील लोकनाथानमंतिके ॥ २३ ॥
सचारीण शठाणा येषा चित्तमलोलुपम् । 25
ेक्षिताना बुद्धेहि तेषा हस्ताच्छुणिष्यति ॥ २४ ॥
पुरिमका बुद्धा लोकनाथा उपस्थिता ।
ादिद सूत्रं पश्चात्काले श्रुणिष्यति ॥ २५ ॥
ु जातीषु अभूवन्नन्यतीर्थिका ।
सूत्रातं सौमनस्य न मेष्यति ॥ २६ ॥ 30

१ इमु २ B शान्तसमाधिभूमि for समाधि शान्तभूमि ३ A B न च
e ४ C °प्रवराय for °वराय ५ A प्रभंकर° for प्रभा° ६ A B
अलोलुपम्

ते चापि श्रुत्वैव समाधिमेतं
बुद्धा उदग्रास्तद प्रव्रजिंसु ॥ १६३ ॥
ते प्रव्रजित्वान इमं समाधिं
धारेंसु वाचेंसु प्रकाशयिंसु ।
5 षष्टीन कल्पानि नयुतान अत्यया
स्पृशिंसु बोधिं वरमेककल्पे ॥ १६४ ॥
अनन्तज्ञानोत्तरनामधेया
अभूषि बुद्धा नरदेवपूजिताः ।
तदेकमेके द्विपदानमुत्तमो
10 मोचेन्ति सत्त्वान्यथ गङ्गवालिकाः ॥ १६५ ॥
शीरिबलो राजु अहं अभूषि
इमां चरन्तो वरबोधिचारिकाम् ।
N 252 ये ममे पुत्राः शत पञ्च आसन्
इममेव एते अनुधर्मपार्थीः ॥ १६६ ॥
15 एवं मया कल्पसहस्रकोटयो
आरब्धवीर्येण अतन्द्रितेन ।
समाधि पर्येष्ट अयं विशुद्धः
समुदानयन्तेति तमग्रबोधिम् ॥ १६७ ॥
कुमार तस्माद्धि ये बोधिसत्त्वा
20 आकाङ्क्षते एतु समाधिमेषितुम् ।
आरब्धवीर्यो निरपेक्षु जीविते
मम कुमारा अनुशिक्षते सदा ॥ १६८ ॥

इति श्रीसमाधिराजे बहुबुद्धनिर्हारसमाधिमुखपरिवर्तो नाम सप्तदशः ॥

१ A B तवेकमेको for तदेकमेके. २ A B शीरीबलो नाम अभूषि राजा for the line. ३ B ममु for मम. ४ After st. 166, A B T add:

जननी च या आसि अभूत मह्यं या मायदेवी तहि तस्मि काले ।
चतुर्दशो कोटिसहस्र पूर्णा ये धीतरो या मम सर्वि निर्वृताः ॥
दृढबलो नाम यदासि राजा प्रभूतकोशो बलचक्रवर्ती ।
शुद्धोदनो राज स तस्मि काले पिता अभूषी मम तत्र तत्र ॥

५ A B समाधि भाषितुम् for °धिमेषितुम्. ६ B चतुर्दशः for सप्तदशः.

## समाध्यनुपरिन्दनपरिवर्तः ।



तत्र भगवांश्चन्द्रप्रभकुमारमामन्त्रयते स्म — तस्मात् तर्हि कुमार यो बोधिसत्त्वो महासत्त्व इमं समाधिमुद्ग्रहीष्यति पर्यवाप्स्यति धारयिष्यति वाचयिष्यति प्रवर्तयिष्यति उद्देक्ष्यति स्वाध्यास्यति परेभ्यश्च विस्तरेण संप्रकाशयिष्यति, तेन भावनायोगमनुयुक्तेन च भवितव्यम् । तस्यैतं प्रतिपद्यमानस्य चत्वारो गुणानुशंसाः प्रतिकाङ्क्षितव्याः । कतमे चत्वारः? यदुत अनभिभूतो भविष्यति पुण्यैः । अनवमर्दनीयो भविष्यति प्रत्यर्थिकैः । अप्रमेयो भविष्यति ज्ञानेन । अनन्तश्च भविष्यति प्रतिमानेन । यो हि कश्चित् कुमार बोधिसत्त्वो महासत्त्व इमं समाधिमुद्ग्रहीष्यति पर्यवाप्स्यति धारयिष्यति वाचयिष्यति प्रवर्तयिष्यति उद्देक्ष्यति स्वाध्यास्यति परेभ्यश्च विस्तरेण संप्रकाशयिष्यति, तस्येमे चत्वारो गुणानुशंसाः प्रतिकाङ्क्षितव्याः ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत— 10

अनाभिभूतः पुण्येहि नित्यकालं भविष्यति ।
समाधिं शान्तभावेन सर्वबुद्धान गोचरम् ॥ १ ॥



पुण्येहि रक्षितः शूरो नित्यकालं भविष्यति ।
चरन् स परमां शुद्धां विशिष्टां बोधिचारिकाम् ॥ २ ॥

नास्य प्रत्यर्थिको जातु विहेठां कश्चित् करिष्यति ।
परिगृहीतो बुद्धेहि नित्यकालं भविष्यति ॥ ३ ॥ 15

अप्रमेयश्च ज्ञानेन नित्यकालं भविष्यति ।
अनन्तः प्रतिभानेन धारेन्त. शान्तिमां गतिम् ॥ ४ ॥

सततमनभिभूतपुण्यस्कन्धो
भविष्यति श्रेष्ठतरं तु बोधिचर्याम् ।
न भविष्यति प्रत्यर्थिकान धृष्यो 20
इमु वह शान्त समाधि धारयित्वा ॥ ५ ॥

ज्ञानु विपुल तस्य भोति तीक्ष्णं
तथ प्रतिभानमनन्त भक्षु शुद्धम् ।
भविष्यति सद तस्य पण्डितस्य
स्मृतिबलमेव च धारणीबलं च ॥ ६ ॥ 25

---

१ A B भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्र॰ for भगवांश्चन्द्रप्रभकुमारमामन्त्र॰. २ B om. पर्यवाप्स्यति. A आप्नाक्षति for उद्ग्रहीष्यति पर्यवाप्स्यति. ३ A B पर्यवाप्स्यति for प्रवर्तयिष्यति. ४ B देशयिष्यति for उद्देक्ष्यति. ५ A B om. भावनायोग....upto प्रतिपद्यमानस्य. ६ A B गुणाः for गुणानुशंसा. ७ A अनवदर्शनीयो for ॰मर्दनीयो. ८ A B शान्त धारयित्वा for शान्तभावेन. ९ C वे विशिष्टां for ॰चारिकाम्. १० A C शान्तमायतिम् for शान्तिमां गतिम्. ११ A पचस्कन्धो for पुण्य॰. १२ C ध्यो for पुण्यो. १३ C देशयित्वा. १४ प्रणिधानम् for प्रतिमानम्.

मम च प्रव्रजित्वेह शासने जीविकार्थिकाः।
लाभसत्काराभिभूता अन्यमन्यं प्रतिक्षिपि ॥ २७ ॥
अध्योषिता परस्त्रीषु बहु भिक्षु असंयता।
लाभकामाश्च दुःशीला इदं सूत्रं न श्रद्दधी ॥ २८ ॥
पुण्यानुप्राप्ता बुद्धेषु[1] ध्यानप्राप्त्याप्यनर्थिकाः।
निश्रिताश्चात्मसंज्ञायामिदं सूत्रं न श्रद्दधे ॥ २९ ॥
लौकिका ध्यानफलसंज्ञी ऽमेष्यते कालि पश्चिमे।
अर्हत्पिण्डं च ते भुक्त्वा बुद्धबोधिं प्रतिक्षिपि ॥ ३० ॥
N 269 यैथैव[2] जम्बुद्वीपस्मि भिन्देयात् सर्व चेतिया।
यश्च प्रतिक्षिपेत् सूत्रमिदं पापं विशिष्यते ॥ ३१ ॥
यश्चार्हतो निहनेय्या[3] यथा गङ्गाय वालुकाः।
यश्च प्रतिक्षिपेत् सूत्रमिदं पापं विशिष्यते ॥ ३२ ॥
क उत्सहन्ति युष्माकं पश्चिमे कालि दारुणे।
सद्धर्म लोके वर्तन्ते इदं सूत्रं प्रकाशितुम् ॥ ३३ ॥
रोदन्तो उत्थितस्तत्र कुमारो जिनमब्रवीत्।
सिंहनादं नदत्येवं पुत्रो[4] बुद्धस्य औरसः ॥ ३४ ॥
अहं[5] निर्वृते संबुद्धे पश्चिमे कालि दारुणे।
सूत्रं वैस्तारिकं कुर्यां[6] त्यजित्वा काय जीवितम् ॥ ३५ ॥
सहिष्याम्यत्र[7] बालनामभूता परिभाषणाम्।
आक्रोशांस्तर्जनां चैव अधिवासिस्ये नायक ॥ ३६ ॥
क्षमेयं पापकं कर्म यन्मया पुरिमे कृतम्।
अन्येषु बोधिसत्त्वेषु व्यापादो जनितो मया ॥ ३७ ॥
स्थपेत्व पाणि मूर्धेस्मि बुद्धः काञ्चनसंनिभम्।
शास्ता चन्द्रप्रभं प्राह मञ्जुघोषस्तथागत ॥ ३८ ॥
N 270 करोमि ते अधिष्ठानं कुमार कालि पश्चिमे।
न ब्रह्मचर्यान्तरायो जीवितस्य च भेष्यति ॥ ३९ ॥
अन्ये चाष्टौ शतान्यत्र उत्थिता धर्मधारकाः[8]।
वयं हि पश्चिमे काले अस्य सूत्रस्य धारकाः ॥ ४० ॥
देवनागान यक्षाण अशीतिकोट्युपस्थिता।
अन्ये च नयुताः षष्टि वन्दन्ते लोकनायकम् ॥ ४१ ॥

---

१ A बुद्धेषि; B बुद्धेहि for बुद्धेषु. २ A B यथैव for यथैव. ३ A घातेय्या; B घाटेया for निहनेय्या. ४ B पुत्रा बुद्धस्य औरसा for the pāda. ५ A B अहंनिर्वृति for अहं निर्वृते. ६ C कार्ये for कुर्यां. ७ C सहिस्ये मेनसाक्षनाम् for the pāda. ८ AB धर्मभाणकाः for °धारकाः.

वयमिमेषां भिक्षूणा य इमे अद्य उत्थिता ।
तस्मिंश्च पश्चिमे काले रक्षा काहाम नायक ॥ ४२ ॥
अस्मिन् सूत्रे प्रभाष्यन्ते[1] बुद्धक्षेत्रा प्रकम्पिता ।
यथा वालुक गङ्गाया अधिष्ठानेन शास्तुन ॥ ४३ ॥
ये च प्रकम्पिता क्षेत्रा सर्वेषु बुद्धनिर्मिता ।    5
प्रेषिता लोकनाथेन ये हि धर्मं प्रकाशिता ॥ ४४ ॥
एकैकस्माच्च क्षेत्रात सत्त्वकोटयो अचिन्तिया[2] ।
एतं धर्मं तदा श्रुत्वा बुद्धज्ञाने प्रतिष्ठिता ॥ ४५ ॥
इतश्च बुद्धक्षेत्रातो नवतिर्देवकोटिय[3] ।
बोधिचित्त समुत्पाद्य बुद्ध पुष्पैरवाकिरन् ॥ ४६ ॥    10
ते व्याकृता नरेन्द्रेण कल्पकोटेरशीतिभि ।    N 271
सर्वेऽप्येकत्र कल्पेऽस्मिन् भविष्यन्ति विनायका ॥ ४७ ॥
भिक्षुभिक्षुणिकाश्चैव उपासकउपासिका ।
षट्सप्तति प्राणकोट्यो येहि सूत्रमिद श्रुतम् ॥ ४८ ॥
तेऽपि व्याकृत बुद्धेन द्रक्ष्यन्ते लोकनायकान् ।    15
यथा वालुक गङ्गायाश्चरन्तो बोधिचारिकाम्[4] ॥ ४९ ॥
सर्वेषां पूज काहिन्ति बुद्धज्ञानगवेषका ।
तत्र तत्र श्रुणिष्यन्ति इद सूत्र निरुत्तरम् ॥ ५० ॥
अशीत्या कल्पकोटीभि भेष्यन्ते लोकनायका ।
सर्वे एकत्र कल्पेऽस्मिं हितैषी अनुकम्पका[5] ॥ ५१ ॥    20
मैत्रेयस्य च बुद्धस्य पूजा कृत्वा निरुत्तराम् ।
सद्धर्मं श्रेष्ठ धारित्वा गमिष्यन्ति सुखावतीम् ॥ ५२ ॥
यत्रासौ विरजो बुद्धो अमितायुस्तथागत[6] ।
तस्य पूजा करिष्यन्ति अग्रबोधीय कारणात् ॥ ५३ ॥
त्रिसप्ततिरसंख्येया कल्पा ये च अनागता ।    25
न दुर्गतिं गमिष्यन्ति श्रुत्वेद सूत्रमुत्तमम् ॥ ५४ ॥
ये केचित् पश्चिमे काले श्रोष्यन्ते सूत्रमुत्तमम् ।    N 272
अश्रुपात च काहिन्ति सर्वेस्ते सत्कृतो ह्यहम् ॥ ५५ ॥
आरोचयामि सर्वेषां यावन्त पुरत स्थिता ।
परिन्दामि इमा बोधिं या मे कृच्छ्रेण स्पर्शिता ॥ ५६ ॥    30

इति श्रीसमाधिराजे समाध्यनुपरिन्दना नाम परिवर्तोऽष्टादश[7] ।

---

१ AB प्रकाशन्ते for प्रभाष्यन्ते २ B अचिंत्तिया for अचिन्तिया ३ AB सत्त्वकोट्य for देवकोटिय ४ C for °बोधिके मार्गितो चारिकाम् ५ A.B T om, st 51. ६ B अमिताभ for अमितायु ७ B पञ्चदशम for अष्टादश

## १९

## *अचिन्त्यबुद्धधर्मनिर्देशपरिवर्तः।

N 273 [1]तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेनेम[2] समाधिमाकाङ्क्षता अचिन्त्यबुद्धधर्मनिर्देशकुशलेन भवितव्यम्। अचिन्त्यबुद्धधर्मपरिपृच्छकजातिकेन भवितव्यम्। [3]अचिन्त्यबुद्धधर्माधिमुक्तिकेन भवितव्यम्[4]। अचिन्त्यबुद्धधर्मपर्येषणाकुशलेन भवितव्यम्। अचिन्त्यांश्च बुद्धधर्मान् श्रुत्वा नोत्त्रसितव्यं न संत्रसितव्यं न संत्रासमापत्तव्यम्। एवमुक्ते चन्द्रप्रभः

5 कुमारभूतो भगवन्तमेतदवोचत्—यथा कथं भगवन् बोधिसत्त्वो महासत्त्वः अचिन्त्यबुद्धधर्मनिर्देशकुशलो भवति, अचिन्त्यबुद्धधर्मपरिपृच्छाकुशलश्च, अचिन्त्यबुद्धधर्माधिमुक्तश्च? अचिन्त्यबुद्धधर्मपर्येषणाकुशलश्च भवति, अचिन्त्यांश्च बुद्धधर्मान् श्रुत्वा नोत्त्रस्यति न संत्रस्यति न N 274 संत्रासमापद्यते[5]?

तेन खलु पुनः समयेन[6] पञ्चशिखो नाम गन्धर्वपुत्रः पञ्चभिस्तूर्यशतैः सार्धं गगनतलादव-

10 तीर्य भगवतः पुरतः स्थितोऽभूदुपस्थानपरिचर्यायै। अथ खलु पञ्चशिखस्य गन्धर्वपुत्रस्यैतद-

N 275 भवत्—यन्न्वहं यथैव देवानां त्रायस्त्रिंशानां शक्रस्य च देवानामिन्द्रस्य सुधर्मायां देवसभायामुपस्थानपरिचर्यां करोमि, संगीतिं संप्रयोजयामि, तथैवाद्य देवातिदेवस्यापि तथागतस्यार्हतः सम्यक्संबुद्धस्य पूजायै संगीतिं संप्रयोजयेयम्॥

अथ खलु पञ्चशिखो गन्धर्वपुत्रस्तैः पञ्चभिस्तूर्यशतैस्तैश्च पञ्चमात्रैर्गन्धर्वपुत्रशतैः

15 सार्धमेकस्वरसंगीतिसंप्रयुक्तैस्तूर्यसंगीतिभिर्वैडूर्यदण्डां वीणामादाय[7] भगवतः पुरतो वादयामास। अथ खलु भगवत एतदभूद्—यन्न्वहं तथारूपमृद्ध्यभिसंस्कारमभिसंस्कुर्यां यथारूपेण ऋद्ध्यभिसंस्कारेणाभिसंस्कृतेन चन्द्रप्रभः कुमारभूतोऽचिन्त्यबुद्धधर्मनिर्व्याप्तिकौशल्यमधिगच्छेत्, सर्वधर्मस्वभावसमताविपञ्चिताच्च समाधेर्न चलेत्। पञ्चशिखस्य च गन्धर्वपुत्रस्य तन्त्रीस्वरगीतिस्वरकौशल्यमुपदिशेयम्॥

20 अथ खलु भगवांस्तथारूपमृद्ध्यभिसंस्कारमभिसंस्करोति स्म, यत्तेभ्यः पञ्चभ्यस्तूर्यशतेभ्यः संप्रयुक्तेभ्यः प्रवादितेभ्यो[8] यथानुकम्प्योपसंहृत[9] शब्दो निश्चरति धर्मप्रतिसंयुक्तः। इमाश्च बुद्ध[10]धर्मनिर्व्याप्तिगाथा निश्चरन्ति बुद्धानुभावेन—

N 276 एकहि वालपथे बहुबुद्धा
यात्तिक वालिक गङ्गनदीये।

---

* This chapter has been edited by Régamey, Warsaw, 1939

१ Before तस्मात् AB adds अथ (B तत्र) खलु भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म २ AB इमान् सर्वधर्मस्वभावसमताविपञ्चितात् समाधेरचिन्त्यानप्रमेयान् गुणानुशंसनिर्हारपदान् श्रुत्वा नोत्त्रसितुकामेन न संत्रसितुकामेन न संत्रासमापत्तुकामेन for इमं समाधिमाकाङ्क्षता ३ AB om this sentence ४ After भवितव्यम् AB add अचिन्त्यबुद्धधर्मपरिपृच्छाकुशलेन भवितव्यम् ५ After आपद्यते, AB read a passage given in App I (No 20) ६ After समयेन AB add गृध्रकूटे पर्वते भगवत सागरोपमायां पर्षदि धर्मं देशयत ७ A B सार्धमेकस्वरसंप्रयुक्तैर्वैडूर्यदण्डां वीणां स्वयमादाय for तैश्च मादाय ८ A B संप्रवादितेभ्यो यथाचिन्त्यार्थोपसंहित for संप्रयुक्तेभ्य °पसंहृत ९ A B धर्मता, for धर्म°. १० A B अचिन्त्यबुद्ध° for बुद्ध°.

क्षेत्र तास्ति तेष जिनानां
    ते च विलक्षण ते विसभागाः ॥ १ ॥
पञ्चगतीगत बालपथस्मिन्
    नैरयिका पि च तिर्यगताश्च ।
ते यमलौकिक देवमनुष्या                                                    5
    नापि च संकरु नो चे उपीडो ॥ २ ॥
तत्र पदे सशराः ससमुद्राः
    सर्व नदी तथ उत्स तडागाः ।
नो पि च संकरु नो च उपीडो
    एवमचिन्तियु धर्म जिनानाम् ॥ ३ ॥                                        10
तत्र पदेऽपि च पर्वत नेके
    चक्रवाल अपि मेरु सुमेरु ।
ये मुचिलिन्द महामुचिलिन्द
    विन्ध्यय गृध्रकूटो हिमवांश्च ॥ ४ ॥
तत्र पदे निरयाश्च सुघोरा-                                                15    N 277
    स्तपन प्रतापन आनभिरम्याः ।
तत्र च ये निरये उपपन्ना
    वेदन ते पि दुखां अनुमोन्ति ॥ ५ ॥
तत्र पदेऽपि च देवविमाना
    द्वादशयोजन ते रमणीयाः ।                                                20
तेषु बहू मरुतान सहस्रा
    दिव्यरतीषु सुखान्यनुभोन्ति ॥ ६ ॥
तत्र पदे च बुद्धान उत्पादो
    शासनु लोकविदून श्लेति ।
तं च न पश्यति ज्ञानविहीनो                                                  25
    येन न शोधित चर्य विशुद्धा ॥ ७ ॥
तत्र पदेऽपि च धर्म निरुद्धो
    निर्वृतु नायकु श्रूयति शब्दः ।
तत्र पदेऽपि च केचि शृणोन्ति
    तिष्ठति नायकु भाषति धर्मम् ॥ ८ ॥                                        30
तत्र पदेऽपि च केषचिदायु-
    र्वर्ष अचिन्तिय वर्तति संज्ञा ।

1 C न च उत्सतडागा for नो च उपीडो.

N 278 तत्र पदेऽपि वा काल्गु करोन्ति
नो चिरु जीवति श्रूयति शब्दः ॥ ९ ॥
तत्र पदेऽपि च केषचि संज्ञा
दृष्टु तथागतु पूजितु बुद्धो ।
5 तोषितु मानसु संज्ञग्रहेण
नो पि च पूजितु नो च उपक्रो ॥ १० ॥
स्वेस्मि गृहे सुपिनेव मनुष्यो
कामगुणेषु रतीरनुभूय ।
स प्रतिबुद्धु न पश्यति कामां-
10 स्तत्र प्रजानति सो सुपिनो ति ॥ ११ ॥
यत् तथ दृष्टु श्रुत मत ज्ञातं
सर्वमिदं वितथं सुपिनो वा ।
यस्तु भवेत समाधिय लाभी
सो इमु जानति धर्मस्वभावान् ॥ १२ ॥
15 सुसुखिताः सद ते नर लोके
येष प्रियाप्रियु नास्ति कहिंचित् ।
N 279 ये वनकन्दरकेऽभिरमन्ति
श्रामणकं सुसुखं अनुभोन्ति ॥ १३ ॥
येष ममापि तु नास्ति कहिंचिद्
20 येष परिग्रहु सर्वशु नास्ति ।
खड्गसमा विचरन्तिमु लोके[3]
ते गगने पवनेव व्रजन्ति ॥ १४ ॥
भावितु मार्ग प्रवर्तितु ज्ञानं
शून्यक धर्म निरात्मतु सर्वे ।
25 येन विभावित भोन्तिमि धर्मा-
स्तस्य भवेत् प्रतिभानमनन्तम् ॥ १५ ॥
सुसुखिता वत ते नर लोके
येष न सज्जति मानसु लोके ।
वायुसमं सद तेष्विह चित्तं
30 नो च प्रियाप्रियु विचति सक्तो ॥ १६ ॥

१ AB च for वा २ A स्वस्ति for स्वस्मि. ३ AB लोक for लोके. ४ AB निरात्मक for निरात्मतु.

अप्रियु ये दुखितेहि निवासो
　ये हि प्रिया दुखि तेहि वियोगो ।
अन्त उभे अपि एति विहित्वा
　ते सुखिता नर ये रत धर्मे ॥ १७ ॥
यो अनुनीयति शृणिमि धर्मान्　　5　N 230
　स प्रतिहन्यति शुत्व अधर्मम् ।
सो मदमानहतो विपरीतो
　मानवशेन दुखि अनुभोति ॥ १८ ॥
ये समताय प्रतिष्ठित भोन्ति
　नित्यमनुन्नता नावनताश्च ।　　10
ये प्रियतोऽप्रियतश्च सुमुक्ता-
　स्ते सद मुक्तमना विहरन्ति ॥ १९ ॥
शीले प्रतिष्ठितु सुपरिशुद्धे
　ध्याने प्रतिष्ठितु नित्यमचिन्त्ये ।
ये वनकन्दरि शान्ति रमन्ते　　15
　तेष न विद्यति धीमति जातु ॥ २० ॥
ये च पुनर्वितथे प्रतिपन्नाः
　कामगुणेषु रताः सद बालाः ।
गृद्ध यथा कुणपेष्वधिमुक्ता
　नित्यवशानुगता नमुचिस्य ॥ २१ ॥　　20

अस्मिन् खलु पुनर्गाथाभिनिर्हारे भाष्यमाणे चन्द्रप्रभः कुमारभूतः अचिन्त्येषु बुद्धधर्मेषु गम्भीरनिध्यप्तिनिर्देशकौशल्यमनुप्राप्तः, सूत्रान्तनिर्हारावभागं च प्रतिलब्धवान् । पञ्चशिखस्य च गन्धर्वपुत्रस्य घोषानुगायाः क्षान्तेः प्रतिलम्भोऽभूत् । अप्रमेयाणां च सत्त्वानां देवमानुषिकायाः प्रजाया अनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पन्नानि । अप्रमेयाणां च सत्त्वानामर्थः कृतोऽभूत् ॥　　N 231

इति श्रीसमाधिराजे अचिन्त्यबुद्धधर्मनिर्देशपरिवर्तो नामोनविंशतितमः ॥　　25

## पूर्वयोगपरिवर्तः ॥

N 287 [1] आसि पूर्वमिह जम्बुसाह्वये
अप्रमत्त दुभि श्रेष्ठिदारकौ ।
प्रव्रजित्व सुगतस्य शासने
उपशान्त वनषण्डमाश्रितौ ॥ १ ॥

5 ऋद्धिमन्त चतुर्ध्यानलाभिनौ
काव्यशास्त्रकुशलौ सुशिक्षितौ [2] ।
अन्तरिक्षपदभूमिकोविदौ
ते असक्त गगने व्रजन्ति च ॥ २ ॥

N 288 ते च तत्र वनषण्डि शीतले
10 नानपुष्पभरिते मनोरमे ।
नानपक्षिद्विजसंघसेविते
अन्यमन्य कथ सम्प्रयोजिते ॥ ३ ॥

तेन राज मृगया अटन्तकः
शब्द श्रुत्व वनु स उपागमी ।
15 दृष्ट्व पार्थिव तथ धर्मभाणकौ
तेषु प्रेम परम उपस्थिहि ॥ ४ ॥

तेहि सार्धु कथ आनुलोमिकी
कृत्व राजु पुरतो निषीदि सो ।
तस्य राज्ञ बल्काय नन्तको
20 पष्टिकोटिनियुतान्युपगमी ॥ ५ ॥

एकमेकु तेषु धर्मभाणको
राजमब्रवी शृणोहि क्षत्रिया ।
बुद्धपादु परम सुदुर्लभो
अप्रमत्तु सद भोहि पार्थिव ॥ ६ ॥

N 289 25 आयु गच्छति सदानवस्थित
गिरिनदीय सलिलेव [3] शीघ्रगम् ।
व्याधिशोकजरपीडितस्य ते
नास्ति त्राणु यथ कर्म भद्रकम् ॥ ७ ॥

---

१ Before आसि AB (C missing) read a passage given in App. I. (No. 23)
२ A B विचक्षणौ for सुशिक्षितौ ३ A सलिलं च for सलिलेव

धर्मपालु मम राजकुञ्जरा
　　रक्षिमं दशबलान शासनम् ।
क्षीण कालि परमे सुदारुणे
　　धर्मभाणि स्थिहि राजकुञ्जर ॥ ८ ॥

एव ते बहुप्रकार पण्डिता
　　ओवदन्ति तद तं नराधिपम् ।　　5
सार्धु पश्चिमितेहि पार्थिवो
　　बोधिचित्तमुदपादयत्तदा ॥ ९ ॥

श्रुत्व धर्म तद राजकुञ्जरः
　　सूत्रानखिलान भाषतो ।　　10
प्रीतिजात सुमना उदग्रको
　　वन्द पाद शिरसाय प्रक्रमी ॥ १० ॥

तस्य राज्ञ बहवोऽन्यभिक्षवो
　　लाभकाम प्रविशिन्तु तत् कुलम् ।
तेष दृष्ट चरिया न तादृशी　　15　N 293
　　तेषु राज न तथा सगौरवम् ॥ ११ ॥

तच्च शासनमतीतशास्तुकं[1]
　　पश्चिमं च तद वर्षु वर्तते ।
जम्बुद्वीपि सुपरित्तभाजना
　　प्रादुर्भूत बहवो असंयताः ॥ १२ ॥　　20

उत्थ लुब्ध बहु तत्र भिक्षवो
　　लाभकाम उपलम्भदृष्टिकाः ।
विप्रनष्ट सुगतस्य शासनाद्
　　ग्राहयिंसु बहुलं तदा नृपम् ॥ १३ ॥

घातयेति इमि धर्मभाणकी　　25　N 294
　　ये उच्छेदु प्रवदन्ति तीर्थिकाः[2] ।
दीर्घचारिक समादपेन्ति ते
　　निर्वृतीय न ते किंचि दर्शिका ॥ १४ ॥

कर्म नश्यति विपाकु नश्यति
　　स्कन्ध नास्तीति वदन्ति कुहकाः ।　　30

---

१ A B अतीतशास्तृक for ° शास्तुकं　२ C ये उच्छेदप्रतिपन्न पार्थिवाः

द्रक्ष्यथा दशदिशो तथागतान्
शान्तचित्त वृषभेन्द्रलोचनान् ।
सर्वलोकशरण परायण
धर्मवर्षु जगि उत्सृजिष्यथो ॥ ३० ॥

इति श्रीसमाधिराजे पूर्वयोगपरिवर्तो नाम एकविंशतितम ॥

१ After this stanza AR add the following
सिंह कुमार दुवि धर्मभाणकौ न एव ब्रह्मभिहान्य ते भूत् ।
दीपंकरस्तत्र अभूषि एको द्वितीयु चाहं तद धर्मभाणक ॥
मैत्रेयु राजु अभू तस्मि काले येन श्रुतो धर्म स आनुलोमिकीम् ।
॥

## २२

## ॥ तथागतकायनिर्देशपरिवर्तः[*] ॥

अथ खलु भगवांश्चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म–तस्मात् तर्हि कुमार बोधिसत्त्वेन (N 296) महासत्त्वेन कायेऽनध्यवसितेन जीविते निरपेक्षेण भवितव्यम् । तत् कस्य हेतोः? कायजीविताध्यवसानहेतोर्हि कुमार अकुशलधर्माभिसंस्कारो भवति । तस्मात्तर्हि कुमार बोधिसत्त्वेन (N 297) महासत्त्वेन न रूपकायतस्तथागतः प्रज्ञातव्यः । तत् कस्य हेतोः? धर्मकाया हि बुद्धा भगवन्तो धर्मकायप्रभाविताश्च न रूपकायप्रभाविताः । तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन तथागतकायं प्रार्थयितुकामेन तथागतकायं ज्ञातुकामेन अयं समाधिरुद्ग्रहीतव्यः पर्यवाप्तव्यो धारयितव्यो वाचयितव्यः प्रवर्तयितव्यः उद्देष्टव्यः स्वाध्यातव्यो वाचयितव्यो भावनायोगमनुयुक्तेन भवितव्यम् परेभ्यश्च विस्तरेण संप्रकाशयितव्यः । तत्र कुमार तथागतस्य कायः शतपुण्यनिर्जातया बुद्धयाने- नार्थनिर्देशो धर्मनिर्जातः आनिमित्तः सर्वनिमित्तापगतो गम्भीरः अप्रमाणः अप्रमाणधर्मः आनिमित्तस्वभावः सर्वनिमित्तविभावितः । अचलोऽप्रतिष्ठितोऽत्यन्ताकाशस्वभावोऽदृश्यश्चक्षुःपथसमतिक्रान्तो धर्मकायः प्रज्ञातव्यः । अचिन्त्यः चित्तभूमिविगतः सुखदुःखानिप्रकम्प्यः सर्वप्रपञ्चसमतिक्रान्तोऽनिर्देश्योऽनिकेतो बुद्धज्ञानं प्रार्थयितुकामाना घोषपथसमतिक्रान्तः संसारो रागसमतिक्रान्तः (N 298) अभेद्यो, दोषपथसमतिक्रान्तो दृढो मोहपथसमतिक्रान्तो निर्दिष्टः । शून्यतानिर्देशेन अजातो जातिसमतिक्रान्तः अनास्रवः विपाकसमतिक्रान्तः नित्यो व्याहारेण । व्यवहारश्च शून्यः निर्विशेषो निर्वाणेन, निर्वृतः शब्देन, शान्तो घोषेण, सामान्यः संकेतेन, संकेतः परमार्थेन, परमार्थो भूतवचनेन । शीतलो निष्परिदाहः अनिमित्तः अमन्यितः अनिन्दितः अप्रपञ्चितः–अल्पशब्दो निर्देशेन । अपर्यन्तो वर्णनिर्देशेन, महाभिज्ञापरिकर्मनिर्जातः अस्मृतितः अविदूरे महाभिज्ञापरिकर्मनिर्देशेन । अयमुच्यते कुमार तथागतकाय इति ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत–

> इच्छे लोकनाथस्य कायं जानितुमीदृशम् ।
>
> इमं समाधिं भावित्वा कायं बुद्धस्य ज्ञास्यति ॥ १ ॥

---

* This chapter is edited by Régamey Warsaw 1939

१ In Tibetan translation, this chapter is split up into two, chapter 22nd ending with st 3 of No 23 (App I) Naturally chapter 23 begins with the following sentences of the above passage The subsequent chapters are consecutively numbered २ AB अथ खलु for अथ ३ After भगवान्, AB add पुनरपि ४ For कायेऽनध्यवसितेन जीविते निरपेक्षेण AB read इमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन कायजीविते चानध्यवसितेन भवितव्यम् ५ After कस्य हेतोः ABT read a passage given in App I (No 24) ६ A B कर्माभि° for धर्माभि° ७ AB धर्मकायप्रभाविताश्च for धर्मकाया हि ८ A om धर्मकायप्रभाविताश्च ९ AB तत्र for तस्मात्तर्हि १० A om वाचयितव्यः ११ B om from उद्देष्टव्य upto नेतार्थ° १२ A B °विगम for °विगत १३ AB om ऽनिर्देश्य १४ AB om °पथ° १५ B om °पथ° १६ AB om दृढो मोहपथसमतिक्रान्त, Regamey ध्रुवो for दृढो १७ A B om अनास्रव विपाकसमतिक्रान्त १८ A B om व्यवहारश्च शून्य १९ A B यथाभूत° for भूत° २० A B om अप्रपञ्चित –अल्पशब्दो निर्देशेन २१ A B °निर्जातोऽयं स उच्यते for °निर्देशेन । अयमुच्यते २२ AB भावेतु for भावित्वा

पुण्यनिर्जातु बुद्धस्य काय शुद्ध प्रभास्वर ।
समेति सोऽन्तरीक्षेण नानात्व नास्य लभ्यते ॥ २ ॥
यादृशा बोधिर्बुद्धस्य लक्षणानि च तादृशा ।
यादृशा लक्षणास्तस्य कायस्तस्य हि तादृश ॥ ३ ॥
सर्वोभिलक्षण कायो बुद्धक्षेत्र हि तादृशम् ।
बला विमोक्षा ध्यानानि सर्वे तेऽप्येकलक्षणा ॥ ४ ॥
एव सभतु बुद्धाना लोकनाथान ईदृश ।
न जातु केनचिच्छक्य पश्यितु मांसचक्षुषा ॥ ५ ॥
यह्नु एव प्रवक्ष्यति दृष्टो मे लोकनायक ।
सुवर्णवर्ण कायेन सर्वलोक प्रभासति ॥ ६ ॥
अधिष्ठानेन बुद्धानामनुभावाद्विकुर्वितै ।
येनासौ दृश्यते कायो लक्षणेहि विचित्रित ॥ ७ ॥
आरोहपरिणाहेन कायो बुद्धस्य दर्शित ।
न च प्रमाण कायस्य लब्ध तेन अचिंतिय ॥ ८ ॥
यदि प्रमाण लभ्येत कायो बुद्धस्य एत्तक ।
निर्विशेषो भवेच्छास्ता देवैश्च मनुजैरपि ॥ ९ ॥
समाहितस्य चित्तस्य विपाकोऽपि तत्क्षण ।
तत्क्षण नामरूप शुद्ध भोति प्रभास्वरम् ॥ १० ॥
न चैव केनचिज्जातु समाधि शान्तु भावित ।
यथेह लोकनाथेन कल्पकोट्यो निषेवित ॥ ११ ॥
बहुभि शुक्लधर्मैश्च समाधिर्जनितोऽप्ययम् ।
समाधेरस्य वैपुल्यात् कायो मह्य न दृश्यते ॥ १२ ॥
यस्य यो यादृश चित्त नामरूप पि तादृशम् ।
नि स्वभावस्य चित्तस्य नामरूप विलक्षणम् ॥ १३ ॥
यस्य चोदारसंज्ञादि नामरूपस्मि वर्तते ।
निसभागाय संज्ञाय उदार चित्तु जायते ॥ १४ ॥
यस्य चो मृदुकी संज्ञा नामरूपस्मि वर्तते ।
अगृह्य नामरूपस्मि चित्त भोति प्रभास्वरम् ॥ १५ ॥
स्मरामी पूर्वजातीषु असंख्येयेषु सप्तसु ।
तिस्रो मे पापिका संज्ञा नैवोत्पन्ना कदाचन ॥ १६ ॥

---

१ AC यादृशा for तादृशा २ AB तस्य कायोऽपि तादृश for कायस्तस्य हि ता॰ ३ BC एव for एव ४ B देवैति ५ A तथेह C तत्रेह for यथेह

अनास्रवं च मे चित्तं कल्पकोट्यो ह्यचिन्तियाः ।
करोमि चार्थं सत्वानां न च मे कायु दृश्यते ॥ १७ ॥
यथा च यस्य भावेहि विमुक्तं भोति मानसम् ।
न तस्य तेहि भावेहि भूयो भोति समागमः ॥ १८ ॥　　N 301
विमुक्तं मम विज्ञानं सर्वभावेहि सर्वशः ।
स्वभावो ज्ञातु चित्तस्य भूयो ज्ञानं प्रवर्तते ॥ १९ ॥
क्षेत्रकोटीसहस्राणि गच्छन्ति मम निर्मिताः[1] ।
कुर्वन्ति चार्थं सत्वानां यत्र कायो न लभ्यते ॥ २० ॥
अलक्षणो निर्निमित्तो यथैव गगनं तथा ।　　10
कायो निरभिलाप्यो मे दुर्विज्ञेयो निदर्शितः ॥ २१ ॥
धर्मकायो महावीरो धर्मेण काय निर्जितो ।
न जातु रूपकायेण शक्यं प्रज्ञापितुं जिनो ॥ २२ ॥
कायनिर्देशु यस्यैतं श्रुत्वा प्रीतिर्भविष्यति ।
न तस्य मारः पापीयानवतारं लभिष्यति ॥ २३ ॥　　15
श्रुत्वा च धर्मं गम्भीरं यस्य त्रासो न भेष्यति[2] ।
न चासौ जीवितार्थाय बुद्धबोधिं प्रतिक्षिपेत् ॥ २४ ॥
भूतकोटीसहस्राणा भूतनिर्देश[3] ज्ञास्यति ।
आलोकभूतो लोकाना येन येन गमिष्यति ॥ २५ ॥

तत्र कुमार तथागतस्य कायो निमित्तकर्मणापि न सुकरं ज्ञातुम् । नीलो वा नीलवर्णो वा नीलनिदर्शनो वा नीलनिर्भासो वा । पीतो वा पीतवर्णो वा पीतनिदर्शनो वा पीतनिर्भासो वा ।　20　N 302
लोहितो वा लोहितवर्णो वा लोहितनिदर्शनो वा लोहितनिर्भासो वा । अवदातो वा अवदातवर्णो वा अवदातनिदर्शनो वा अवदातनिर्भासो वा । मञ्जिष्ठो वा मञ्जिष्ठवर्णो वा मञ्जिष्ठनिदर्शनो वा मञ्जिष्ठनिर्भासो वा । स्फटिको वा स्फटिकवर्णो वा स्फटिकनिदर्शनो वा स्फटिकनिर्भासो वा । सर्पिर्मण्डोपमो वा सर्पिर्वर्णो वा सर्पिर्निदर्शनो वा सर्पिर्निर्भासो वा । आग्नेयो वा अग्निवर्णो वा अग्निनिदर्शनो वा अग्निनिर्भासो वा । सौवर्णो वा सुवर्णवर्णो वा सुवर्णनिदर्शनो वा सुवर्णनिर्भासो वा । वैदूर्यो वा वैदूर्यवर्णो वा वैदूर्यनिदर्शनो वा वैदूर्यनिर्भासो वा । विद्युद्वा विद्युद्वर्णो वा विद्युन्निदर्शनो वा विद्युन्निर्भासो वा । ब्रह्मो वा ब्रह्मवर्णो वा ब्रह्मनिदर्शनो वा ब्रह्मनिर्भासो वा । देवो वा देववर्णो वा देवनिदर्शनो वा देवनिर्भासो वा । इति हि कुमार तथागतस्य कायः शुद्धः　30
सर्वनिमित्तैरप्यचिन्त्यः अप्यचिन्त्यनिर्देशो रूपकायपरिनिष्पत्त्या । न सुकरं सदेवकेनापि लोकेन कायस्य प्रमाणमुद्ग्रहीतुमन्यत्र सर्वाकारैरचिन्त्य. अप्रमेयः ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत –

---

१ A निर्मिता for निर्मिता. २ C भविष्यति for न भेष्यति. ३ AB भूत° for सूत्र°. ४ C सर्वंकारणे for सर्वाकारै.

पथा। चत्वारि ज्ञानानि। चत्वारो ज्ञानसंचयाः। चत्वारि ज्ञानगोत्राणि। चत्वारि प्रतिभानानि।
N 309 चत्वारः प्रतिभानसंचयाः। चत्वारि प्रतिभानगोत्राणि। चत्वारः सूत्रान्तसंचयाः। चत्वारि प्रतिभानशरणानि। चत्वारः सूत्रान्तनिर्हाराः। चत्वारि बाहुश्रुत्यगोत्राणि। चत्वारि बुद्धधनानि। चतस्रो बोधिसत्त्वशिक्षाः। चत्वारो बोधिसत्त्वगोचराः। चत्वारि बोधिसत्त्वकर्माणि। चत्वारि
5 बोधिसत्त्वप्रतिभानानि। चतस्रो मार्गभावनाः। चत्वारि क्लेशप्रहाणानि। चत्वार्यपायजहनानि। चत्वार्यज्ञानविधमनानि। चत्वार्यविद्याप्रहाणानि। चत्वारि दुःखोपशमनानि। चत्वारि दौर्मनस्यप्रहाणानि। चत्वार्युपायसंजननानि। चत्वारि दृष्टिप्रहाणानि। चत्वार्युपपत्तिपरिज्ञानानि। चत्वार्यात्मदृष्टिप्रहाणानि। चत्वारि सत्त्वदृष्टिप्रहाणानि। चत्वारि जीवदृष्टिप्रहाणानि। चत्वारि पुद्गलदृष्टिप्रहाणानि। चत्वारि भवदृष्टिप्रहाणानि। चत्वारि वस्तुप्रहाणानि। चत्वार्युपलम्भदृष्टि
10 प्रहाणानि। ते न सुकरं पर्यन्तस्थानेन निर्देष्टुम्॥

चतस्रो धारण्यः। कतमाश्चतस्रः? [1] यदुत अनन्तः सर्वस्वरपरिभाषाव्याहारः। तत्र
N 310 यज्ज्ञानमियं प्रथमा धारणी। अनन्तः स्वरपरिभाषाव्याहारः। तत्र यज्ज्ञानमियं द्वितीया धारणी। अनन्तः संक्लेशपरिभाषाव्याहारः। तत्र यज्ज्ञानमियं तृतीया धारणी। अनन्तो व्यवदानगुणानुशासाव्याहारः। तत्र यज्ज्ञानमियं चतुर्थी धारणी। इमाश्चतस्रो धारण्यः। इति हि या कुमार
15 धारणी तज्ज्ञानम्, स धर्मः। इति हि धर्मज्ञानेन धर्मप्रतिसंवित्॥

धर्मज्ञाने योऽर्थः, इयमुच्यते अर्थप्रतिसंवित्। धर्मज्ञाने यच्छन्दः, इयमुच्यते निरुक्तिप्रतिसंवित्। धर्मज्ञाने या व्यवहारदेशना आचक्षणा प्रज्ञपना प्रकाशना प्रस्थापना विवरणा विभजना उत्तानीकरणता असक्तवचनता अनेडमूकवचनता अनवलीनवचनता, इयमुच्यते प्रतिभानप्रतिसंवित्॥

20 अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत—

यावत्क ज्ञानु बुद्धस्य रूपप्रज्ञप्ति तावत्का।
यावती रूपप्रज्ञप्ति रूपव्याहार तावत्का॥ १॥

N 311 यावन्तो रूपव्याहाराः शीलनामानि तावत्का।
यावन्ति शीलनामानि बुद्धनामानि तावत्का॥ २॥

25 यावत्का बुद्धनामानि सत्त्वनामानि तावत्का।
एतका येकसत्त्वस्य अहं नामानि जानमि॥ ३॥

अनन्ता नामव्याहारा ये मे पूर्वे प्रकाशिता।
शीलनामा बुद्धनामा सत्त्वनामा च ते समा॥ ४॥

यावत्का संस्कृते दोषा निर्वाणे तावत्का गुणा।
30 बुद्धस्य तावत्का वर्णा औपम्या मे प्रकाशिता॥ ५॥

यावत्का सर्वसत्त्वानां चित्तोत्पादा निदर्शिता।
तावत्का लोकनाथस्य एकरोमात रश्मय॥ ६॥

---

[1] B om this line

नामाश्च अधिमुक्तिश्च सर्वसत्त्वान यादृशाः ।
ततो भूयो नरेन्द्रस्य स्वरङ्गवर्ण भाषिताः ॥ ७ ॥
ये नामाः सर्वसत्त्वानामेकसत्त्वस्य दर्शिताः ।
एकसत्त्वस्य ते नामाः सर्वसत्त्वान दर्शिताः ॥ ८ ॥
प्रतिसंविदानामोत्तार अर्थ बुद्धेन देशितः ।　　5
अनन्तनामनिर्देशा बोधिसत्त्वान कारणात् ॥ ९ ॥
य इच्छेत् कल्पं भाषेय्या सूत्रकोटीरनन्तिकाः ।　　N 312
इदं सूत्रं प्रवर्तिना अलोलीनः प्रकाशयेत् ॥ १० ॥
असक्तः परिषन्मध्ये सूत्रकोटीः प्रभाषते ।
यथाक्षरामपर्यन्तमेवं धर्मे स भाषते ॥ ११ ॥　　10
एमेव बोधिसत्त्वानां शुद्धसत्त्वान तायिनाम् ।
इदं सूत्रं समुद्गृह्य भवन्ति ज्ञानसंपदः ॥ १२ ॥
यथा यथा प्रकाशेन्ति श्रद्दधन्तो इमं नयम् ।
तथास्य वर्धते ज्ञानं हिमवन्तेव पादपाः ॥ १३ ॥

इति श्रीसमाधिराजे तथागताचिन्त्यनिर्देशपरिवर्तस्त्रयोविंशतितमः ॥

२ B om. this stanza. ३ A B अचिन्तिया: for अनन्तिका:. ४ AB सर्वसत्त्वान for शुद्ध°. ५ A B श्रद्दधाना for श्रद्दधन्तो.

यद्रजो लोकधातुषु पांसुसंज्ञानिदर्शनम् ।
उत्सहृदतडागेषु समुद्रेषु च यद्रजम् ।
न तेषां लभ्यते अन्तो एतका परमाणवः ॥ २६ ॥

N 303

समुद्राद्वाप्यकोटीभिर्मातुं शक्यं जलं भवेत् ।
5 न तुल्या लोकनाथेन उपमा संप्रकाशिता ।
जलबिन्दवोऽप्रमेयास्तथैव परमाणवः ॥ २७ ॥
पश्याम्येकस्य सत्त्वस्य ततो बहुतरानहम् ।
अधिमुक्तिचित्तोत्पादो नैककाले प्रजानितुम् ॥ २८ ॥
ये मया आत्मभावस्य भूतवर्णा निदर्शिताः ।
10 सर्वसत्त्वाधिमुक्तास्तानेतेषामुपमाक्षमाः ॥ २९ ॥
निमित्तकर्मगा चैवं[1] वर्णनिर्भास ईदृशः ।
शक्यं जानितुं बुद्धस्य विशेषो ईदृशो मम ॥ ३० ॥
निमित्तापगता बुद्धा धर्मकायप्रभाविताः ।
गम्भीराश्चाप्रमेयाश्च तेन बुद्धा अचिन्तियाः ॥ ३१ ॥
15 अचिन्तियस्य बुद्धस्य बुद्धकायोऽप्यचिन्तियः ।
अचिन्तिया हि ते काया धर्मकायप्रभाविताः ॥ ३२ ॥

N 304

चित्तेनापि न बुद्धानां कायश्चिन्तयितुं क्षमः ।
तथा[2] हि तस्य कायस्य प्रमाणं नोपलभ्यते ॥ ३३ ॥
अप्रमेया[3] हि ते धर्माः कल्पकोट्यो निषेविताः ।
20 तेनो अचिन्तियः कायो निर्वृतो मे प्रभास्वरः ॥ ३४ ॥
अग्राह्यः सर्वसत्त्वेहि न प्रमाणेहि गृह्यते ।
तथा हि कायो बुद्धस्य अप्रमाणो ह्यचिन्तियः ॥ ३५ ॥
अप्रमाणेहि धर्मेहि प्रमाणं तत्र कल्पितम् ।
अकल्पितेहि धर्मेहि बुद्धोऽप्येवमकल्पितः[4] ॥ ३६ ॥
25 प्रमाणं कल्पमात्र्यातो अप्रमाणमकल्पितम् ।
अकल्प्यः कल्पापगतस्तेन बुद्धो अचिन्तियः ॥ ३७ ॥
अप्रमाणं यथाकाशं मातुं शक्यं न केनचित् ।
तथैव कायु बुद्धस्य आकाशसमसादृशः ॥ ३८ ॥
ये कायमेवं जानन्ति बुद्धानां ते जिनात्मजाः ।
30 तेऽपि बुद्धा भविष्यन्ति लोकनाथा अचिन्तियाः ॥ ३९ ॥

इति श्रीसमाधिराजे तथागतकायनिर्देशपरिवर्तो नाम द्वाविंशतितमः ॥

---

१ AC नैव for चैव. २ C तथापि for तथाहि ३ C अप्रमाणा for अप्रमेया. ४ A अचिन्तियः for अकल्पित.

## तथागताचिन्त्यनिर्देशपरिवर्तः ॥

N 305

तस्मात्तर्हि कुमार यो बोधिसत्त्वो महासत्त्वः आकाङ्क्षेत् किमित्यहं चतस्रः प्रतिसंविदः
साक्षात्कुर्यामिति । कतमाश्चतस्रः ? यदुत अर्थप्रतिसंविदं धर्मप्रतिसंविदं निरुक्तिप्रतिसंविदं
प्रतिभानप्रतिसंविदम् । इमाश्चतस्रः प्रतिसंविदः साक्षात्कुर्यामिति, तेन कुमार बोधिसत्त्वेन
महासत्त्वेन अयं समाधिरुद्ग्रहीतव्यः पर्यवाप्तव्यो धारयितव्यो वाचयितव्यः प्रवर्तयितव्यः उद्देष्टव्यः
स्वाध्यातव्यो भावयितव्यः, परेभ्यश्च विस्तरेण संप्रकाशयितव्यः । भावनायोगमनुयुक्तेन च 5
भवितव्यम् । तत्र कुमार कतमा धर्मप्रतिसंविद् ? इमाः कुमार बोधिसत्त्वो धर्मप्रतिसंविद एवं
प्रतिसंशिक्षते – यावन्तो वा रूपव्याहारास्तावन्तस्तथागतस्य वर्णव्याहाराः । एवं वेदनासंज्ञा- N 306
संस्काराः । यावन्तः कुमार विज्ञानव्याहारास्तावन्तस्तथागतस्य वर्णव्याहाराः । इति हि कुमार
अप्रमेया अचिन्त्या असंख्येयाः अतुल्यामाप्यापरिमाणास्तथागतस्य रूपवर्णव्याहाराः । इति हि
कुमार अपर्यन्ता अनन्ता रूपव्याहाराः । एवमचिन्त्यास्तथागतस्य वर्णव्याहाराः । एवं वेदना- 10
संज्ञासंस्काराः । इति हि अनन्ता अपर्यन्ता अचिन्त्या विज्ञानव्याहाराः । एवमचिन्त्यास्तथागतस्य
वर्णव्याहाराः ॥

इति हि कुमार अप्रमेया असंख्येयाः संस्कृते दोषाः । अप्रमेया असंख्येया निर्वाणे
अनुशंसाः । असंख्येयास्तथागतस्य वर्णाः । इति हि कुमार यावन्ति निर्वाणनामानि तावन्तस्तथा-
गतस्य वर्णाः । इति हि कुमार असंख्येयानि निर्वाणनामानि । असंख्येयास्तथागतस्य वर्णाः ॥ 15

चत्वार इमे कुमार तथागतस्य वर्णव्याहारा अचिन्त्या अचिन्त्यव्याहाराः । कतमे
चत्वारः ? यदुत अचिन्त्यः संस्कारव्याहारः । अचिन्त्यः स्वरव्याहारः । अचिन्त्यः संक्लेश- N 307
व्याहारः । अचिन्त्यो व्यवदानव्याहारः । इमे कुमार चत्वारस्तथागतस्य वर्णव्याहारा
अचिन्त्या अचिन्त्यव्याहाराः । चत्वार इमे कुमार तथागतस्य वर्णव्याहारा अचिन्त्या अचिन्त्य-
निर्देशाः । ते न सुकरं पर्यन्तनिर्देशस्थानेन निर्देष्टुम् । कतमे चत्वारः ? एष एव चतुष्कः । एवं 20 N 308
विस्तरेण निर्देष्टव्यम् । यदुत चत्वारो बोधिसत्त्वानां नयाः । चतस्रो युक्तयः । चत्वारो द्वाराः । चत्वार
निर्देशाः । चत्वारो घोषाः । चत्वारो वचनपथाः । चत्वारो व्याहाराः । चत्वारि संधाभाष्याणि । चतस्रो नाम-
निष्पत्तयः । चतस्रो मनुजनिष्पत्तयः । चत्वारि प्रतिवचनानि । चत्वारि द्वाराणि । चत्वार्य-
क्षराणि । चत्वारोऽवताराः । चत्वारः पदाः । चत्वारि निर्हारपदानि । चत्वारः सूत्रान्त-
पदाः । चत्वारश्चर्यापथाः । चत्वारोऽचिन्त्यपथाः । चत्वारः तुल्यपथाः । चत्वारोऽ 25
नन्तपथाः । चत्वारोऽपर्यन्तपथाः । चत्वारोऽसंख्येयपथाः । चत्वारोऽप्रमेयपथाः । चत्वारोऽपरिमाण-

---

१ Before तस्मात्, AB add: तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारमामन्त्रयते स्म. २ B om. पर्यवाप्तव्यो. ३ After संप्रकाशयितव्य, A B add: अरणाभावनया भावयितव्यो बहुलीकर्तव्यः. ४ A om. from इमाः upto प्रतिसंशिक्षते. ५ C रूपवर्ण° for वर्ण°. ६ A B T om. from इति upto रूप-वर्णव्याहाराः. ७ A B om. अचिन्त्या अचिन्त्यव्याहाराः. ८ AB om. °निर्देश°. ९ After निर्देष्टव्यम्, AB add a fourfold classification of नयाः etc. given in App. I ( No. 25 )

## प्रतिसंविदवतारपरिवर्तः ॥

N 313 तत्र कुमार कथं बोधिसत्त्वो महासत्त्वो धर्मप्रतिसंविदि चरन् धर्मेषु[1] धर्मानुपश्यी समुदा-
गच्छत्यनुत्तरायां सम्यक्संबोधौ? इह कुमार बोधिसत्त्वो महासत्त्वो[2] धर्मेषु धर्मानुपश्यी नान्यत्र
रूपेण बोधिं समनुपश्यति। नान्यत्र रूपाद्बोधाय चरति। नान्यत्र रूपेण बोधिं पर्येषते।
नान्यत्र रूपेण बोधाय समुदागच्छति। नान्यत्र रूपेण सत्त्वानि बोधाय समादापयति। नान्यत्र
5 रूपेण तथागतं पश्यति। रूपस्याविनाशस्वभावं तथागत इति तथागतं पश्यति। अन्यद्
रूपमन्यो रूपस्वभाव इति नैव पश्यति। अन्यो रूपस्वभावोऽन्यस्तथागत इति नैव पश्यति। यश्च
रूपस्वभावो यश्च तथागत इत्यद्वयैषा धर्मता। एवं पश्यन् बोधिसत्त्वो महासत्त्वश्चरति धर्मप्रति-
संविदि। एवं नान्यत्र वेदनाया नान्यत्र संज्ञाया नान्यत्र संस्कारेभ्यो नान्यत्र विज्ञानेन बोधिं
N 314 समनुपश्यति। नान्यत्र विज्ञानाद्बोधाय चरति। नान्यत्र विज्ञानेन बोधिं पर्येषते। नान्यत्र
10 विज्ञानेन बोधाय समुदागच्छति[3]। नान्यत्र विज्ञानेन सत्त्वानि बोधाय समादापयति। नान्यत्र
विज्ञानेन तथागतं पश्यति। विज्ञानस्याविनाशस्वभावस्तथागत इति तथागतं पश्यति।
अन्यद्विज्ञानमन्यो विज्ञानस्वभाव इति नैव पश्यति। अन्यो विज्ञानस्वभावोऽन्यस्तथागत इति
नैव पश्यति। यश्च विज्ञानस्वभावो यश्च तथागत इत्यद्वयैषा धर्मता। एवं पश्यन् बोधिसत्त्वो
महासत्त्वश्चरति धर्मप्रतिसंविदि ॥

15 अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत—

रूपेण दर्शिता बोधी बोधये रूप दर्शितम्।
निसभागेन शब्देन उत्तरो धर्म देशित ॥ १ ॥
शब्देन उत्तरं[4] रूप गम्भीरं च स्वभावत।
सम रूपं च बोधिश्च नानात्वं नास्य लभ्यते ॥ २ ॥[5]
20 यथा निर्वाण गम्भीर शब्देनासंप्रकाशितम्।
लभ्यते न च निर्वाण स च शब्दो[6] न लभ्यते ॥ ३ ॥
N 315 शब्दश्चाप्यथ निर्वाणमुभयं तत्र लभ्यते।
एवं शून्येषु धर्मेषु निर्वाण संप्रकाशितम् ॥ ४ ॥
निर्वाण निर्वृती उक्ता निर्वाण च न लभ्यते।
25 अप्रवृत्त्यैव[7] धर्माणां यथा पश्चात्तथा पुरा ॥ ५ ॥
सर्वधर्मा स्वभावेन निर्वाणसमसादृशा।
ज्ञाता नैष्क्रम्यसारेहि[8] ये युक्ता बुद्धशासने ॥ ६ ॥

---

१ B धर्मेण for धर्मेषु २ C om बोधिसत्त्वो महासत्त्व ३ A समनुगच्छति ४ AB उत्तमं for उत्तरं ५ A नाना चेतस न लभ्यते ६ B शब्देन for शब्दो न ७ B अप्रवृत्तेषु धर्मेषु C अप्रवृत्तयसर्वधर्माणं for अप्रवृत्त्यैव धर्माणा ८ C नष्क्रम्यमानेहि for °सारेहि

पश्यिष्या कायु बुद्धस्य वक्ष्यन्ते दृष्टु नायकः।
न चाहं रूपकायेन पश्यितुं शक्य केनचित् ॥ ७ ॥
ज्ञातः स्वभावो रूपस्य यादृशं रूपलक्षणम् ॥
रूपस्वभावमाज्ञाय कायो मम निदेशितः ॥ ८ ॥
एवं पञ्चान स्कन्धानां ज्ञानं मे धर्मलक्षणम्।
ज्ञात्वा स्वभावं धर्माणां धर्मकाये प्रतिष्ठितः ॥ ९ ॥
देशेमि धर्म सत्त्वानां धर्मकायेऽप्यनिःसृतः।
न च धर्मत बुद्धानां शक्यं वाचाय भाषितुम् ॥ १० ॥ N 316
इमं नयमजानन्तो बुद्धशब्दं शृणित्व ते। 10
घोषमात्रेण वक्ष्यन्ति दृष्टो मे नरनायकः ॥ ११ ॥
सर्वसंज्ञाप्रहीणस्य भवसंज्ञा विगच्छति।
न जातु शब्दसंज्ञस्य भवते शास्तृदर्शनम् ॥ १२ ॥
यः शून्यतां प्रजानाति ईदृशं रूपलक्षणम्।
न चान्या शून्यता उक्ता अन्या रूपस्वभावता। 15
यस्तु रूपं प्रजानाति स प्रजानाति शून्यताम् ॥ १३ ॥
यः शून्यतां प्रजानाति ईदृशं रूपलक्षणम्।
न चासौ मारकोटीभिर्भूयः शक्य पराजितुम् ॥ १४ ॥
प्रजानाति हि यो रूपं स प्रजानाति शून्यताम्।
य शून्यतां प्रजानाति स प्रजानाति निर्वृतिम् ॥ १५ ॥ 20
इमां गतिमजानन्त. प्रनष्टा औपलम्भिकाः।
अभावे भावसंज्ञेयो भावे चाभावसंज्ञिनः ॥ १६ ॥
वञ्चिता ज्ञात्रलाभेन प्रनष्टा मम शासनात्।
फलसंज्ञा अवस्थाने रिक्ता श्रामणकाद्गुणात् ॥ १७ ॥ N 317
कुसीदा हीनवीर्याश्च शीलस्कन्धे असंस्थिताः। 25
पर्युत्थिताश्च वक्ष्यन्ति न एतद् बुद्धशासनम् ॥ १८ ॥
केचिदेवं प्रवक्ष्यन्ति वयं बोधाय प्रस्थिताः।
अदान्ता अविनीताश्च परस्परमगौरवाः ॥ १९ ॥
शब्दकामा भविष्यन्ति धर्मे चैवानवस्थिताः।
एवं सा भेष्यते इच्छा ज्ञात्रलाभगवेषणे ॥ २० ॥ 30
लाभकामा भविष्यन्ति संनिपाने हि चिन्तकाः।
मदप्रमादाभिभूता लाभसत्कारआर्थिकाः ॥ २१ ॥

---

१ C ज्ञानस्वभावः for ज्ञातः स्व॰ २ A B प्रतिष्ठितः for अनिःसृतः. ३ A शृण्वेय मे for शृणित्व ते ४. C भवसंज्ञा॰ for सर्वसंज्ञा॰. ५ A om. st 20

निःसृता लाभसत्कारे ज्ञात्रलाभगवेषिणः।
स्तूपान् विहारान् काहेन्ति कुलस्त्रीष्वभिमूर्च्छिताः ॥ २२ ॥
निःसृताश्चोपलम्भस्मिन् कामतृष्णासु निःसृताः।
गृहिकर्म करिष्यन्ति मारस्य विषये स्थिताः ॥ २३ ॥
5 गृहिणां देशयिष्यन्ति कामा अग्निशिखोपमाः।
प्रविश्य च गृहांस्तेषां दूषयिष्यन्ति तान् कुलान् ॥ २४ ॥
N 318 गृहिणश्च भविष्यन्ति तेषु शास्तारसंज्ञिनः।
तेषां च विप्रवुस्तानां पुत्रदाराणि दूषयि ॥ २५ ॥
ये तेषामन्नपानेन करिष्यन्ति अनुग्रहम्।
10 तेषां तत्पुत्रदारेषु भार्यासंज्ञा भविष्यति ॥ २६ ॥
गृहिणो न स्वदारेषु भविष्यन्त्यधिमूर्च्छिताः।
यथा ते प्रव्रजिता हि परदारेषु मूर्च्छिताः ॥ २७ ॥
शिक्षापदातत्वक्षाणं गृहिणं या मि दर्शिता।
सा शिक्षा तेषां भिक्षूणां तस्मिन् काले न भेष्यति ॥ २८ ॥
15 भेरीशङ्खमृदङ्गेहि पूजां काहेन्ति ते मम।
या च सा उत्तमा पूजा प्रतिपत्तिर्न भेष्यति ॥ २९ ॥
ते आत्मना सुदुःशील्या दृष्ट्वा शीलप्रतिष्ठितान्।
अन्योन्यमेवं वक्ष्यन्ति एतेऽपि यादृशा वयम् ॥ ३० ॥
श्रुत्वा शीलस्य ते वर्णं दुःशीलाः पापगोचराः।
20 पर्युत्थिताश्च वक्ष्यन्ति नैतद्बुद्धभाषितम् ॥ ३१ ॥
N 319 न च ही भेष्यते तेषां नष्टं श्रामणकं धनम्।
चोदिताभूतवाचाय बुद्धबोधिं प्रतिक्षिपि ॥ ३२ ॥
तेषां व्यापन्नचित्तानामुत्सृष्ट्वा बुद्धशासनम्।[1]
धर्मं प्रतिक्षिपित्वा च वासोऽवीची भविष्यति ॥ ३३ ॥
25 न मे श्रुतं च दृष्टं वा येषामेतादृशी चरी।
ते बुद्धज्ञानं लप्स्यन्ते बालधर्मप्रतिष्ठिताः ॥ ३४ ॥
या तेषां कुहना तत्र शाठियं वाक्कियं तदा।
जानामि तदहं सर्वं ज्ञानं मेऽत्र प्रवर्तते ॥ ३५ ॥
सचेत् वर्ण्यं प्रभाषेयं यत्तेषां स्खलितं पृथु।
30 बोधिसत्त्वप्रतिज्ञानां किंचिन्मात्रं प्रकीर्तितम् ॥ ३६ ॥
नास्ति पापमकर्तव्यं कुमारा तेष भेष्यति।
मा तेहि संस्तवं सार्धं कुर्यास्त्वं कालि पश्चिमे ॥ ३७ ॥

[1] A B बुद्धभाषितम् for °शासनम्.

आलपेत् संलपेष्यासि कुर्यासी तेषु गौरवम्[1] ।
अनोलीनः सन्करेष्यासि अप्रबोधीय कारणात् ॥ ३८ ॥
वर्षाग्रं परिपृच्छित्वा यस्ते वृद्धतरो भवेत् ।
कुर्या हि गौरवं तत्र शिरसा पादवन्दनम् ॥ ३९ ॥
न तेषां स्खलितं पश्येद्बोधिमण्ड विपश्यताम् ।
प्रतिघातं न जनयेत् मैत्रचित्तः सदा भवेत् ॥ ४० ॥
यद्येषां स्खलितं पश्येद्दोषांस्तेषां न कीर्तयेत् ।
यादृशं काहिती कर्म लप्स्यते तादृशं फलम् ॥ ४१ ॥
स्मितेन मुखचन्द्रेण वृद्धेषु नवकेषु च ।
पूर्वाभाषी भवेन्नित्यं हतमानश्च सूरतः ॥ ४२ ॥
चीवरैः पिण्डपातैश्च कुर्यात्तेषामनुग्रहम् ।
एवं चित्तं प्रदध्यास्त्वं सर्वे मेष्यन्ति नायकाः ॥ ४३ ॥
अध्येष्येयुर्यदि त्वां ते धर्मदानस्य कारणात् ।
प्रथमं वाचं भाषेष्या नाहं वैपुल्यशिक्षितः ॥ ४४ ॥
एवं त्वं वाच भाषेष्या आयुष्मान् विज्ञ पण्डितः ।
कथं महात्मनां शक्यं पुरतो भाषितुं मया ॥ ४५ ॥
सहसैषां न जल्पेत तुलयित्वा च भाजनम् ।
यदि भाजनं विजानीया अनधीष्टोऽपि देशयेत् ॥ ४६ ॥
यदि दुःशील पश्येसि परिषायां[2] बहुस्थितान् ।
संलेखं मा प्रभाषेस्त्वं वर्णं दानस्य कीर्तयेः ॥ ४७ ॥
भवेयुर्यदि माल्पेच्छाः शुद्धाः शीले प्रतिष्ठिताः ।
मैत्रं चित्तं जनित्वा त्वं कुर्याः संलेखिकीं कथाम् ॥ ४८ ॥
परीत्ता यदि पर्षच्छ शीलवन्तो बहू भवेत् ।
लब्धपक्षस्तदा भूत्वा वर्णं शीलस्य कीर्तयेत् ॥ ४९ ॥
पूर्वे परिषदं ज्ञात्वा यदि शुद्धा भवेत्तदा ।
यावन्तः कुशला धर्माः सर्वांस्तेभ्यः प्रकाशयेत् ॥ ५० ॥
दानं शीलं तथा क्षान्ति वीर्यं ध्यानं श्रुतं तथा ।
संतुष्टयल्पेच्छसंलेखान् वर्णयेत् कीर्तयेत् सदा ॥ ५१ ॥
अरण्यवासं ध्यानसुखं गणवासविवर्जनम् ।
एतेषां वर्णं भाषेत एवं हि भाषयेत् सुखम् ॥ ५२ ॥
अरण्यवास नो विन्देन्न शीलपरमो भवेत् ।
प्रतिसंलानु सेवेत न दानपरमो भवेत् ॥ ५३ ॥

1 B गौरवम् for गौरवम्. 2 A पर्षाया च बहून् स्थितान्

N 322

शीलस्कन्धे स्थिहित्वा च बाहुश्रुत्यमुपार्जयेत् ।
इमं समाधिमेषन्तः पूजयेच्छास्तृधातवः ॥ ५४ ॥
छत्रैर्ध्वजैः पताकाभिर्गन्धमाल्यविलेपनैः ।
कारयेत् पूज बुद्धस्य समाधिं शान्तमेषता ॥ ५५ ॥
5 रत्ननीयेहि तूर्येहि संगीतिं संप्रयोजयेत् ।
पूजयेद्धातुं बुद्धस्य अनोलीनो ह्यतन्द्रितः ॥ ५६ ॥
यावन्ति गन्धमाल्यानि धूपनं चूर्ण चैलिकम् ।
सर्वैस्तैः पूजयेन्नाथं बुद्धज्ञानस्य कारणात् ॥ ५७ ॥
यावती काचित् पूजास्ति अप्रमेया अचिन्तिया ।
10 कुर्यात्ताः सर्वबुद्धानां समाधिं शान्तमेषता ॥ ५८ ॥
प्रत्यंशं सर्वसत्त्वेभ्यः सर्वं दद्यादनिश्रितः ।
असङ्गज्ञानमेषन्तो बुद्धज्ञानमनुत्तरम् ॥ ५९ ॥
मयापि पूर्वबुद्धानां कृता पूजा अचिन्तिया[1] ।
अनिश्रितेन भूत्वैनं समाधिं शान्तमेषता ॥ ६० ॥
15 दुर्लभोत्पादु बुद्धानां[2] दुर्लभो मानुषो भवः ।
दुर्लभा शासने श्रद्धा प्रव्रज्या उपसंपदा ॥ ६१ ॥

N 323

येन आरागितः शास्ता चित्तं बोधाय नामितम् ।
मा चल त्वं प्रतिज्ञायास्तिष्ठ च प्रतिपत्तिषु ॥ ६२ ॥
य इदं धारयेत् सूत्रं क्षयकाले उपस्थिते ।
20 प्रतिभानं लभेत् क्षिप्रं प्रवृत्तं यदि धारयेत् ॥ ६३ ॥
एकगाथां पि धारित्वा पुण्यस्कन्धो अचिन्तियः ।
किं वा पुनः सर्वसूत्रं धारयेद् यः श्रुतार्थिकः ॥ ६४ ॥
सर्वसत्त्वान बोधिप्राप्तान् पूजयेद् यो ह्यतन्द्रितः ।
यः कुर्याद् गौरवेणासौ कल्पसख्योपमान् सदा ॥ ६५ ॥
25 इतः समाधितो यश्च गाथामेकां पि धारयेत् ।
सर्वं पुरिमकं पुण्यं कलां नोपैति षोडशीम् ॥ ६६ ॥
अचिन्तियानानुशंसान् बुद्धज्ञानेन जानमि ।
इमं समाधिं श्रुत्वेह यः काङ्क्षां न करिष्यति ॥ ६७ ॥

इति श्रीसमाधिराजे प्रतिसंविद्वतारपरिवर्तो नाम चतुर्विंशतितमः ॥

[1] AB अनुत्तरा for अचिन्तिया. [2] B बुद्धोत्पादोऽपि दुर्लभो for दुर्लभोत्पादु बुद्धानां.

## अनुमोदनापरिवर्तः ॥

तत्र भगवान् पुनरेव चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मात्तर्हि कुमार बोधिसत्त्वेन N 324
महासत्त्वेनोपायकुशलेन भवितव्यम् । कथं च कुमार बोधिसत्त्वो महासत्त्व उपायकुशलो
भवति ? इह कुमार बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वानामन्तिके ज्ञातिसंज्ञा उत्पादयितव्या ।
सर्वसत्त्वानामन्तिके ज्ञातिचित्तमुपस्थाप्य यः सर्वसत्त्वानां कुशलमूलपुण्यस्कन्धस्तत् सर्वमनुमोद-
यितव्यम् । त्रिरात्र्यास्त्रिर्दिवसस्य सर्वसत्त्वानां कुशलमूलपुण्यस्कन्धमनुमोद्य सर्वज्ञतारम्बणेन 5
चित्तोत्पादेन तेषामेव सर्वसत्त्वानां निर्यातयितव्यम् । अनेन कुशलमूलेन बोधिसत्त्वो महासत्त्वः
क्षिप्रमिमं समाधिं प्रतिलभते, क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत— N 325

सर्वे मम ज्ञातय एति सत्त्वाः
यस्तेषमस्ती पृथु पुण्यस्कन्धः । 10
रात्रेस्त्रिरेवं दिवसस्य च त्री-
रनुमोदमी एषु जनित्व चित्तम् ॥ १ ॥

अनुमोदमी ये सुविशुद्धशीला
ये जीवितार्थे न करोन्ति पापम् ।
अधिमुक्तिसंपन्न य बोधिसत्त्वा 15
अनुमोदमी तेष य किंचि पुण्यम् ॥ २ ॥

अनुमोदमी येष प्रसादु बुद्धे
धर्मे प्रसादोऽस्ति तथैव संघे ।
अनुमोदमी ये सुगतस्य पूजां
कुर्वन्ति बोधिं प्रतिकाङ्क्षमाणाः ॥ ३ ॥ 20

अनुमोदमी येष न आत्मदृष्टि- N 326
र्न भावदृष्टिर्न च जीवदृष्टिः ।

---

१ After महासत्त्वेन, AB add इमं समाधिमाकांक्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन. २ A B om. अन्तिके. ३ After °स्कन्ध-, A B add स तेन बोधिसत्त्वेन महासत्त्वेन. ४ After सत्त्वानां, AB add स कुशलमूलपुण्यस्कन्धो. ५ After °मूलेन, AB add पुण्यस्कन्धेन समन्वागतः. ६ B om. sts. 2–8 here, but reads them in App. I (No. 15). ७ After st. 3, AT add

अनुमोदमी येहि अनुत्तरायां उत्पादित चित्तु पराम्बोधये ।
सत्त्वान अर्थाय महामतीनां संबोधिवंशस्य च स्थित्यहेतोः ॥
अनुमोदमी ये धनधान्यरत्नांस्त्यजन्ति अन्तःपुर धीतपुत्रान् ।
राज्यं च स्फीतं तथ आत्ममान्य कल्याय आवेशित बोधिमत्त्वा ॥
अनुमोदमी ये त्यजि आत्मभावं सत्त्वान अर्थाय प्रहृष्टचित्ताः ।
प्रज्ञाय परिभावित शान्तकाया उपायकौशल्य सुशिक्ष शिक्षिताः ॥

अनुमोदमी येष न पापदृष्टि-
ये शून्यतां दृष्ट्व जनेन्ति तुष्टिम् ॥ ४ ॥
अनुमोदमी ये सुगतस्य शासने
लभन्ति प्रव्रज्योपसंपदं च । [2]
5 अल्पेच्छ संतुष्ट वने वसन्ति
प्रशान्तचारित्र ये ध्यानगोचराः ॥ ५ ॥
अनुमोदमी एकक येऽद्वितीया
वने वसन्ती सद खड्गभूताः ।
आजीवशुद्धाः सद अल्पकृत्या
10 ये ज्ञात्रहेतोर्न करेन्ति कुहनाम् ॥ ६ ॥
अनुमोदमी येष न संस्तवोऽस्ति
न चापि ईर्ष्या न कुलेषु तृष्णा ।
उत्त्रस्ति त्रैधातुकि नित्यकालम्
अनोपलिप्ता विचरन्ति लोके ॥ ७ ॥
15 अनुमोदमी येष प्रपञ्चु नास्ति
निर्विण्ण सर्वासु भवोपपत्तिषु ।
N 327 अविगृहीता उपशान्तचित्ता
न दुर्लभस्तेष समाधिरेषः ॥ ८ ॥
अनुमोदमी ये गणदोष दृष्ट्वा [1]
20 सर्वान् विवादान् परिवर्जयित्वा ।
सेवन्त्यरण्यं वनमूलमाश्रिता [3]
विमुक्तिसाराः सुगतस्य पुत्राः ॥ ९ ॥
अनुमोदमी ये विहरन्त्यरण्ये
नात्मानमुत्कर्षि पराश्च पंसये ।
25 अनुमोदमी येष प्रमादु नास्ति
ये अप्रमत्ता इम बुद्धशासने ॥ १० ॥
यावन्त धर्माः पृथु बोधिपाक्षिकाः
सर्वेष मूलं ह्ययमप्रमादः ।
ये बुद्धपुत्राः सद अप्रमत्ता
30 न दुर्लभस्तेष अयं समाधिः ॥ ११ ॥
निधानलाभः सुगतान शासनं
प्रव्रज्यलाभो द्वितीयं निधानम् ।

१ A कुल. २ ABT om. st. 5. ३ AB तथा वृक्षम् for वनमूलम्.

श्रद्धाय[1] लाभस्तृतीयं निधान-
मयं समाधिश्चतुर्थं निधानम् ॥ १२ ॥

N 323

श्रुत्वा इमं शून्यत बुद्धगोचरं
तस्याप्रतिक्षेपु निधानलम्भः ।
अनन्तु प्रतिभानु निधानलम्भो
या धारणी तत् परमं निधानम् ॥ १३ ॥ 5

यावन्ति धर्माः कुशलाः प्रकीर्तिताः
शीलं श्रुतं त्यागु तथैव क्षान्तिः[2] ।
सर्वेष मूलं ह्ययमप्रमादो
निधानलम्भः सुगतेन देशितः ॥ १४ ॥ 10

ये अप्रमत्ता इह बुद्धशासने
सम्यक् च येषा प्रणिधानमस्ति ।
न दुर्लभस्तेष अयं समाधि-
रासन्नभूता इह बुद्धशासने ॥ १५ ॥

इति श्रीसमाधिराजे अनुमोदनापरिवर्तो नाम पञ्चविंशतितमः ॥ 15

१ C श्रद्धा प्रमादस्मृतिय for श्रद्धाय लाभस्तृतीयं. २ C क्षमा for क्षान्ति·

## २७

## शीलनिर्देशपरिवर्तः ॥

N 332 दशेमे कुमार अनुशंसाः परिशुद्धशीलस्य बोधिसत्त्वस्य महासत्त्वस्य । कतमे दश ? यदुत ज्ञानं च परिशोधयति परिपूरयति । बुद्धानां भगवतामनुशिक्षते । अगर्हितो भवति पण्डितानाम् । प्रतिज्ञातो न चलति । प्रतिपत्तौ तिष्ठति । संसारात् पलायते । निर्वाणमर्पयति । निष्पर्युत्थानो विहरति । समाधिं प्रतिलभते । अदरिद्रश्च भवति । इमे कुमार दशानुशंसाः
5 परिशुद्धशीलस्य बोधिसत्त्वस्य महासत्त्वस्य ॥

तत्रेदमुच्यते—

ज्ञानं च परिपूरेति बुद्धानामनुशिक्षते ।
अगर्हितः पण्डितानां भोति नित्यं विशारदः ॥ १ ॥
प्रतिज्ञातो न चलति प्रतिपत्तौ च तिष्ठति ।
10 अर्पेति येन निर्वाणं संसारातः पलायते ॥ २ ॥
निष्पर्युत्थितो विहरति समाधिं लभते लघु ।
अदरिद्रश्च भवति शीलस्कन्धे प्रतिष्ठितः ॥ ३ ॥

N 333 ज्ञानं च तस्यो परिपूर्ण भोति
अनुशिक्षते चापि तथागतानाम् ।
15 न चास्य निन्दां प्रकरोन्ति पण्डिताः
तथा हि तस्यो परिशुद्ध शीलम् ॥ ४ ॥
प्रतिज्ञातोऽसौ न चलाति पण्डितः
तथा हि शूरः प्रतिपत्तिये स्थितः ।
दृष्ट्वा च संसारमनेकदोषं
20 पलायते निर्वृति येन याति ॥ ५ ॥
पर्युत्थितं चित्तु न भोति तस्य
तथा ह्यसौ शीलबले प्रतिष्ठितः ।
क्षिप्रं समाधिं लभते निरङ्गणं
परिशुद्धशीलस्यिमि आनुशंसाः ॥ ६ ॥

25 इति श्रीसमाधिराजे शीलनिर्देशपरिवर्तो नाम सप्तविंशतिमः ॥

---

१ A B ज्ञानमनुपरिवारयति for ज्ञानं च परिशोधयति. २ A B सभोक्तः for संसारातो. ३ A अनन्तदोषं for अनेक°. ४ A विशुद्ध° for परिशुद्ध°. ५ After st. 6, C reads sts. 1–11 of chapter 29 rapeating them in their proper place.

## दशानुशंसापरिवर्तः ॥

दशेमे कुमार आनुशंसाः क्षान्तिप्रतिष्ठितस्य मैत्रीविहारिणो बोधिसत्त्वस्य महासत्त्वस्य । N 334
कतमे दश ? अग्निना न दह्यते । शस्त्रेण न हन्यते । विषमस्य न क्रमते । उदकेन न म्रियते । देवताश्चैनं रक्षन्ति । लक्षणालंकृतं च कायं प्रतिलभते । सर्वदुर्गतिद्वाराणि चास्य पिथितानि भवन्ति । ब्रह्मलोके चास्योपपत्तिर्भवति । सुखेन चास्य रात्रिंदिवानि व्रजन्ति । प्रीतिसुखं चास्य कायं न विजहाति । इमे कुमार दशानुशंसाः क्षान्तिप्रतिष्ठितस्य मैत्रीविहारिणो बोधिसत्त्वस्य महासत्त्वस्य ॥ 5

तत्रेदमुच्यते—

अग्निना दह्यते नासौ शस्त्रेण न च हन्यते ।
विषं न क्रमते काये उदके म्रियते न सः ॥ १ ॥
रक्षन्ति देवताश्चैनं द्वात्रिंशद् भोन्ति लक्षणाः ।
दुर्गतिः पिथिता चास्य क्षान्तिये अनुशंसिमे ॥ २ ॥ 10
ब्रह्मत्वं अप शक्रत्वं भोति चास्य न दुर्लभम् ।
सुखं विहरते नित्यं प्रीति भोन्ति अचिन्तिया ॥ ३ ॥
नो अग्निशस्त्रेण स जातु हन्यते
विषेण वा वारिगतो न म्रियते । N 335
रक्षन्ति देवास्तथ नाग यक्षा 15
मैत्रीविहारिष्विमि आनुशंसाः ॥ ४ ॥
द्वात्रिंश कायेऽस्य भवन्ति लक्षणा
नो चास्य भूयो विनिपातु भोति ।
च्युतश्च स ब्रह्मपुरोपपद्यते
क्षान्तिस्थितस्यो इमि आनुशंसाः ॥ ५ ॥ 20
सुखेन रात्रिंदिव तस्य यान्ति
प्रीतिस्पृष्टः कायु सदास्य भोति ।
स क्षान्तिसौरत्यबले प्रतिष्ठितः
प्रसन्नचित्तः सद भोति पण्डितः ॥ ६ ॥

दशेमे कुमार आनुशंसा आरब्धवीर्यस्य बोधिसत्त्वस्य महासत्त्वस्य[1] । कतमे दश ? 25
यदुत दुरासदश्च भवति । बुद्धपरिग्रहं च प्रतिलभते । देवतापरिगृहीतश्च भवति । श्रुत्वा चास्य धर्मा न परिहीयन्ते । अश्रुतपूर्वांश्च धर्मान् प्रतिलभते । समाधिगोत्रं च प्रतिलभते । अल्पाबाधश्च भवति । आहारश्चास्य सम्यक्[2] परिणामयति । पद्मोपमश्च भवति न[3] मुसलोपमः । इमे कुमार दशानुशंसा आरब्धवीर्यस्य बोधिसत्त्वस्य महासत्त्वस्य ॥ N 336

---

१ AB सदा for तदा. २ ABT सम्यक्सुखेन for सम्यक्. ३ AB om. न मुसलोपमः.

## २६

## दानानुशंसापरिवर्तः ॥

N 329 [1]तस्मात्तर्हि कुमार अप्रमत्तो भविष्यामीत्येवं त्वया कुमार शिक्षितव्यम्, [2]अप्रमत्तस्य हि कुमार बोधिसत्त्वस्य महासत्त्वस्य न दुर्लभा भवत्यनुत्तरा सम्यक्संबोधिः, किमङ्ग पुनरयं समाधिः । कथं च कुमार बोधिसत्त्वो महासत्त्वः अप्रमत्तो भवति ? इह कुमार बोधिसत्त्वो महासत्त्वः परिशुद्धशीलो भवति । इह कुमार परिशुद्धशीलो बोधिसत्त्वः अप्रमत्तो

5 भवति । इह कुमार बोधिसत्त्वो महासत्त्वः परिशुद्धशीलो भवति । इह कुमार परिशुद्धशीलो बोधिसत्त्वो महासत्त्वः अविरहितो भवति सर्वज्ञताचित्तेन षट्सु पारमितासु । तस्येमे आनुशंसा भवन्ति । तान् शृणु, साधु च सुष्ठु च मनसिकुरु । भाषिष्येऽहं ते । दशेमे कुमार अनुशंसा दानाधिमुक्तस्य बोधिसत्त्वस्य महासत्त्वस्य । कतमे दश ? यदुत मात्सर्य-

N 330 क्लेशोऽस्य निगृहीतो भवति । त्यागानुबृंहितं चास्य चित्तं सदा भवति । बहुजनसाधारणेभ्यश्च

10 भोगेभ्यः सारमाददाति । महाभोगेषु च कुलेषूपपद्यते । जातमात्रस्य चास्य त्यागचित्तमामुखी-भवति । प्रियश्च भवति चतसृणां पर्षदाम् । विशारदश्चानुचितः पर्षदमवगाहते । दिग्विदिक्षु चास्योदारो [3]वर्णकीर्तिशब्दश्लोको लोकेऽभ्युद्गच्छति । मृदुतरुणहस्तपादश्च भवति समचरण-तलप्रतिष्ठितः । अविरहितश्च भवति कल्याणमित्रैर्यावद्बोधिमण्डनिषदनात् । इमे कुमार दशानुशंसा दानाधिमुक्तस्य बोधिसत्त्वस्य महासत्त्वस्य ॥

15 तत्रेदमुच्यते—

निगृहीत सि मात्सर्य त्यागचित्तं च बृंहितम् ।
आदत्तसारो भवति समृद्धे जायते कुले ॥ १ ॥
जातमात्रस्य चित्त सि त्याग एव प्रवर्तते ।
प्रियो भवति सत्त्वानां गृहप्रव्रजितान च ॥ २ ॥

20 विशारदश्च पर्षत्सु अम रूप संक्रमेत् ।
भवत्युदारशब्दोऽस्य ग्रामेषु नगरेषु च ॥ ३ ॥

331 मृदू हस्तौ च पादौ च भविष्यन्ति न दुर्लभा ।
कल्याणमित्राँल्लभते बुद्धांश्च श्रावकानपि ॥ ४ ॥
मात्सर्यचित्त सि न जातु भोति

25 [4]त्यागेषु चित्त रमतेऽस्य नित्यम् ।
प्रियश्च भोति बहुसत्त्वकोटिना
अमत्सरिस्या इमि आनुशंसा ॥ ५ ॥

---

[1] Before तस्मात् AB read तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म. [2] After शिक्षितव्यम्, AB add तत् कस्य हेतोः ? [3] A B om वर्ण°. [4] A त्यागेऽस्य चित्त रमते सदैव for the line

महाधने चापि कुले स जायते
　जातस्य त्यागे रमते मनोऽस्य।
आदत्तसारश्च करोति काल-
　ममत्सरिस्या इमि आनुशंसाः॥ ६॥
विशारदश्चो परिषां निगाहते
　उदारशब्दोऽस्य दिशासु याति।
मृदु हस्तपादोऽस्य सदैव जायते
　अमत्सरिस्या इमि आनुशंसा॥ ७॥
कल्याणमित्रास्य न भोन्ति दुर्लभा
　बुद्धांश्च यो पश्यति श्रावकांश्च।
दृष्ट्वा च तान् पूजयते प्रसन्नो
　अमत्सरिस्या इमि आनुशंसाः॥ ८॥

इति श्रीसमाधिराजे दानानुशंसापरिवर्तो नाम षड्विंशतितमः॥

तत्रेदमुच्यते—

दुरासदः सदा भोति परिदाहो न विद्यते ।
रक्षन्ति देवताश्चैनं क्षिप्रं बुद्धान् स पश्यति ॥ ७ ॥
श्रुतं न हीयते तस्य अधृतं भोति आमुखम् ।
प्रणिधिं परिपूरेति वीर्यवन्ते इमे गुणाः ॥ ८ ॥
5
समाधिगोत्रं लभते व्याधिस्तस्य न जायते ।
सुखं चास्यान्नपानानि पच्यन्ते न विरोहति ॥ ९ ॥
उत्पलं वारिमध्ये वा सोऽनुपूर्वेण वर्धते ।
एवं शुक्लेहि धर्मेहि बोधिसत्त्वो विवर्धते ॥ १० ॥
10
अवन्ध्यास्तस्य गच्छन्ति रात्रयो दिवसानि च ।
भविष्यति मृत्युकाले फलमेतस्य चेदृशम् ॥ ११ ॥

N 337

आरब्धवीर्येण तथागतेन[3]
कल्पैरनेकैः समुदागतेन ।
ये बोधिसत्त्वा विरियेणुपेता-[4]
स्तेषानुशंसा इमि संप्रकाशिताः ॥ १२ ॥
आरब्धवीर्यो भवती[5] दुरासदः
15
परिगृहीतो भवती जिनेहि ।
देवा पि तस्य स्पृह संजनेन्ति
नचिरेण सो लप्स्यति बुद्धबोधिम् ॥ १३ ॥
श्रुतं च तस्यो न कदाचि हीयते
[6]अन्ये पृथू चापि लभन्ति धर्माः ।
20
प्रतिभानु तस्यो अधिमात्रु वर्धते
आरब्धवीर्यस्य इमेऽनुशंसाः ॥ १४ ॥
समाधिगोत्रं च लघुं धिगच्छति
आबाधु तस्यो न कदाचि भोति ।
यथैव सो भोजनु तत्र भुञ्जते
25
सुखेन तस्यो परिणामु गच्छति ॥ १५ ॥

N 338

रात्रिंदिव भवति[7] शुक्लपक्षो
आरब्धवीर्यस्य अतन्द्रितस्य ।
बोधी पि तस्यो नचिरेण भेष्यते
तथा ह्यसौ वीर्यबलैरुपेतः ॥ १६ ॥

१ ABT om this line २ This line is added in N from Tibetan translation. ३ C अनन्त तेन for तथागतेन. ४ A B विनयैरुपेता for विरियेणु°. ५ A B भवतीह सूरतः for भवती दुरासद. ६ A B अन्ये पृथू चाभ्युदयन्ति अर्था for the line. ७ A वर्धति for भवति

दशेमे कुमार आनुशंसा ध्यानाभियुक्तस्य बोधिसत्त्वस्य महासत्त्वस्य। कतमे दश? यदुत आचारे तिष्ठति। गोचरे चरति। निष्परिदाहो विहरति। गुप्तेन्द्रियो भवति। प्रीतिमनुभवति। विविक्तः कामैः। अतृप्तो ध्यानैः। मुक्तो मारविषयात्। प्रतिष्ठितो बुद्धविषये। विमुक्तिं परिपाचयति। इमे कुमार दशानुशंसा ध्यानाभियुक्तस्य बोधिसत्त्वस्य महासत्त्वस्य॥

तत्रेदमुच्यते – 5

नासौ भोति अनाचारो आचारे संप्रतिष्ठितः।
गोचरे चरते योगी वर्जेति च अगोचरम्॥ १७॥
निष्परिदाहविहारी गुप्तेन्द्रिय सुसंवृतः।
अनुभवति संप्रीतिं ध्यानध्यायिस्य गोचरः॥ १८॥
विरक्तः[3] कामतृष्णाया ध्यानसौख्यं निषेवते। 10
मुक्तोऽसौ मारविषयाद् बुद्धगोचरि संस्थितः॥ १९॥
योगिनो हि विशेषोऽयं यदेको रमते वने। N 339
विमुक्तिं परिपाचेति[4] तं भोति दशमं पदम्॥ २०॥
आचारि सो तिष्ठति बोधिसत्त्वः
 सर्वाननाचार विवर्जयित्वा। 15
अगोचरं वर्जिय गोचरे स्थितः
 समाधियुक्ते इमि आनुशंसाः॥ २१॥
परिदाहु तस्यो न कदाचि भोति
 आर्यं स्पृशित्वेह सुखं निरामिषम्।
कायेन चित्तेन च भोति शीतलः 20
 समाधियुक्ते इमि आनुशंसाः॥ २२॥
विहरत्यरण्यायतनेषु गुप्तो
 विक्षेपु तस्यो न कदाचि भोति।
प्रीतिं च तस्मिँल्लभते निरामिषं
 तथा हि कायेन विविक्तु भोति॥ २३॥ 25
सचित्त कामेहि असंक्लिष्टो
 तथा हि मारविषयात्तु मुक्तः।
तथागतानां विषये प्रतिष्ठितो
 विमुक्ति तस्यो परिपाकु गच्छति॥ २४॥

दशेमे कुमार आनुशंसाः प्रज्ञाचरितस्य बोधिसत्त्वस्य महासत्त्वस्य। कतमे दश? यदुत 30 N 340
सर्वस्वपरित्यागो भवति न च दानेन शुद्धिं मन्यते। अखण्डशीलश्च भवति न च शील-

---

[1] A B परिदूरयति for °ध्यायिनः. [2] A B गुप्ते इन्द्रियसंवृतः for गुप्तेन्द्रिय सुसंवृतः. [3] A B विमुक्तः for विरक्तः. [4] A B परिपूरेति for °पाचेति.

माश्रित। क्षान्तिबलैसुप्रतिष्ठितश्च भवति न च सत्त्वसंज्ञासप्रतिष्ठित। आरब्धवीर्यश्च भवति कायचित्तविविक्त। ध्यानध्यायी च भवति अप्रतिष्ठितध्यायी। दुर्धर्षश्च भवति मारै, अप्रकम्प्यश्च भवति सर्वपरप्रवादिभि। लब्धालोकश्च भवति सर्वसंस्कारगत्याम्। अधिमात्रा चास्य सर्वसत्त्वेषु महाकरुणा संमतिक्रामति। न च श्रावकप्रत्येकभूमे स्पृहयति। बुद्धध्यानसमाधिसमापत्ती स्वतरति। इमे कुमार दशानुशसा प्रज्ञाचरितस्य बोधिसत्त्वस्य महासत्त्वस्य॥

तत्रेदमुच्यते—

सर्वस्व त्यजते धीरे शुद्धिं तेन न मन्यते।
अखण्ड रक्षते शील निश्रयोऽस्य न विद्यते॥ २५॥
क्षान्ति भावेति स प्राज्ञ सत्त्वसंज्ञा विवर्तिता।
आरब्धवीर्यो भवति कायचित्तविविक्त ॥ २६॥
ध्यानध्यायी च सो भोति अप्रतिष्ठो अनिश्रित।
दुर्धर्षो भोति मारेहि प्रज्ञावन्त इमे गुणा ॥ २७॥
अकम्पियो च सो भोति सर्वे परप्रवादिभि।
लब्धालोकश्च संसारे प्रज्ञाया ईदृशा गुणा ॥ २८॥
महाकृपा स लभते सर्वसत्त्वान अन्तिके।
श्रावकप्रत्येकज्ञाने न स्पृहेति कदाचन॥ २९॥
सर्वस्वत्यागेन न शुद्धि मन्यते
अखण्डशीलो न च शीलनिश्रित।
भावेति क्षान्ती न च सत्त्वसंज्ञा
प्रज्ञाधिमुक्ते इमि आनुशंसा ॥ ३०॥
आरब्धवीर्यो भवती विमुक्तो
अनिश्रितो ध्यायति अप्रतिष्ठित।
दुर्धर्षु मारेण स भोति पण्डितो
प्रज्ञाधिमुक्ते इमि आनुशंसा ॥ ३१॥
अकम्पियो भोति परप्रवादिभि
स लब्धगाधो भवतीह संस्कृते।
अधिमात्र सत्त्वेषु कृपा जनेति
प्रज्ञाधिमुक्ते इमि आनुशंसा ॥ ३२॥
प्रत्येकबुद्धेषु च श्रावकेषु चो
न तस्य जातु स्पृह तेषु जायते।

१ A B °बलज्ञश्च for °बलसुप्रतिष्ठितश्च २ A B अवक्रामति for समति° ३ A B शूर ४ A °विवर्जित for °विवर्तिता ५ C यथाक्रिया for महाकृपा ६ B सत्त्वसंज्ञी for° संज्ञा ७ A om st 31
८ B विविक्तो for विमुक्तो

, तथा ह्यसौ बुद्धगुणाः प्रतिष्ठिताः
प्रज्ञाविमुक्ते इमि आनुशंसाः ॥ ३३ ॥

दशेमे कुमार आनुशंसा बहुश्रुतस्य बोधिसत्त्वस्य महासत्त्वस्य । कतमे दश ? यदुत संक्लेशं न करोति । व्यापादं न जनयति । काङ्क्षां विवृणोति । दृष्टिमृज्वीकरोति । उत्पथं च वर्जयति । मार्गे प्रतिष्ठते । अमृतद्वारे तिष्ठति । आसन्नस्थायी भवति बोधये । आलोकभूतो भवति सत्त्वा- 5 नाम् । दुर्गतिभ्यो न बिभेति । इमे कुमार दशानुशंसा बहुश्रुतस्य बोधिसत्त्वस्य महासत्त्वस्य ॥

तत्रेदमुच्यते—

अनुशंसा दशैवैते बाहुश्रुत्ये प्रकाशिताः ।
तथागतेन बुद्धेन यथाभूतं प्रजानता ॥ ३४ ॥　　10　N 343

संक्लेशं व्यवदानं च उभौ पक्षौ स जानति ।
संक्लेशं परिवर्जित्वा व्योदाने मार्गि तिष्ठति ॥ ३५ ॥

काङ्क्षां विवरति ज्ञानी दृष्टीमृज्वीकरोति च ।
मार्गे उत्पथ वर्जेति ऋजुके मार्गि तिष्ठति ॥ ३६ ॥

तिष्ठते चामृतद्वारे आसन्नो भोति बोधये ।　　15
आलोकभूतः सत्त्वानां दुर्गतिभ्यो न भीयति ॥ ३७ ॥

जानाति धर्म पृथु सांकिलेशिकं
व्यवदानपक्षं पि तथैव जानति ।
स संकिलेशं परिवर्जयित्वा
व्योदानि संशिक्षति धर्मि उत्तमे ॥ ३८ ॥　　20

काङ्क्षां च सो विवरति सर्वप्राणिनां
दृष्टी च तस्यो भवति सदोज्जुका ।
स उत्पथं मार्गु विवर्जयित्वा
संतिष्ठते ऋजुकि पथे सदा शिवे ॥ ३९ ॥　　N 344

अमृतस्य द्वारे भवती सदा स्थितो　　25
आसन्न भोती विपुलाय बोधये ।
आलोकभूतः पृथु सर्वप्राणिनां
न चाप्यसौ भायति दुर्गतिभ्यः ॥ ४० ॥

दशेमे कुमार आनुशंसा धर्मदानगुरुकस्य बोधिसत्त्वस्य महासत्त्वस्य परेभ्यो धर्मदानं ददतः । कतमे दश ? यदुत अक्रियां विवर्जयति । क्रियामवतरति । सत्पुरुषधर्मे प्रतिष्ठते । बुद्धक्षेत्रं 30 परिशोधयति । बोधिमण्डमर्पयति । वैरस्तुं परित्यजति । क्लेशान्निगृह्णाति । सर्वसत्त्वेभ्यः प्रत्यंशं

---

१ A B °गुणप्रतिष्ठितः for °गुणाः प्रति°. २ A B आसन्नो for आसन्नस्थायी. ३ B om. st. 38. ४ B om. st. 40. ५ Before दशेमे, B reads इमे कुमार दशानुशंसा बहुश्रुतस्य बोधिसत्त्वस्य त्रेदमुच्यते-अनुशंसा दशैवेते बाहुश्रुत्ये प्रकाशिता = st. 34 ab. ६ C आश्रयां for अक्रियां. ७ C वस्तं for वस्तुं.

ददाति । सदारम्बणां च मैत्रीं भावयति । दृष्टधार्मिकं च सुखं प्रतिलभते । इमे कुमार दशानुशंसा धर्मदानगुरुकस्य बोधिसत्त्वस्य महासत्त्वस्य परेभ्यो धर्मदानं ददतः ॥

तत्रेदमुच्यते—

यो हि दानं ददात्यग्रं धर्मदानममत्सरी ।
N 345 5 दश तस्यानुशंसा वै लोकनाथेन भाषिताः ॥ ४१ ॥
अक्रियां सर्वि वर्जेति क्रियामोतरते विदुः ।
सत्पुरुष धर्मप्रतिपन्नस्त्यागचित्तं निषेवते[1] ॥ ४२ ॥
बुद्धक्षेत्रं च शोधेति क्षेत्रं भोति स्यनुत्तरम् ।
बोधिमण्डं समारूढो धर्मदानस्यिदं फलम् ॥ ४३ ॥
10 त्यजते सर्ववस्तूनि शिक्षते धर्मराजिनः ।
क्लेशा निगृहीतास्य बोधिसत्त्वस्य न दुर्लभा ॥ ४४ ॥
सर्वसत्त्वान प्रत्यंशं मैत्रचित्तः प्रयच्छति ।
अनीर्षुकश्च सो भोति सौख्यं भोति स्यमानुषम् ॥ ४५ ॥
विवर्जिता अक्रिया पण्डितेन
15 क्रियाय सो नित्य विदुः प्रतिष्ठितः ।
महात्मधर्मेषु सदा प्रतिष्ठितो
यो धर्मदानं सद देति पण्डितः ॥ ४६ ॥
क्षेत्रं च तस्य सद[2] भोति शुद्धं
धर्मा विवर्धन्तिमि[3] बोधिपाक्षिकाः ।
20 आसन्न भोति सद बोधिमण्डे
धर्मं ददित्वा इमि आनुशंसाः ॥ ४७ ॥
क्लेशा न सन्ती परित्यक्त वस्तून्
वस्तुं परिज्ञातु स्वलक्षणेन ।
विमुक्त सर्वेहि परिग्रहेहि
25 न तस्य सङ्गो भवती कदाचित् ॥ ४८ ॥
उपस्थितं चित्तु विचक्षणस्य
सर्वेऽपि सत्त्वा सुखिनो भवन्तु ।
स मैत्रचित्तो भवती अनीर्ष्युको
दृष्टेव धर्मेऽस्य सुखं अनल्पकम् ॥ ४९[4] ॥

30 दशेमे कुमार आनुशंसाः शून्यताविहारिणो[5] बोधिसत्त्वस्य महासत्त्वस्य । कतमे दश ? यदुत
N 347 बुद्धविहारेण विहरति । अनिश्रितो ध्यायति । उपपत्तिं न प्रार्थयति । शीलं न परामृशति ।

१ AB धर्मप्रसन्न for °प्रतिपन्न. २ A B तस्यो भवती for तस्य सद भोति. ३ B विवर्जन्ति for विवर्धन्ति ४ B om. st 49. ५ A B शून्यताधिमुक्तस्य

आर्यान्नापवदति। अविरुद्धो विहरति। वस्तु नोपलभते। विविक्तश्च भवति। बुद्धान्नाभ्याख्याति। सद्धर्मं धारयति। इमे कुमार दशानुशंसाः शून्यताविहारिणो बोधिसत्त्वस्य महासत्त्वस्य॥

तत्रेदमुच्यते—

यो विहारो नरेन्द्राणां सर्वबुद्धान गोचरः।
तेनो विहरते योगी यत्र जीवो न लभ्यते॥ ५०॥
अनिश्रितः सर्वलोके आर्यं ध्यानं न रिञ्चति।
उपपत्तिं न प्रार्थेति दृष्ट्वा धर्मस्वभावताम्॥ ५१॥
अपरामृष्टशीलस्य भवेच्छीलमनिश्रितम्।
न सोऽपवदते किंचिदन्यमार्यं अनास्रवम्॥ ५२॥
अविरुद्धो विहरति विवादोऽस्य न विद्यते।
वस्तु नोपलभेद् योगी विविक्तो विहरी सदा॥ ५३॥
अभ्याख्याति न सो बुद्धमपि जीवितकारणात्।
निश्रितः शून्यधर्मेषु कायसाक्षी विशारदः॥ ५४॥
सर्वेषां लोकनाथानां बुद्धबोधिमचिन्तियाम्।
धर्मं धारेति सत्कृत्य बुद्धधर्मांश्च काङ्क्षति॥ ५५॥

ये ते विहाराः पुरुषर्षभाणां
　　यस्मिन्नभूमिः पृथुतीर्थिकानाम्।
विहरत्यसौ तैरिह बोधिसत्त्वो
　　यस्मिन्न सत्त्वो न जीवु न पुद्गलः॥ ५६॥
न निश्रयस्तस्य कदाचि विद्यते
　　अनिश्रितः सेवते ध्यानसौख्यम्।
निराश्रय निःसृत विविक्त धर्मा
　　नुपपत्तिसंज्ञास्य न जातु भोति॥ ५७॥
स्वभावु धर्माण प्रजानतश्च
　　शीलेऽपि तस्येह न कश्चि निश्रयः।
शीलेन नो मन्यति जातु शुद्धिं
　　प्रसादमार्येषु करोति नित्यम्॥ ५८॥
विरोधु तस्यो न कदाचि भोति
　　विभाविताः सर्वस्वभावशून्याः।
न चापि सोऽभ्याख्याति नायकानां
　　सद्धर्म धारेन्ति तथागतानाम्॥ ५९॥

---

१ C विविक्तः स्वपिति. २ B om. सद्धर्मं धारयति. ३ AB आर्यधर्मे आर्ये ध्यान. ४ AB °दन्यमार्गम् for °दन्यमार्यं. ५ C पृथुतीर्थिकानाम् for °तीर्थिकानाम्. ६ AB विजानतश्च for प्र°. ७ AB न चापि सोऽभ्याख्यि कदाचि नायकं for the line.

दशेमे कुमार आनुशंसाः प्रतिसंलयनाभियुक्तस्य बोधिसत्त्वस्य महासत्त्वस्य। कतमे दश? यदुत अनाविलचित्तो भवति। अप्रमत्तो विहरति[1]। बुद्धमनुस्मरति। चर्यां श्रद्दधाति। ज्ञाने न काङ्क्षति। कृतज्ञो भवति। बुद्धानां धर्मं न प्रतिक्षिपति। सुसंवृतो विहरति। दान्तभूमिमनुप्राप्नोति। प्रतिसंविदः साक्षात्करोति[2]। इमे कुमार दशानुशंसाः प्रतिसंलयनाभियुक्तस्य
N 349
5 बोधिसत्त्वस्य महासत्त्वस्य॥

तत्रेदमुच्यते—

चित्तमनाविलं भोति प्रमादाः सर्वे वर्जिताः।
अप्रमत्तो विहरति प्रतिसंलानगोचरम्॥ ६०॥
श्रुत्वा च लोकनाथानां चर्यां बुद्धान श्रद्दधे।
10 ज्ञाने न काङ्क्षते योगी बुद्धज्ञाने अचिन्तिये॥ ६१॥
कृतज्ञो भोति बुद्धानां बुद्धधर्मान्न काङ्क्षति।
सुसंवृतो विहरति दान्तभूमिप्रतिष्ठितः॥ ६२॥
प्रतिसंविदः स लभते य एको रमते सदा[3]।
जहित्वा लाभसत्कारं प्रतिसंलानगोचरः॥ ६३॥
15 चित्तं च तस्यो भवति अनाविलं
सर्वे प्रमादाः परिवर्जितास्य।
सदाप्रमत्तो[4] भवती महात्मा
समाधियुक्तस्य इमेऽनुशंसाः॥ ६४॥
स्मरित्व बुद्धान् द्विपदानमुत्तमान्
20 श्रद्धाति तेषां चरियामनुत्तराम्।
N 350
न काङ्क्षति ज्ञानु तथागतानां
समाधियुक्ते इमि आनुशंसाः॥ ६५॥
बुद्धान सो भोति सदा कृतज्ञो
न जीवितार्थं स क्षिपेत धर्मम्।
25 सुसंवृतो विहरति नित्यकालं
समाधियुक्ते इमि आनुशंसाः॥ ६६॥
स दान्तभूमीमनुप्राप्त भोति
प्रतिसंविदः साक्षिकरोति क्षिप्रम्।
अनाच्छेद्यवाक्य प्रतिभानवांश्च
30 सूत्रान्तकोटिनियुतान भाषते॥ ६७॥
स बुद्धबोधिं परिगृह्णते लघुम्
आरक्षते शासनु नायकस्य।

१ AB भवति for विहरति. २ AB अनुप्राप्तो भवति for साक्षात्करोति. ३ AB वने for सदा ४ BC सदाप्रसन्नो for सदाप्रमत्तो.

निहनित्व सो सर्वपरप्रवादिनः[1]
करोति वैस्तारिक बुद्धबोधिम् ॥ ६८ ॥
इतश्च्यवित्वान स बोधिसत्त्वः
सुखावतीं गच्छति लोकधातुम् ।
अनुत्पादधर्मेषु च क्षान्ति लप्स्यते 5 N 351
अमितायुषो धर्मवराणु श्रुत्वा ॥ ६९ ॥

दशेमे कुमार आनुशंसा अरण्यवासगुरुकस्य बोधिसत्त्वस्य महासत्त्वस्य । कतमे दश ? यदुत अल्पकृत्यो विहरति । गणं वर्जयति । विवादोऽस्य न भवति । अव्याबध्यो भवति । आत्मवान् वर्धयति । अधिकरणं न करोति । उपशान्तश्चरति । सुसंवृतश्च विहरति । मोक्षानुकूला चास्य चित्तसंततिर्भवति । क्षिप्रं च विमुक्तिं साक्षात्करोति[1] । इमे कुमार दशानुशंसा अरण्य- 10
वासगुरुकस्य बोधिसत्त्वस्य महासत्त्वस्य ॥

तत्रेदमुच्यते–

अल्पकृत्यः सदा भोति गणं वर्जेति दूरतः ।
विवादो न भवत्यस्य वनेष्वेवविहारिणः ॥ ७० ॥
अव्याबध्येन चित्तेन आत्मवान् विवर्धयेत् । 15
नास्याधिकरणं भोति गुणास्तेऽरण्यवासिनः ॥ ७१ ॥
उपशान्तः स चरते मनोवाक्कायसंवृतः ।
मोक्षानुकूलो भवति विमुक्तिं क्षिप्र स्पर्शति ॥ ७२ ॥
भवति सततमल्पकृत्यु योगी N 352
पृथुगणदोषेण विवर्जयित्वा[2] । 20
न विवदति कदाचि युक्त योगी
इमि गुण तस्य भवन्त्यरण्यवासे ॥ ७३ ॥
यद भवति निर्विण्णु संस्कृतेऽस्मिं
न भवति तस्य स्पृहा कर्हिचि लोके ।
न च भवति विवर्धिरासवाणां
वनि वसतोऽस्य भवन्ति आनुशंसाः ॥ ७४ ॥
अधिकरणु न जातु चास्य भोति
उपशान्तरतो विवेकचारी ।
वचसि मनसि काये संवृतस्यो
बहु गुण तस्य भवन्त्यरण्यवासे ॥ ७५ ॥ 30

१ After °करोति, C adds अल्पकृत्येन च समाधिं प्रतिलभते. २ B °दोषत सर्वि वर्जयित्वा for °दोषेण विवर्जयित्वा.

भवति च अनुकूल तस्य मोक्षो
 लघु प्रतिपद्यति सो विमुक्ति शान्तम्।
वनि वसति विमुक्ति सेवतोऽस्या
 इमि गुण भोन्ति अरण्यवासि सर्वे ॥ ७६ ॥

N 353 5 दशेमे कुमार आनुशंसा पिण्डचारिकस्य धूतगुणसंलेखप्रतिष्ठितस्य बोधिसत्त्वस्य महासत्त्वस्य। कतमे दश[१] यदुत ज्ञात्रकामतास्य न भवति। यशस्कामतास्य न भवति। लाभसत्कारकामतास्य न भवति। आर्यवंशप्रतिष्ठितश्च भवति। कुहनलपनतास्य न भवति। आत्मानं नोत्कर्षयति। परान्न पंसयति। अनुनयप्रतिघप्रहीणः परगृहे चरति। निरामिषं च धर्मदानं ददाति। धूतगुणसंलेखप्रतिष्ठितस्य चास्य ग्राह्या धर्मदेशना भवति। इमे कुमार दशानुशंसा 10 पिण्डपातिकस्य धूतगुणसंलेखप्रतिष्ठितस्य बोधिसत्त्वस्य महासत्त्वस्य ॥

तत्रेदमुच्यते—

न ज्ञात्रकामो भवति यशो नाप्यभिनन्दते।
लाभालाभे समचित्तो यो धूतेषु प्रतिष्ठितः ॥ ७७ ॥
नोत्सृजत्यार्यवंशं च कुहना लपना न च।
15 उत्कर्षेति न चात्मानं परान् पंसयते न च ॥ ७८ ॥
प्रतिघानुनयौ चास्य धर्मं देशी निरामिषम्।
ग्राह्य सि वचनं भोति पिण्डपाते गुणा अमी ॥ ७९ ॥

N 354 न मार्गते ज्ञात्र यशो न लाभं
 चतुरार्यवंशे भवति प्रतिष्ठितः।
20 अकुहको अलपकु भोति पण्डितो
 धूताधिमुक्तस्य इमीदृशा गुणा ॥ ८० ॥
नात्मानमुत्कर्षि परान्न पंसी
 पुरुषं पि उक्तो न कदाचि कुप्यते।
वर्णं पि श्रुत्वा जनये न हर्षं
25 य पिण्डपातेन भवेत तुष्टः ॥ ८१ ॥
निरामिषं देति च धर्मदानं
 न लाभसत्कार गवेषतेऽसौ।
ग्राह्या च तस्य भवतेऽस्य भाषित
 धूताधिमुक्तस्य इमेऽनुशंसा ॥ ८२ ॥

30 इति हि कुमार एवंरूपेषु धूतगुणेषु प्रतिष्ठितो बोधिसत्त्वो महासत्त्वोऽरण्ये विहरन् बुद्धनिधानं प्रतिलभते। धर्मनिधानं प्रतिलभते। ज्ञाननिधानं प्रतिलभते। पूर्वान्तापरान्तप्रत्युत्पन्नज्ञान

१ A B प्रतिविध्यति for प्रतिपद्यति २ A om from यशस्कामता upto °सत्कारकामता ३ C अकुर्म(ह?)को ४ A धूताभियुक्तस्य ५ B om st 82 ६ A om धर्मनिधानं प्रतिलभते

N 355

निधानं प्रतिलभते। कथं च कुमार बोधिसत्त्वो महासत्त्वो बुद्धनिधानं प्रतिलभते? इमाः कुमार
विव्रकचारी बोधिसत्त्वो महासत्त्वः पञ्चाभिज्ञाः प्रतिलभते[1]। स दिव्येन चक्षुषा विशुद्धेनाति-
क्रान्तमानुष्यकेण पूर्वस्यां दिशि अप्रमेयानसंख्येयान् बुद्धान् भगवतः पश्यति[2]। एवं दक्षिणस्यां
पश्चिमायामुत्तरस्यां दिशि अप्रमेयानसंख्येयान् बुद्धान् भगवतः पश्यति। सोऽविरहितो भवति
बुद्धदर्शनेन। एवं हि कुमार बोधिसत्त्वो महासत्त्वो बुद्धनिधानं प्रतिलभते। कथं 5
च कुमार बोधिसत्त्वो महासत्त्वो धर्मनिधानं प्रतिलभते? यं च ते बुद्धा भगवन्तो
धर्मं देशयन्ति, तं स बोधिसत्त्वो महासत्त्वो दिव्येन श्रोत्रधातुना सर्वं शृणोति।
सोऽविरहितो भवति धर्मश्रवणेन। एवं हि कुमार बोधिसत्त्वो धर्मनिधानं प्रतिलभते। कथं च
कुमार बोधिसत्त्वो महासत्त्वो ज्ञाननिधानं प्रतिलभते? येन ज्ञानेन सर्वधर्मानाराधयति। आराध-
यित्वा अविप्रमुषितस्मृतिः सत्त्वानां धर्मं देशयति। तस्य च योऽर्थः स प्रजानाति। एवं हि 10
कुमार बोधिसत्त्वो महासत्त्वो ज्ञाननिधानं प्रतिलभते। कथं च कुमार बोधिसत्त्वो महासत्त्वः

N 356

पूर्वान्तापरान्तप्रत्युत्पन्नज्ञाननिधानं प्रतिलभते? सोऽभिज्ञया अतीतानागतप्रत्युत्पन्नसत्त्वचित्तचरित-
ज्ञानमवतरति। एवं हि कुमार बोधिसत्त्वो महासत्त्वः पूर्वान्तापरान्तप्रत्युत्पन्नज्ञाननिधानं प्रतिलभते।
संक्षिप्तेन कुमार एवंगुणधर्मप्रतिष्ठितो बोधिसत्त्वो महासत्त्वः सर्वबुद्धधर्मान् प्रतिलभते यत्राभूमिः
सर्वश्रावकप्रत्येकबुद्धानाम्, कः पुनर्वादः सर्वपरप्रवादिनाम्॥ 15

तत्रेदमुच्यते—

बुद्धनिधानं च धर्मनिधानं
ज्ञाननिधानं च पूर्वान्तनिधानम्।
पञ्च अभिज्ञाः स क्षिप्रं लभति
यो विदु रण्णि सदा स्थितु भोति॥ ८३॥

20

इति श्रीसमाधिराजे दशानुशंसापरिवर्तो नाम अष्टाविंशतितमः॥

---

1 After प्रतिलभते, A adds: कतमाः पञ्च? यदुत दिव्यचक्षुः दिव्यश्रोत्रं परचित्तज्ञानं पूर्वनिवा-सानुस्मरणं ऋद्धिविधं च। इमाः पञ्चाभिज्ञाः प्रतिलभते. 2 After पश्यति, C adds: सोऽविरहितो भवति बुद्धदर्शनेन.

## तेजगुणराजपरिवर्तः ॥

N 357 तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मात्तर्हि कुमार दिव्यानि चक्रवर्तिराज्यैश्वर्यसुखान्यपहाय प्रव्रजिष्यामीत्येवं त्वया कुमार सदा शिक्षितव्यम् । प्रव्रजितेन कुमार धूतगुणसंलेखप्रतिष्ठितेन निरिकचारिणा क्षान्तिसौरत्यसंपन्नेन भवितव्यम् । सदा च आरब्धवीर्येण ते कुमार आदीप्तशिरश्चैलोपमेन अयं सर्वधर्मस्वभावसमतानिपञ्चितः समाधिः श्रोतव्य
5 उद्ग्रहीतव्यः पर्यवाप्तव्यः प्रवर्तयितव्यो धारयितव्यो वाचयितव्य उद्देष्टव्यः स्वाध्यातव्योऽरणा भावनया भावयितव्यो बहुलीकर्तव्यः, परेभ्यश्च विस्तरेण संप्रकाशयितव्यः । खड्गविषाणभूतेन अद्वितीयेन च ते कुमार अरण्यनिवासिना सदा भवितव्यम् । आत्मपरित्यागेनापि ते कुमार सर्वसत्त्वानामर्थः सदा करणीय इति ॥

अथ खलु भगवांस्तस्यां वेलायामेतमेवार्थमुद्भावयंश्चन्द्रप्रभस्य कुमारभूतस्येमं पूर्वयोग
10 कथापरिवर्तं गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म—

स्मरमी[1] अतीत बहुकल्पशता
यद् आसि नायकु अनन्तयशा ।
N 358 नरदेवनागगणपूजनियो
नामेन तेजेगुणि[3] राज जिनो ॥ १ ॥
15 दश भिक्षुकोटि षडभिज्ञरहा
प्रतिसंविदान वशिपारगता ।
धूतवृत्त संलेखित शान्तमना
इति[5] तस्य तेन समयेन गणा ॥ २ ॥
षट्सप्तती नगर कोटिशता
20 पञ्चाशयोजनप्रमाण समा ।
रतनान सप्तन विशिष्टवरा
इह[4] जम्बुद्वीपि तद कालि अभूत ॥ ३ ॥
तद कालि ते पुरवरा सकला
प्रतिमण्डिता बहु उद्यानशतैः ।
25 उद्यान सर्वि घनमेघनिभा
फलपुष्पमण्डित तरुनिचिता ॥ ४ ॥
फलवृक्षजाति विविधा रुचिरा[6]
लकुचाम्रजम्बुपनसैर्निचिता ।

---

१ C स्मरामी for स्मरमी २ C reads sts 1 ll at the end of chapter 27 ३ C तेजगद्वि for तेजगुणि ४ B इमु N reads ग्ता on the strength of T ५ B इमु तेन समयेन गणा for the line ६ B रुचिता for रुचिरा

कर्णिकारचम्पकपुन्नागशतैः
　　प्रतिमण्डितास्तु उद्यानवरा ॥ ५ ॥ N 359
न्यग्रोध सर्वि द्विजसंघरुता
　　कलविङ्ककोकिलमयूरशतैः ।
शुकजीवंजीवककुणालरुता 5
　　बहुपक्षिसंघरुत कालि तदा ॥ ६ ॥
धृतराष्ट्रराजहंसोपनिभा
　　भृङ्गकुणाल वरघोषरुता ।
चित्राङ्गरक्तमहार्णवप्रभा
　　सुमनोज्ञशब्द मधुरा मुदिता ॥ ७ ॥ 10
इति पक्षि समागत कालि तदा
　　कलविङ्कमयूरविहङ्गरुतैः ।
परपुष्ट शारिक विचित्र द्विजा
　　बहुपक्षिघोषरुत नानविधा ॥ ८ ॥
तेहि निषेवित उद्यानशता 15
　　मुचिलिन्दवार्षिकअशोकशतैः ।
अतिमुक्तकाय जरपुष्पपत्रैः
　　पद्मोत्पलैः कुमुदपुण्डरिकैः ॥ ९ ॥
पद्मैः सहस्रशतपत्रचिता N 360
　　इमि पुष्प पुष्करिणिशोभकरा । 20
प्रतिमण्डिता सुरभिगन्धवरा
　　शोभन्ति पुष्करिणियो रुचिरा ॥ १० ॥
तहि कालि राज इह जम्बुध्वजे
　　दृढदत्तु आसि मनुजाधिपति ।
पुत्राण तस्य अभु पञ्चशता 25
　　प्रासादिका परमदर्शनिका ॥ ११ ॥
तहि कालि राज्यु शिवु क्षेम अभूत्
　　अनुपद्रुत सुरमणीय स्फितम् ।
अयु जम्बुद्वीप कुसुमैर्निचितो
　　निर्विशेष देवभवनेहि समम् ॥ १२ ॥ 30

---

५ A om. the line　१ Mss promiscuously read पुष्किरिणियो or पुष्किरिणी for पुष्करिणी
१ A B परम सुदर्शनियः for °सुदर्शनिका

तहि कालि सो दशबलो अनिघो
जिनु भाषते इमु समाधिवरम् ।
स्वप्नोपमा भवगती सकला
न च कश्चि जायति न चो म्रियते ॥ १३ ॥
N 361 5 न सत्त्वे लभ्यति न जीवु नरो
इमि धर्म फेनकदलीसदृशाः ।
मायोपमा गगनविद्युसमा
दकचन्द्रसंनिभ मरीचिसमाः ॥ १४ ॥
न च अस्ति लोकि मृतु कश्चि नरो
10 परलोकि संक्रमति गच्छति वा ।
न च कर्म नश्यति कदाचि कृतं
फलमेति कृष्ण शुभ संसरतो ॥ १५ ॥
न च शाश्वतं न च उच्छेदु पुनो
न च कर्मसंचयु न चापि स्थितिः ।
15 न च सोऽपि कृत्व पुनरस्पृशती
न च अन्यु कृत्व पुन वेदयते ॥ १६ ॥
न च संक्रमो न च पुनागमनं
न च सर्वमस्ति न च नास्ति पुनः ।
न च दृष्टिस्थानु गतिशुद्धिरिहो
20 न च सत्त्वचरु न प्रशान्तगती ॥ १७ ॥
N 362 अनुपादु शान्तु अनिमित्तपदं
सुगतान गोचरु जिनान गुणाः ।
बलं धारणी दशबलान बलं
बुद्धानियं वृषभिता परमा ॥ १८ ॥
25 वरशुक्लधर्म गुणसंनिचयो
गुणज्ञानधारणिबलं परमम् ।
ऋद्धिविकुर्वणविधिः परमा
वरपञ्चाभिज्ञा प्रतिलाभनयः ॥ १९ ॥
न च स प्रजानतीह स्वभावु कश्चि
30 अगतागती निपुणधर्मगती ।

---

१ A सत्य for सत्त्व. २ After st. 14, A reads:
सुपिनोपम हि त्रिभवस्मिक लघु भग्नमनित्यतमायतनम् ।
न च आगतं न वा इहागतं शून्यानिमित्त सद संस्थितियो ॥
३ A B फल देति for फलमेति. ४ A पुरा for पुनो.

न च धर्मधातु व्रजतीह क्वचि
  *एवं गती अगति धर्मगती ॥ २० ॥*
न च घोषसंचयु स्वभावगती
  गतियो स्वभावु न कहिंचि स्थितः ।
अस्थिता अनिश्रिता स्वभावगती  5
  जिनगोचरो विरजु शान्तपदम् ॥ २१ ॥
शान्तप्रशान्तउपशान्तगती
  न च सा गती क्वचन संस्थिहती[1] ।
भावे[2] स्वभावु सुगताः सततं
  निपुणं सुदुर्दृशु पदं अचलम् ॥ २२ ॥  10
न च सा चला हि स्वयमेव स्थिता
  अस्थिता अनागत स्वभावु स्थिता ।
न च शक्य भावितु स्वभावु स्थिती
  शून्या च सा अचलु धर्मस्थिती ॥ २३ ॥
घोषश्च उक्त न च घोषगती  15
  घोषस्वभावगति धर्मगती ।
न च घोषसंचयु स्थिती च क्वचि
  एवंस्वभावु गति धर्मगती ॥ २४ ॥
गतिशब्द उक्तु न च सत्त्वगती  N 364
  धर्मस्वभाव निपुणार्थगती ।  20
घोषोऽपि चोक्तु न च सत्त्वगती
  न च घोषु लभ्यति न सत्त्वगतिः ॥ २५ ॥
न च अनन्त नान्त न च मध्यगतिः
  नैवास्ति नास्ति न च देशगती ।
ज्ञाता च यादृश स्वभावगती  25
  इय देशना जिनवराण समा ॥ २६ ॥
विरजं विशुद्धि[3] परमार्थपदं
  शान्त प्रशान्त अरजं विरजम् ।
न च कल्प मन्यन प्रशान्तपदं
  जिनु भाषते परमकारुणिको ॥ २७ ॥  30

---

*[1] A संस्थिहती ; C °हतिः for °हती. [2] A भावस्वभावसुगताः सततं for the line. [3] A विशुद्ध* for विशुद्धि.

N 365 न पि चास्ति अक्षरप्रचार इहो
निपुला गैतिर्विपुल अर्थगती ।
बुद्धेहि सेवित जिनेहि स्तुता
अनभास धर्मनय सूक्ष्मगती ॥ २८ ॥

5 धर्मनिधान विरजं विपुलं
यत्र स्थिता अप्रतिमा सुगता ।
देशेन्ति धर्मरतनं विरजं
परमार्थशून्य निपुणार्थगती ॥ २९ ॥

अश्रौषि राज दृढदत्तु तदा
10 द्विपदेन्द्र भाषति समाधिमिमम् ।
सोऽशीतिकोटिनयुतेहि तदा
उपसंक्रमी तद जिनु कारुणिकम् ॥ ३० ॥

कल्पन्तु गौरवु जनेत्व जिने
वन्दित्व पादु मनुजाधिपतिः ।
N 366 15 पुरतः स्थितो दशबलस्य तदा
कृताञ्जलिर्दशनखः प्रमुदितः ॥ ३१ ॥

तस्यो विदित्व परिशुद्ध चरीं
जिन इन्द्रियेषु वशि पारगतः ।
अधिमुक्तिकोविदु नरः प्रवरो
20 इमु तस्य देशयि समाधिवरम् ॥ ३२ ॥

यद तेन राज्ञ परमार्थ श्रुतो
उत्पन्न प्रीति अरिया विपुला ।
उज्झित्व द्वीप रतनांश्चतुरो
विजहित्व काम अभिनिष्क्रमि सो ॥ ३३ ॥

25 यद राज प्रव्रजि जहित्व महीं
बोधाय अर्थिकु भविष्यिजिनः ।
सर्वे मनुष्य [illegible] जम्बुध्वजे
विजहित्व कामरती प्रव्रजिता ॥ ३४ ॥

विपुलो गणो दशबलस्य तदा
N 367 30 बहु भिक्षु भिक्षुणि प्रयुक्तमनाः ।

अकृष्टा अनुप्ता तद् ओषधयो
प्रादुर्भूता भक्तपरिचाराः ॥ ३५ ॥
काषाय त्रिचीवर प्रादुर्भूता
समच्छिन्न सुसीवित तेऽनुपमाः ।
अमला विरजाश्च सुवर्णचिता[1] 5
बुद्धस्य गुणोचित पुण्यबलाः ॥ ३६ ॥
पश्यो कुमार स हि राजवरो
विजहित्व सर्व महि प्रव्रजितः ।
भेष्यन्ति सत्त्व क्षयकालि बहु
अपरीत्तभोगा न त्यजन्ति गृहान् ॥ ३७ ॥ 10
ताडन बन्धन कुदण्ड बहु
आक्रोश तर्जनमनिष्टदुखम् ।
सहिष्यन्ति राजकुल पीड बहु N 368
सुपरीत्तभोग न च भक्तु गृहे ॥ ३८ ॥
अपरीत्त आयु न च अस्ति धनं 15
सुमहान् प्रमादु न च पुण्यबलम् ।
न च शिल्पस्थानकुशला अबुधा
दारिद्रियं च न च वित्त गृहे ॥ ३९ ॥
परदारगृद्ध अविशुद्धमना
ईर्ष्यालुकाः परमसाहसिकाः । 20
संक्लिष्टधर्म न च वृत्त स्थिता
वक्ष्यन्ति बुद्ध भविष्याम वयम् ॥ ४० ॥
उत्कोच[2]वञ्चनक साहसिका
अहमाढ्यु धर्म धनदास्मि जगे ।
उपघातकाः कुहक नैकृतिका 25
वक्ष्यन्ति बुद्ध भविष्याम वयम् ॥ ४१ ॥
वधबन्धुपद्रवि परस्य रताः
दुःशील दारुण प्रदुष्टमनाः ।
अशान्तान्त भेदक विहिंसस्थिता
वक्ष्यन्ति हं ते मम बोधिचारिम् ॥ ४२ ॥ 30
यस्यैव तेन श्रुत बोधिचरी
तस्यैव मन्यि प्रतिघं जनयी ।

---

१ C अवर्णचिता for सुवर्णचिता. २ B उत्स्फोट° for उत्कोच°.

स. २१

श्रुत्वा च बुध· स्खलितमेकपदं
तस्यैव भाषति अवर्णशतान् ॥ ४३ ॥

तदिमा कुमार मम श्रुत्व गिरं
मा तेहि संस्तवु करोहि तदा ।
5 सुपिनान्तरेऽपि अनिश्रस्त सिया
यदि इच्छसे स्पृशितु बोधिचरीम् ॥ ४४ ॥

N 370 धूतवृत्त सलिखित नैकगुणान्
परिकीर्तयन्तु बहुकल्पशतान् ।
भणती गुणान्न च गुणेषु स्थितो
10 न स बुध्यते परमबोधिगिरीम् ॥ ४५ ॥

भवथा सदापि अखिला मधुरा
सद शुद्धशील सुप्रसन्नमना ।
परिशुद्धशील भवथा सतत
नचिरेण लप्स्यथ समाधिवरम् ॥ ४६ ॥

15 न करोथ मान न जनेथ खिल
परिशुद्धमानस सदा भवथा ।
मद् मान म्रक्ष विजहित्व तत.
प्रतिलप्स्यथा इमु समाधिवरम् ॥ ४७ ॥

गुणतो अनुस्मरि जिन सतत
20 वरकाञ्चनच्छविप्रभासकरम् ।
N 371 गगने व रात्रिय नक्षत्रस्फुट
तथ कायु लक्षणस्फुटो मुनिनो ॥ ४८ ॥

ध्वजच्छत्रवितानपताकवरा
चूर्णानुलेपन गृहीत्व बहून् ।
25 पूजा करोथ सुगतस्य सदा
नचिरेण लप्स्यथ समाधिवरम् ॥ ४९ ॥

वर गन्धमाल्यकुसुमा रुचिरा
वादित्र तूर्य प्रगृहीत बहु ।

---

१ B स्थिताम् २ Mss सखिला our reading is based on T. ३ C लप्स्यति for लप्स्यथ throughout ४ C वरगन्धमाल्य for गगने व रात्रिय ५ *After st 48 ABT read.*

चंक्रमस्थाननिषद्यशयिन स्मरते मनुजो मुनिचन्द्रम् ।
तिष्ठति तस्य पुर सद शास्ता तस्य निर्वृति भोति उदारा ॥

६ After st 50, ABT read :

वरनृत्यगीत बहुभिर्विविधैर्वरहास्यलास्यपरिशुद्धमना ।
वरदीपदामरचितैश्च सदा प्रकरोथ पूज वर अप्रतिमे ॥

जिनस्तूपि पूज प्रकरोथ सदा
नचिरेण लप्स्यथ समाधिवरम् ॥ ५० ॥

पणवैः सुघोषकमृदङ्गशतैः
पटहैर्विपञ्चिवरवेणुरवैः।
मधुरस्वरैर्विविधवाद्यगणैः [१]
पूजेथ नायकु प्रसन्नमनाः ॥ ५१ ॥

कारेथ बुद्धप्रतिमां रुचिरां
रतनामयीं सुपरिकर्मकृताम्। [२]
प्रासादिकां परमसुदर्शनीयां [३]
नचिरेण लप्स्यथ समाधिवरम् ॥ ५२ ॥ [४]

वनषण्ड सेवथ विविक्त सदा
विजहित्व ग्रामनगरेषु रतिम्।
अद्वितीय खड्गसम भोथ सदा
नचिरेण लप्स्यथ समाधिवरम् ॥ ५३ ॥

अहु धर्मस्वामि मम यूयु सुता
अनुशिक्षथा मम समाधिचरिम्।
अहु सो अभूपि दिशता सुविश्रुतो
दृढदत्तु नाम मनुजाधिपतिः ॥ ५४ ॥

मय बुद्ध पूजित अनन्त पुरे
मय शीलु रक्षितु विशुद्धमनाः।
मये गौरवं दशबलेषु कृतं
इमु शान्तभेषत समाधिवरम् ॥ ५५ ॥ [५]

मये पुत्र दार परित्यक्तं पुरे
शिरहस्तपादनयनाप्रवराः। [६]
न च लीनचित्तत कदाचि कृता
इमु शान्तभेषत समाधिवरम् ॥ ५६ ॥

१ BT °वाद्यगुणै for °गणैः. २ B रत्नामयीन् सुपरिकर्मकृताः for the line. ३ B प्रसादिकां.
४ After st. 52, ABT add:

तथ हेमरूप्यकमयीं प्रतिमां कारेथ चन्दनमयीं च वराम्।
प्रासादिकां परमसुदर्शनीयां नचिरेण लप्स्यथ समाधिवरम् ॥
कारेथ मृन्मयमयीं प्रतिमां तथ शैलदारुपटचित्रगताम्।
प्रासादिकां परमसुदर्शनीयां नचिरेण लप्स्यथ समाधिवरम् ॥

५ B om. lines 3–4 of this stanza. ६ B om. this line.

धनधान्य दास बहुदासिशता
रतना प्रभूत परित्यक्त मया।
संतर्पिता पि बहुयाचनका
इमु शान्तमेषत समाधिवरम्॥ ५७॥

5 मय मुक्ति स्फाटिक सुवर्ण बहु
वैदूर्य शङ्ख शिल त्यक्त पुरे।
N 374 मणि शुद्धरूपिय प्रवाल घना
इमु शान्तमेषत समाधिवरम्॥ ५८॥

मये त्यक्त आभरण नानविधा
10 वरमुक्तहार तथ सीहर्तुकाः।
रतनान जालिक विशिष्ट पृथु
इमु शान्तमेषत समाधिवरम्॥ ५९॥

मय वस्त्रकोट्य परमा सुखुमाः
परिशुद्ध काशिकदुकूलवराः।
15 बहुहेमचित्र परित्यक्त परे
इमु शान्तमेषत समाधिवरम्॥ ६०॥

मय हस्ति अश्व रथ नार्नारगाः
परित्यक्त स्वप्रियसुतो महिलाः।
न च दौर्मनस्यत कदाचि कृता
20 इमु शान्तमेषत समाधिवरम्॥ ६१॥

N 375 मय दृष्ट पूर्वि सुदरिद्र नराः
पर्योष्टिदुःखित च कृच्छ्रगताः।
मय ते धनेन अदरिद्र कृता
इमु शान्तमेषत समाधिवरम्॥ ६२॥

25 हस्ती रथाश्वरथका नयुताः
प्रच्छन्नरतनमणिजालचिताः।
दत्ता मया याचनकान पुरा
इमु शान्तमेषत समाधिवरम्॥ ६३॥

उद्यान कोटिनयुता बहवः
30 समलंकरित्व मय दत्त पुरा।

१ B om. st. 57. २ C प्रमनुष्ना for प्रवाल घना. ३ B om. st. 59. ४ A सीहडस्त्रः for सीहर्तुकः. ५ A B सुप्रियस्नु for स्वप्रियसुतो. ६ B सुकृच्छगताः for च कृच्छ्र॰.

हर्षेत्व मानसु जनित्व कृपां
　　इमु शान्तमेषत समाधिवरम् ॥ ६४ ॥

ग्रामाथ राष्ट्रनगरा निगमाः
　　समलंकरित्व मय दत्त पुरा ।
दत्वा च प्रीतिमनुभोमि सदा　　5
　　इमु शान्तमेषत समाधिवरम् ॥ ६५ ॥

रतनान राशय सुमेरुसमा-　　N 376
　　स्तथ चीवराभरणकाथ बहु ।
ये दत्त पूर्वि मय याचनके
　　इमु शान्तमेषत समाधिवरम् ॥ ६६ ॥　　10

सुदरिद्र सत्त्व कृत आढ्य[1] मया
　　[2]परिकृच्छ्रप्राप्त परित्रात बहु ।
बहुदुःखुपद्रुत सुखी मि कृता
　　इमु शान्तमेषत समाधिवरम् ॥ ६७ ॥

यद आसि ईश्वरु महीय अहं　　15
　　दुखितां च पश्यमि बहुं जनताम् ।
उत्सृष्ट तेषु मय राज्यमभूत्
　　कृप संजनेत्व सुखितो च यथा ॥ ६८ ॥

ये मे कुमार कृत आश्चरिया
　　कृत दुष्कराणि बहु कल्पशता ।　　20
न च ते मय [3]क्षपण शक्य सिया
　　कल्पान कोटिनयुता भणतः ॥ ६९ ॥

उन्मत्तचित्तभूमि गच्छि नरा　　N 377
　　अश्रद्दधन्त सुगतस्य चरिम् ।
कृत ये मि दुष्कर तदाश्चरिया　　25
　　इमु शान्तमेषत समाधिवरम् ॥ ७० ॥

आरोचयामि च कुमार इदं
　　श्रद्दधन्त मे अवितथं वचनम् ।
न हि वाच भाषति मृषां सुगतः
　　सद सत्यवादि जिनु कारुणिकः ॥ ७१ ॥　　30

---

१ B आत्मयाः for आढ्य मया. २ A परम°; B पर° for परि°. ३ A B क्षपण शक्यसि या for क्षपण शक्य सिया.

अन्ये इमेऽपि च प्रकार बहू
चरता मि शोधित य कल्पशता ।
कथमह लभित्विमु समाधिवर
मोचेय सत्त्वनियुता दुखिताम् ॥ ७२ ॥

N 378 5
यस्मिन् क्षणे अयु समाधि मया
प्रतिलब्ध भूत महाज्ञानपथ ।
सोऽहं लभित्विमु समाधिवर
पश्यामि बुद्धनयुतान् सुबहून् ॥ ७३ ॥

ऋद्धी अनन्त प्रतिलब्ध मया
स निर्मिणामि[१] व्रजि क्षेत्रशतान् ।
गत्वा च पृच्छि अहु कारणिनान्
प्रश्नान कोटिनियुतान बहुम् ॥ ७४ ॥

10

यथैव भाषि मम ते सुगता
प्रश्नान कोटिनियुतान तदा ।
गृह्णित्व सर्वमहु धारयमी
न च श्रेष्यते[२] एकपद पि मम ॥ ७५ ॥

15

त चो श्रुणित्व अहु भूतनय
प्रश्नान कोटिनयुतान बहुम् ।
देशित्व त विरज शान्तपद
स्थापेमि सत्त्व बहु ज्ञानपथे ॥ ७६ ॥

N 379
20

अस्मिन् समाधिय स्थिहित्व मया
शिक्षित्व भूतनय कल्पशतान् ।
बहुसत्त्वकोटिनियुतानि पुरा
ये स्थापिता विरजि मार्गवरे ॥ ७७ ॥

येही न दृष्ट पुरिमा सुगता
भाषन्तका इमु नयं विरजम्[३] ।
तेही न शक्यमिह[४] श्रद्दधितु
परमार्थशून्यत समाधिवरम् ॥ ७८ ॥

25

ये श्राद्ध पण्डित निधिज्ञ नरा
गम्भीरभूतनयलब्धनया ।

30

१ C प्रत्र २ B श्रेष्यति ३ AB समाधिवरम् for नयं विरजम् ४ AB शक्यमिमु for शक्यमिह

ते ना त्रसन्ति न च संत्रेसिषू
श्रुत्वा च भोन्ति सद आत्तमनाः ॥ ७९ ॥ N 380

ते ते धरेन्ति वरबोधि समा[2]
ते ते हि पुत्र अनुजात मम ।
ते ते ह्युदुम्बरकुसुमसमा-
स्तेषार्थ हं चरितु कल्पशतान् ॥ ८० ॥

न पि तस्य अस्ति विनिपातभयं
अष्टाक्षणा विगत तस्य सदा ।
द्रक्ष्यन्ति बुद्धनयुतान् सुबहून्
इमु यः समाधि नरु धारयती ॥ ८१ ॥

यथ मैत्रको जिनु अनन्तयशाः
सत्वान मेष्यि बहुअर्थकरः ।
तथ व्याकरोम्यहमनन्तमतिं
हस्तस्मि यस्य सुसमाधिवरम् ॥ ८२ ॥ N 381

स्मृतिमान् स भोति मतिमान्[3]
ज्ञानोद्गतः श्रुतिधरो भवति ।
प्रतिभानु तस्य भवति विपुलं
इमु यः समाधि नरु धारयती ॥ ८३ ॥

देवानां च स भवति पूजनियो
मनुजा च सद नमस्यनीयः ।
अभिरक्षितः सतत देवगणैः[4]
इमु यः समाधि नरु धारयति ॥ ८४ ॥

न च सोऽग्निमध्ये म्रियते न जले
न च तस्य शस्त्र क्रमते न विषम् ।
न च वैरिणां गमनियो भवती
इमु यः समाधि नरु धारयती ॥ ८५ ॥

वनकन्दरे वसतु तस्य सदा
मनुजा करोन्ति वर पारिचरिम् ।
उपस्थायकाश्च बहु यक्षशता
इमु यः समाधि नरु धारयती ॥ ८६ ॥

१ A संत्रसिव; B संत्रसिष्ठ for संत्रसिषू. २ A वरबोधिमिमां for °बोधि समा. ३ C गतिमान् for मति°. ४ C मृत्युगणै. for देव°.

N 382 ज्ञानेन सागरसमो भवती
न स्त्रजते गुण भणन्तु मुनेः।
भूतांश्च बुद्धगुण कीर्तयते
इमु यः समाधि नरु धारयती ॥ ८७ ॥
5 नान्तो न चास्य पर्यन्तु श्रुते
न प्रमाणु लभ्यति यथा गगने।
ज्ञानोल्कधारि तिमिरं हरति
इमु यः समाधि नरु धारयती ॥ ८८ ॥
स्निग्धं सुयुक्त सद मुञ्च गिरां
10 पर्येत्सु भाषति सुप्रेमणियाम्।
सिंहो यथा स विनदं भणती
इमु यः समाधि नरु धारयती ॥ ८९ ॥
N 383 वैद्यो भिषकु समु सो भवती
गति लेनु त्राण शरणं बहूनाम्।
15 आलोकभूतु जगि सो भवति
इमु यः समाधि नरु धारयती ॥ ९० ॥
न च तस्य मैथुनि मनो रमते
शमथे रतः स्पृशति ध्यानसुखम्।
शान्तां स भाषति प्रशान्त गिरम्
20 इमु यः समाधि नरु धारयती ॥ ९१ ॥
न च तस्य मानसु निमित्तरतं
सर्वे विभावित निमित्त पृथु।
सततं समाहितु विदू भवती
इमु यः समाधि नरु धारयती ॥ ९२ ॥
25 चक्षुश्च सो लभति अप्राकृतकं
येनो स पश्यति अनन्तजिनान्।
N 384 सोऽनन्तचक्षुर्भवति वृषभो
इमु यः समाधि नरु धारयती ॥ ९३ ॥
क्रौञ्चस्वरो मधुरयुक्तगिरो
30 कलविङ्कदुन्दुभिस्वरो भवती।
संगीतियुक्तस्वरु मञ्जुगिरो
इमु यः समाधि नरु धारयती ॥ ९४ ॥

१ AB न च for न. २ B चरति. ३ AB सगीति° for संगीति°.

मे[1]घाभिगर्जितस्वरो भवती
　हंसस्वरो रवति मञ्जुगिरः ।
पञ्चस्वराङ्गशतयुक्तस्वरो
　इमु यः समाधि नरु धारयती ॥ ९५ ॥
बहुकल्पकोटिनयुता विविधा
　मधुरस्वराङ्गसुप्रयुक्तस्वराः ।
अचिन्तिया स गिर निश्चरती
　इमु यः समाधि नरु धारयती ॥ ९६ ॥
न च भोजने भवति गृ[2]ध्नुमना
　न पात्रचीवररतो भवती ।
अ[3]ल्पेच्छु संतुष्ट सुसंलिखितो
　इमु यः समाधि नरु धारयती ॥ ९७ ॥
न[4] च आत्मउत्कर्षकु सो भवती
　न परस्य भाषति अवर्णु कचित् ।
ध्याने रतः सुखुमचित्तु सदा
　इमु यः समाधि नरु धारयती ॥ ९८ ॥
आत्मानुप्रेक्षी सततं भवती
　न परस्य स्खलितमेषति च ।
अविरुद्धु सर्वि जगि सो भवती
　इमु यः समाधि नरु धारयती ॥ ९९ ॥
अक्लिष्टचित्तु परिशुद्धचरी
　अशठो अमक्षकु सदा भवती ।
सहमार्दवः सद विमोक्षरतो
　इमु यः समाधि नरु धारयती ॥ १०० ॥
ई[5]र्ष्याविमुक्त सततं भवती
　मात्सर्यचित्तु न च तस्य रतम् ।
शीलेऽनुगेतु सतत भवती
　इमु यः समाधि नरु धारयती ॥ १०१ ॥
अभिरूप दर्शनियु प्रेमणियो
　वरकाञ्चनच्छवि प्र[6]भास्वरः ।

---

१ A om. st. 95. २ B गृद्धमना for गृध्नु°. ३ C तस्य अल्पेच्छु असंलिखितो. ४ AB om. st 98. ५ B om. st. 101. ६ B प्रभास्वरः for प्रभासरः.

द्वात्रिंशल्लक्षणधरो भवती
इमु यः समाधि नरु धारयती ॥ १०२ ॥
प्रासादिकश्च सद सो भवती
अभिलक्षितो बहुजनस्य प्रियो।
5 प्रेक्षन्त तृप्ति न लभन्ति नरा
इमु यः समाधि नरु धारयती ॥ १०३ ॥
देवास्य नाग तथ यक्षगणा-
स्तुष्ट उदग्राः सद आत्तमनाः।
N 387 भाषन्ति वर्ण प्रविशित्व कुला-
10 निमु यः समाधि नरु धारयती ॥ १०४ ॥
ब्रह्मो च शक्र वशवर्ति बहु
उपस्थानु तस्य प्रकरोन्ति सदा।
न च तस्य उन्नत मनो भवती
इमु यः समाधि नरु धारयती ॥ १०५ ॥
15 न च तस्य दुर्गतिभयं भवती
न पि चाक्षणा न विनिपातभयम्।
परिमुक्त सर्वविनिपातभया-
दिमु यः समाधि नरु धारयती ॥ १०६ ॥
न च तस्य कश्चि विमतिर्भवती
20 वर बुद्धधर्म शृणिया निपुणान्।
गम्भीरज्ञानानुगतो भवती
इमु यः समाधि नरु धारयती ॥ १०७ ॥
यं यं पि धर्म शृणती सुखुमं
सर्वत्र भोति धरि पारगतः।
N 388 25 बलवन्तु हेतुनिपुणो भवती
इमु यः समाधि नरु धारयती ॥ १०८ ॥
एवं प्रभाषित जिनेन गिरा
अहु तेन भोमि परिचीर्ण सदा।
लभते च धारणि विशिष्ट वरा-
30 मिमु य समाधि नरु धारयती ॥ १०९ ॥
कालक्रिया च स करोति यदा
अमिताभु तस्य पुरतः स्थिहती।

---

1 B om. st. 105. C ब्रह्मा for ब्रह्मो च. 2 A यं कैनि, B यं कन्ये for यं यं पि. 3 [illegible]

भिक्षुगणेन सह कारुणिको
　इमु यः समाधि नरु धारयती ॥ ११० ॥
लाभी च धारणिय सो भवती
　धर्मनिधान वशिपारगतः ।
प्रतिभानवाननाच्छेद्यगिरो　　5
　ये इमं समाधि नरु धारयेती ॥ १११ ॥
येनेरे सो व्रजति धर्मधरो　　N 389
　आलोकभूत भवती जगतः ।
सुप्रशान्तचार सुविशुद्धमना
　इमु यः समाधि नरु धारयती ॥ ११२ ॥　　10
वर धर्मकोश त्रिविधं निपुणं
　सो धर्मकाय वशि पारगतः ।
सो संशयं छिनत्ति सर्वजगे
　इमु यः समाधि नरु धारयती ॥ ११३ ॥
सर्वेऽपि सत्त्व सिय कारुणिका　　15
　भगवान् भवान्तकरणे सुगतः ।
तान् सत्कारेय्या बहु कल्पशतान्
　यथ गङ्गवालुक ततोत्तरि वा ॥ ११४ ॥
यश्चैव पश्चि क्षयकालि इमं
　श्रुत्वा समाधिमिद कश्चि नरः ।　　20
अनुमोदमीति भणतीह गिरं
　कल पुण्यस्कन्ध न स पूर्व भवेत् ॥ ११५ ॥
पश्यो कुमार इय शान्तगती　　N 390
　परमार्थशून्यत समाधिवरो ।
प्राप्तु मोति तथ पुस्तगतः　　25
　सो धर्मभाणकु स्थितः सुमतिः ॥ ११६ ॥

इति श्रीसमाधिराजे तेजगुणराजपरिवर्तो नामोनत्रिंशतितमः ॥ २९ ॥

---

१ AB इमु यः for य इमं. २ After st. 111, AB add:
　प्रमुदित विमल प्रभाकरि भूमि अर्चि सुदुर्जय अभिमुख चैव ।
　दूरंगम अचल स साधुमती भूमी च धर्ममेघ लभते दशमी ॥
　आयु कर्मपरिष्कारविमुक्ति अधिमुक्ति ऋद्धि उपपत्तिबलं च ।
　धर्मचित्त तथ ज्ञान महन्तं दश वशिताश्रियु शूर लभति ॥
३ A om. st. 112. ४. C धर्मवरो for °धरो. ५ AB सर्वजगती.

## अनुशंसापरिवर्तः ।

N 391 अथ[1] खलु भगवान् पुनरेव चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मात्तर्हि कुमार य आकाङ्क्षेद्[2] बोधिसत्त्वो महासत्त्वः—किमित्यहं सर्वसत्त्वानां रुतमधिगच्छेयमिन्द्रियाणां च परापरज्ञतां विज्ञाय धर्मं देशयेयमिति, तेन कुमार बोधिसत्त्वेन महासत्त्वेन अयं सर्वधर्मस्वभावसमताविपञ्चितः समाधिः श्रोतव्य उद्ग्रहीतव्यः पर्यवाप्तव्यो धारयितव्यो वाचयितव्यः अरणाभावनया भावयितव्यो[3]
5 बहुलीकर्तव्यः परेभ्यश्च विस्तरेण संप्रकाशयितव्यः ॥

अथ खलु भगवांस्तस्यां वेलायामिमाँ[4] गाथा अभाषत—

अपरिमित अतीत नायकास्तेन दृष्टाः
पुरतु पश्य प्रयुक्ता पृच्छिता लोकनाथाः ।
प्रवर कुशलमूले तिष्ठतो बोधिसत्त्वो
10 इमु विरजसमाधिं धारयेन्[5] मोक्षकामः ॥ १ ॥
लभति सुख प्रणीतं दिव्यमानुष्यकं चो[6]
लभति परमपूजां दिव्यमानुष्यकां सो ।
N 392 लभति सुख प्रणीतं ध्यानसौख्यार्यसौख्यम्
इमु विरज समाधिं धारयन् मोक्षकामः ॥ २ ॥
15 वर्णु[7] श्रुणिय उदारं हर्षु तस्यो न भोति
न पि च पुनरवर्णे मङ्कुभावं निगच्छेत् ।
शैलोपमु अकम्पेय्यो अष्टभिर्लोकधर्मै-
रिमु विरज समाधिं धारयन् मोक्षकामः ॥ ३ ॥
अखिल[8]मधुरवाणी श्लक्ष्णवाचा सुयुक्ता
20 अपगतभ्रुकुटिश्चो पूर्वआलापि भोति ।
सततस्मितमुखश्चो शिक्षितो नायकानाम्
इमु विरजसमाधिं धारयन् मोक्षकामः ॥ ४ ॥
भवति स सुखवासः सूरतः स्निग्धचित्तो
भवति सद सुदान्तो दान्तभूमिस्थितश्च ।
25 सुमधुर प्रियवाणी[9] स्निग्धसत्याभिधायी
इमु विरजसमाधिं धारयन् बोधिकामः ॥ ५ ॥
न च स कथ करोती वैग्रही नो विवादान्
अपगतखिल दोषा वर्जितास्तेन शेषाः ।

---

[1] A तत्र भगवान् पुनरपि for अथ खलु भगवान् पुनरेव. [2] After आकाङ्क्षेत्, C adds सचेत्. [3] A om. भावयितव्य. [4] A इमां गाथाम् for इमा गाथा. [5] B धारये for धारयन्. [6] A om. st. 2. [7] C बहु for वर्णु [8] A सखिल° for अखिल° [9] A प्रियभाणी.

प्रमुदित सद भोती सूरतो मार्दवश्च
  इमु विरज समाधिं धारयन् बोधिकामः ॥ ६ ॥ N 393
भवति च सद विद्वांस्त्यागि नित्याभियुक्तः
  सुदुःखित जन दृष्ट्वा तेषमन्नं ददाति।
प्रियतरु परित्यक्तुं भोति नित्यं सुदाता 5
  इमु विरजसमाधिं धारयन् बोधिकामः ॥ ७ ॥
देवशतसहस्राण स्पृहां ये संजनेन्ती
  नाग असुर यक्षा नित्युपस्थायकास्य।
धनि पवनि वसन्ते रक्ष तस्या करोन्ती
  इमु विरज समाधिं यो नरो धारयाति ॥ ८ ॥ 10
भणि वचनमसक्तं ब्रह्मघोषस्वरोऽसौ
  हंसरुतितघोषः किन्नरोद्गीतघोषः।
पञ्चशतस्वराङ्गो हर्षणीयस्वरश्चो
  भवति नदितशब्दो घुष्टशब्दः सुशब्दः ॥ ९ ॥
यावतनु पृथु क्षत्राण नरः कश्चिदेव N 394
  सूक्ष्म रज करेय्या शक्य ते लक्षणाय।
ततु बहुतर तस्यो ये स्वरा निश्चरन्ती
  इमु विरज समाधिं यो नरो धारयाति ॥ १० ॥

इति श्रीसमाधिराजेऽनुशंसापरिवर्तो नाम त्रिंशतितमः ॥ ३० ॥

---

१ AB मोक्षकाम for बोधि°. २ B om. st. 7. ३ A om. st. 8. ४ After st. 10, ABT add:
दशवशित लभति भूमियो द्वे च अष्टौ
लभति विदु अशेषा बुद्धधर्मानचिन्त्यान्।
स्पृशति वचनवो धि सर्वमारान् जिनित्वा
इमु विरज समाधिं यो नरो धारयाति ॥

## ३१

## सर्वधर्मस्वभावनिर्देशपरिवर्तः ।

N 395 तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मात्तर्हि कुमार य आकाङ्क्षेद् बोधिसत्त्वो महासत्त्वः—किमित्यहं सर्वधर्माणां स्वभावं कथं जानीयामिति, तेन कुमार बोधिसत्त्वेन महासत्त्वेन अयं सर्वधर्मस्वभावसमतानिपञ्चितः समाधिः श्रोतव्यः उद्ग्रहीतव्यः पर्यवाप्तव्यो धारयितव्यो वाचयितव्यः उद्देष्टव्यः स्वाध्यातव्यः अरणाभावनया भावयितव्यो बहुलीकर्तव्यः[1] परेभ्यश्च विस्तरेण संप्रकाशयितव्यः ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत—

तस्यो रागु न जातु कुप्यते न च दोषो
तस्यो मोह न जातु कुप्यते वृषभिस्य ।[2]
तेनो सर्वि किलेश च्छोरितानवशेषा
योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥ १ ॥

N 393 सोऽसौ शिक्ष न जातु ओसिरी[3] सुगताना
सोऽसौ शत्रु न जातु इन्द्रियाणां वशमेति ।
सोऽसौ शासनि प्रीति विन्दते सुगताना
योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥ २ ॥

15 सोऽसौ ज्ञानविधिज्ञ पण्डितो मतिमांश्च
सोऽसौ बुद्ध अनन्त पश्यती अपर्यन्ता ।
सोऽसौ धारणिज्ञानु जानती अपर्यन्त
योऽसौ धर्मस्वभावु जानती नयेयुक्तिम्[4] ॥ ३ ॥

सोऽसौ नेह चिरेण भेष्यति द्विपदेन्द्र
20 सोऽसौ वैद्यु भिषकु भेष्यते[5] सुखदाता ।
सोऽसौ उद्धरि शल्य संनेशो[6] दुःखिताना
योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥ ४ ॥

सोऽसौ आतुर ज्ञात्व दुःखितानिमि सत्त्वान्
सोऽसौ भेरी सदा पराहनी अमृतस्य ।
25 सोऽसौ भेष्यति नायको जिनो नचिरेण
योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥ ५ ॥

---

१ After वाचयितव्य, A adds प्रवर्तयितव्य, and B adds देशयितव्य उपदेष्टव्य  २ A तस्यो जनु न मोह कुप्यते वृषभिस्यो for the line  ३ A ओसरी for ओसिरी  ४ A नयमुक्तिम् for नययुक्तिम्  ५ B वैद्यु भिषकु भेष्यति for वैद्यु भिषकु भेष्यते  ६ A संनेनो for संनेशो  A om जिनो

सोऽसौ भैषज्यनयेषु कोविदो वरवैद्यो
　　आदि[1] जानति सर्वव्याधिनां यत्र मुक्तिः ।
सोऽसौ भूतनयशिक्षितो मतिमन्तो
　　शिक्षित्वा बहुसत्व मोचयी पृथु नष्टान् ॥ ६ ॥　　5

सोऽसौ शून्यनयेषु कोविदो मतिशूरः
　　सोऽसौ लोकि असक्तु गुञ्जति सद पिण्डम् ।
सोऽसौ बोधिवराय स्थापयि बहुसत्वान्
　　योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥ ७ ॥

सोऽसौ क्षान्तिबलेन उद्गतो नरचन्द्रः[2]　　10
　　सोऽसौ लोष्टकदण्डताडितो न च कुप्यी ।
सोऽसौ छिद्यतु अङ्गमङ्गशो न च क्षुभ्ये
　　योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥ ८ ॥

सोऽसौ क्षान्तिबले प्रतिष्ठितो बलवन्तो
　　सोऽसौ क्षान्तिय वस्तु तादृशो सुप्रशान्तः ।　　15
सोऽसौ क्षान्तियलेन मन्यते [3]मतिशूरो
　　योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥ ९ ॥



सोऽसौ वस्तु न जातु मन्यते अङ्ग छिन्ना
　　तेनो सर्वि मना विभाविताः सद शून्याः ।
तस्यो संज्ञा प्रहीण सर्वशो निखिलेनो　　20
　　योऽसौ धर्मस्वभावु जानती [4]सुप्रशान्तम् ॥ १० ॥

ते ते धर्मस्वभावु देशयी सुप्रणीतं
　　ते ते बोधि स्पृशी अनुत्तरां नचिरेण ।
येषां धर्मस्वभावु गोचरः सुनिध्यप्तो
　　तेषां दत्त अनन्त दक्षिणा अपर्यन्ता ॥ ११ ॥　　25

सोऽसौ भाषति सूत्रकोटियो अपर्यन्ता
　　यथ गङ्गनदीय वालिकास्ततु भूयः ।
नो चास्यु प्रतिभानु छिद्यते वर्णमाने[5]
　　योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥ १२ ॥

सोऽसौ कल्पसहस्रकोटिशो नयुतानि　　30
　　ज्ञानेनो सद भोति उद्गतो यथ मेरुः ।

१ Mss आर्धि, but our reading is based on T. २ B मतिचन्द्रो for नरचन्द्रः. ३ AB om. मति-. ४ C अप्रशान्त- for सुप्रशान्तम्. ५ A भणमाणे for वर्णमाने.

धर्म तस्य क्षयो न विद्यते भणमाने
योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥ १३ ॥

N 399

विस्तीर्ण विपुलं अचिन्तियं प्रतिभानं
भोती बोधिवरां गवेषतः सद तस्यो ।
5
नित्यं भाषति सूत्रकोटियो अपर्यन्ता
योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥ १४ ॥

यं चैते द्विपदोत्तमा जिना भणि धर्मं
सर्वं तं च श्रुणित्व गृह्णती परिपूर्णम् ।
नो वा एकपदेऽपि विद्यते विमतिस्यो
10
योऽसौ सर्वि अभाव जानती इमि धर्मान् ॥ १५ ॥

सोऽसौ भोति विशिष्ट त्यागवान् सद कालं
भोती दानपतिः सुखंददो दुःखितानाम् ।
दृष्ट्वा दुःखित सत्त्व तर्पयी रतनेही
योऽसौ धर्मस्वभावु जानती सद शून्यम् ॥ १६ ॥

15
सोऽसौ जम्बुध्वजे भविष्यती सद राजा
सत्त्वानां सद सौख्य काहिती अपर्यन्तम् ।
मैत्राये समुपेतु प्राणिनां सद काले
योऽसौ धर्मस्वभावु जानती सद शून्यम् ॥ १७ ॥

N 400

पुत्रान् धीतर दासदासियो त्यज्य धीरो
20
हस्तौ पाद शिरासि स त्यजी तथ राज्यम् ।
नो चालीयति तस्य मानसं बृषभिस्यो
योऽसौ धर्मस्वभावु जानती सद शून्यम् ॥ १८ ॥

अङ्गाङ्गं पुन तस्य छिद्यती यदि कायो
नो तस्य प्रतिहन्यते मनः सुपिनेऽपि ।
25
तेनो पूजित भोन्ति नायका द्विपदेन्द्रा
योऽसौ धर्मस्वभावु जानती सद शून्यम् ॥१९ ॥

तेनो पूजित सर्वि नायका य अतीता-
स्तथ पूजित ये अनागता द्विपदेन्द्रा ।
तेही सत्कृत सर्वि नायका स्थित ये चो
30
योऽसौ धर्मस्वभावु जानती सद शून्यम् ॥ २० ॥

---

१ A रत्नेनु, C रमते [illegible] for रत्नेही. २ A om. st. 17. ३ AB त्यजी for त्यज्य. ४ C शान्तम् for शून्यम्. ५ A om st. २०. ६ C सुभपिर्न अप्रमुख्य् of प्रमापिनि अप्रमुख्यम्

सोऽसौ कोश धरेति पण्डितः सुगतानां
　　सोऽसौ धारणियें प्रतिष्ठितः परमायाम् ।
सोऽसौ भेष्यति लोकनायको नचिरेण
　　यच्छ्रुत्वा इमु सूत्रं धारयेत् क्षयकाले ॥ २१ ॥
सोऽन्धो नैव कदाचि भेष्यती विदु जातु　　5　N 401
　　नो चो अङ्गविहीनु भेष्यती बहुकल्पान् ।
तेनो अक्षण अष्ट वर्जिता इमि नित्यं
　　येनो सूत्रमिदं प्रभाषितं अग्रसुगम् [1] ॥ २२ ॥
नासौ दुर्गतिषु गमिष्यति पुन जातु
　　नित्यं लक्षणधारि भेष्यती अभिरूपः ।　　10
पञ्चो तस्य अभिज्ञ भाविता इमि नित्यं
　　पुरतः सो सुगतान स्थास्यती सद शूरः ॥ २३ ॥
बहुकान् निर्मित निर्मिणित्वान अयु ज्ञानी
　　प्रेषती बहुक्षेत्रकोटिषु जिनयार्थम् ।
येहि दृष्ट भवन्ति निर्मिता बहु बुद्धाः　　15
　　तेही बोधिवराय स्थापिता बहु सत्वाः ॥ २४ ॥
स्मृतिमन्तः गतिमन्तः प्रज्ञवान् धृतिमांश्च
　　स्थाम्ना वीर्यबलेन सो सदा समुपेतः [2] ।
धर्मपारमिप्राप्त भेष्यति महतेजा　　N 402
　　यः श्रुत्वा इमु सूत्र धारयेत् क्षयकाले [3] ॥ २५ ॥　　20
रश्मिकोटिसहस्र निश्चरी सद तेषां
　　व्योमाः सर्वि करोन्ति मण्डलाः सुरियाणाम् ।
येही भावित भोन्ति शून्यका इमि धर्मा-
　　स्ते ते शूर भवन्ति नायका नचिरेण ॥ २६ ॥
एषो गोचर शान्तु भावितो मय पूर्वे　　25
　　बहुकल्पान सहस्र कोटियो नियुतानि ।

---

१ सुभाषितं for प्रभाषितं. २ C अपेत for समुपेत ३ After st. 25, ३ A B T add
　　सोऽसौ शान्तविहारि सुस्थितो भवि शूरो
　　सोऽसौ क्षिप्र लभासि भूमि दुवि अग्री ।
　　सोऽसौ निर्जितमार कोटियो लघु लप्स्येव
　　योऽसौ शान्त समाधि धारयतो क्षयकाले ॥
　　वशितेहि समुपेत उद्गतु बलवन्तो
　　सोऽसौ सत्वहितार्थि उद्यतो सद सत्वो ।
　　सोऽसौ बोधिवरस्मि बुध्यते वरबोधिं
　　योऽसौ शान्त समाधि भावयी इमु नित्यम् ॥

वीर्यं मे न कदाचि सहसित इह मार्गे
  यदहं दीपकरेण व्याकृतो जिनभूमौ ॥ २७ ॥
यूयं पी मम चर्या शिक्षथा इह सूत्रे
  गम्भीरा परमार्थ देशिता इय नेत्री ।
N 403 5 यत्रामी बहु नष्ट तीर्थिका विपरीना
  क्षिप्त्वा बोधिमपायि भैरवे प्रपतन्ति ॥२८ ॥
बहुकल्पान सहस्रकोटियो नयुतानि
  वेदित्वा अमु तत्र वेदना कटु तीव्राः ।
बहुकल्पा नयुतानमत्ययात् पुनरेव
10 हेतुः सो अमृतस्य प्राप्तये भविष्यते ॥ २९ ॥
ये ते पश्चिमि कालि भैरवे सुगतस्यो
  रक्षन्ति इमु सूत्रमीदृशं प्रशान्तम् ।
तेषा बोधि वरा न दुर्लभा इय श्रेष्ठा
  ते ते पश्चिमि कालि व्याकृत धैरि धर्मान् ॥ ३० ॥

इति श्रीसमाधिराजे सर्वधर्मस्वभावनिर्देशपरिवर्तो नामैकत्रिंशतितमः ॥ ३१ ॥

१ AB भवि तेषाम् for भविष्यते. २ A सुप्रशान्ता for प्रशान्तम्. ३ B धरे for

## सूत्रधारणानुशंसापरिवर्तः ।

N 404

अथ[1] खलु[2] भगवान् पुनरेव[3] चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन[4] महाभिज्ञापरिकर्म धारयितुकामेनायं[5] समाधिर्धारयितव्य उद्ग्रहीतव्यः पर्यवाप्तव्यो धारयितव्यो वाचयितव्यः प्रवर्तयितव्य उद्देष्टव्यः स्वाध्यातव्यो[7] भावयितव्यः, परेभ्यश्च विस्तरेण संप्रकाशयितव्यः । तत्र कतमच्च तत् कुमार सर्वधर्माणामभिज्ञापरिकर्म[8] यदुत सर्वधर्माणामपरिग्रहः, अपरामर्शः शीलस्य, अप्रणिधानता समाधेः, अप्रचारः प्रज्ञायाः, विविक्तदर्शनं विमुक्ति- 5
स्कन्धस्य यथाभूतदर्शनं विमुक्तिज्ञानदर्शनस्य, स्वभावशून्यतादर्शनं सर्वधर्माणाम्[9] । यया-
भिज्ञया समन्वागतो बोधिसत्त्वो महासत्त्वः सर्वसमाधिनिर्वर्तितानि निर्देशं सर्वसत्त्वानां धर्मं N 405
देशयति । इदमुच्यते कुमार महाभिज्ञापरिकर्मेति ॥

अथ खलु भगवांस्तस्यां वेलायामिमां गाथामभाषत[10]— 10

महाभिज्ञापरिकर्म अविवादेन देशितम् ।
विवादे यस्तु चरति सोद्गृह्णन् न विमुच्यते ॥ १ ॥
अभिज्ञा तस्य सा प्रज्ञा बौद्धं ज्ञानमचिन्तियम् ।
उद्ग्रहे य स्थितो भोति ज्ञानं तस्य न विद्यते ॥ २ ॥
यथा अचिन्तिया धर्मा ये शब्देन प्रकाशिता । 15
यस्तत्र निर्विकल्पेद्दे स्वसाभाष्य[11] न जानति ॥ ३ ॥
स्वसाभाष्यमजानानः किं संधाय तु भाषितम्[12] ।
अधर्मं भाषते धर्मं धर्मतायामशिक्षित ॥ ४ ॥
लोकधातुसहस्रेषु ये मया सूत्र भाषिता[14] ।
नानाव्यञ्जन एकार्था न शक्य परिकीर्तितुम् ॥ ५ ॥ 20 N 406
एकं[13] पदार्थं चिन्तेत्वा सर्वे ते भोन्ति भाविताः ।
यावन्त सर्वबुद्धेहि बहु धर्माः प्रकाशिताः ॥ ६ ॥
नैरात्म्य सर्वधर्माणां ये नरा अर्थकोविदाः ।
अस्मिन् पदे तु शिक्षित्वा बुद्धधर्मा न दुर्लभा ॥ ७ ॥
सर्वधर्मा बुद्धधर्मा धर्मतायां य शिक्षिता । 25
ये धर्मता प्रजानन्ति न[15] विरोधेन्ति धर्मताम् ॥ ८ ॥

---

१ AB तत्र for अथ २ A om खलु ३ AB पुनरपि for पुनरेव ४ After महासत्त्वेन, AB add सर्वधर्मस्वभावविपश्चित र्तिप्रभागा ५ B ओधयितुकामेन for धारयितु ६ Before समाधि B reads सर्वधर्मस्वभावविपश्चित ७ After स्वाध्यातव्य AB add अरणाभावनया भावयितव्यो बहुलीकर्तव्य ८ A om from सर्व upto यदुत ९ AB om स्वभाव धर्माणाम् १० AB चन्द्रप्रभस्य कुमारभूतस्येमं सर्वधर्माणां महाभिज्ञापरिकर्मनिर्देशं धर्मपर्यायं गाथाभिगीतेन विस्तारेण संप्रकाशयति स्म for इमां गाथां अभाषत ११ B स्वसाभाष्य for ... १२ B किं सत्त्वा ये तु भाषितं for किं संधायतु १३ B एव for एकं १४ B भाषिता for भाविता १५ A B न ते रोधन्ति for न विरोधेन्ति

सैर्या वाग् बुद्धवागेव सर्वशब्दो ह्यवस्तुक ।
दिशो दश गवेषित्वा बुद्धवाग् नैव लभ्यते ॥ ९ ॥
एषा वाचा बुद्धवाचा गवेषित्वा दिशो दश ॥
न लभ्यतेऽनुत्तरैषा न लब्धा न च लप्स्यते ॥ १० ॥
5 अनुत्तरा बुद्धवाचा बुद्धवाचा निरुत्तरा ।
अणुर्न लप्स्यतेऽत्रेति तेनोक्तेयमनुत्तरा ॥ ११ ॥
N 407 अणु नोत्पद्यते धर्मो अणुशब्देन देशित ।
अणुमात्रो न चो लब्धो लोके शब्देन देशित ॥ १२ ॥
अलब्धिर्लब्धधर्माणा लब्धौ लब्धिर्न विद्यते ।
10 य एव धर्म जानन्ति बुध्यते बोधिमुत्तमाम् ॥ १३ ॥
ते बुद्धानुत्तरा बोधिं धर्मचक्र प्रवर्तयी ।
धर्मचक्र प्रवर्तित्वा बुद्धधर्मान् प्रकाशयी ॥ १४ ॥
बोधिसत्त्वाश्च बुध्यते बुद्धज्ञानमनुत्तरम् ।
तेन बुद्धा इति प्रोक्ता बुद्धज्ञाना प्रबोधनात् ॥ १५ ॥
15 अभावो अप्रणिहितमानिमित्त च शून्यता ।
एभिर्विमोक्षद्वारैर्द्वार बुद्ध प्रकाशयी ॥ १६ ॥
चक्षु श्रोत्र च घ्राण च जिह्वा कायो मनस्तथा ।
एते शून्या स्वभावेन सबुद्धै सप्रकाशिता ॥ १७ ॥
एतादृशाना धर्माणा स्वभाव य प्रजानति ।
20 नासौ विवाद कुरुते ज्ञात्वा धर्माण लक्षणम् ॥ १८ ॥
एष गोचर शूराणा बोधिसत्त्वान तायिनाम् ।
न ते कदाचित् काङ्क्षति जानन्ते धर्मशून्यताम् ॥ १९ ॥
N 408 धर्मस्वभाव जानाति बुद्धस्तेनोच्यते हि स ।
बोधये विनयी सत्त्वानप्रमेयानचिन्तियान् ॥ २० ॥
25 सर्वतो बुद्धशब्देन शीलशब्देन सो वृत ।
शीलशब्दो बुद्धशब्द उभौ तावेकलक्षणौ ॥ २१ ॥
यावन्त कीर्तिता शब्दा हीनउत्कृष्टमध्यमा ।
समाहितस्शब्देन बुद्धशब्देन देशिता ॥ २२ ॥
न बुद्धधर्मा देशस्था न प्रदेशस्थ कीर्तिता ।
30 न चोत्पन्ना निरुद्धा वा एकत्वेन पृथक् तथा ॥ २३ ॥

१ A गतवागु वागर for सैर्या वागुद्धागर २ B लभ्यालब्धि for लब्धौ लब्धि ३ C सर्वगातु for अप्रमेयान् A ४ य वृत for सर्वतो ५ B om शीलशब्देन सा वृत

न ते नवा पुराणा वा न तेषामस्ति मन्यना ।
न च नीला न पीता वा नावदाता न लोहिता ॥ २४ ॥
अनाभिलप्या अग्राह्या एव घोषेण देशिता ।
न च घोषस्य सा भूमि प्रातिहार्यं मुनेरिदम् ॥ २५ ॥
अनोपम्या हि ते धर्मा [1] [2]नेन उच्यन्ति हि ।
सूत्रा अपर्यापन्ना दशदिशे एषा बुद्धान देशना ॥ २६ ॥
परिनिर्वृतस्य बुद्धस्य दृश्यते बुद्धविग्रह ।
तत्स्थान मनसीकुर्वन् प्रातिहार्यं स पश्यति ॥ २७ ॥
न चासौ लभ्यते सत्त्वो निर्वृतिर्येन स्पर्शिता ।
एव च देशितो धर्मो बहव सत्त्व मोचिता ॥ २८ ॥
यथा चन्द्रश्च सूर्यश्च कांसपात्रीय दृश्यते ।
न च याति स्वकं बिम्बमेवं धर्माण लक्षणम् ॥ २९ ॥
प्रतिभासोपमा धर्मा यैरिहं ज्ञाता स्वभावत ।
नैव ते रूपकायेन पश्यन्ते बुद्धविग्रहम् ॥ ३० ॥
अविग्रहो ह्ययं धर्मो विग्रहो नात्र कश्चन ।
अविग्रहश्च यो धर्म एष बुद्धस्य विग्रह ॥ ३१ ॥
धर्मकायेन पश्यन्ति ये ते पश्यन्ति नायकम् ।
धर्मकाया हि संबुद्धा एतत् संबुद्धदर्शनम् ॥ ३२ ॥
प्रतीत्य प्रतिनिर्दिष्टा अप्रति प्रतिदेशिता ।
इमा गतिं विजानीत श्रामण्येन हि येऽर्थिका ॥ ३३ ॥
[4]अप्राप्ति प्राप्ति निर्दिष्टा सत्त्वाना ह्यत्र आशयम् ।
यो मयाप्राप्योत्तरते न सो केन विहन्यते ॥ ३४ ॥
यस्य भोति मया प्राप्तमप्राप्त तेन चोच्यते ॥
यत्र श्रामण्यमप्राप्त तेन श्रमण उच्यते ॥ ३५ ॥
एव गम्भीरिमे धर्मा वक्ष्यन्ते ये न शिक्षिता ।
ते च गम्भीरनामेन न शक्य परिकीर्तितुम् ॥ ३६ ॥
असंस्कृता पञ्च स्कन्धा अभूता एत उत्थिता ।
नात्र उत्थापको अस्ति यस्य स्कन्धा समुत्थिता ॥ ३७ ॥
षट्लक्षणा पञ्च स्कन्धा सर्वधर्मास्तल्लक्षणा ।
तल्लक्षणास्ते निर्दिष्टा लक्षणं च न विद्यते ॥ ३८ ॥

---

१ ABT om st 26 २ A दर्शिता B दर्शिता for स्पर्शिता ३ AB ये हि ज्ञाता for यैरिहं ज्ञाता, ४ ABT om st 34 ५ B मयप्राप्त for मया प्राप्तम्

यथान्तरीक्ष गगनमेव धर्माण लक्षणम् ।
पूर्वान्तमपरान्त च प्रत्युत्पन्न च पश्यत ॥ ३९ ॥
अग्राह्य गगन प्रोक्त ग्राह्यमत्र न लभ्यते ।
एष स्वभावो धर्माणामग्राह्यो गगनोपम ॥ ४० ॥
एव च देशिता धर्मा न श्रावको विपश्यति ।
यश्चो न पश्यती धर्म तस्य धर्मा अचिन्तिया ॥ ४१ ॥
अस्वभावा इमे धर्मा स्वभावैषा न लभ्यते ।
योगिना गोचरो ह्येष ये युक्ता बुद्धबोधये ॥ ४२ ॥
य एव जानाति धर्मान् स न धर्मेषु सज्जते ।
असज्जमानो धर्मेषु धर्मसज्ञा प्रबोधयी ॥ ४३ ॥
विभाविता सर्वधर्मा बोधिसत्त्वेन तायिना ।
धर्मसज्ञा विभावित्वा बुद्धधर्मान्न मन्यते ॥ ४४ ॥
अमन्यमाना हि सा कोटी कल्पेत्वा कोटि व्याहृता ।
य एव कोटिं जानाति कल्पकोटिं न मन्यते ॥ ४५ ॥
पुरिमा कोटि कल्पित्वा बाल ससारि ससरि ।
न चास्य लभ्यते स्थान गवेषित्वा दिशो दश ॥ ४६ ॥
शून्य ज्ञात्वा च ससार बोधिसत्त्वो[3] न सज्जते ।
चरन्ति चैव बो यथं चारिस्तेषा न लभ्यते ॥ ४७ ॥
शकुनाना यथाकाशे पद तेषा न लभ्यते ।
एवस्वभावा सा बोधिर्बोधिसत्त्वैश्च बुध्यते ॥ ४८ ॥
यथा माया निदर्शेति[4] मायाकार सुशिक्षित ।
नानाप्रकाररूपाणि न च रूपोपलभ्यते ॥ ४९ ॥
अलब्धिलब्धिर्नो मये लब्धे लब्धिर्न विद्यते ।
मायोपम च तज्ज्ञान न मायाया च तत् स्थितम् ॥ ५० ॥
एव शून्येषु धर्मेषु बालबुद्धि विकल्पयत् ।
विकल्प चरमाणाना गतय षट परायणम ॥ ५१ ॥
जातिजरोपगा सत्त्वा जातिस्तेषा न क्षीयते ।
जातिमरणसक्ताना दु ख तेषामनन्तकम् ॥ ५२ ॥
दु खो जातिससारो बालबुद्धीहि कल्पित ।
कल्पास्तेषा न क्षीयन्ते कल्पनोत्पथ ससरी ॥ ५३ ॥

---

१ A लभ्यते for गच्छते २ AB व्याहृता for व्याहृता ३ AB न सज्जते निर्गतसा for बोधिसत्त्वो न सज्जते ४ AB निदर्शति ५ AB परायण

अयुक्ताः संप्रयुक्ताश्च कर्मयोगस्मि ते स्थिताः ।
कर्मणस्ते न मुच्यन्ते कर्मोपादानि ये रताः ॥ ५४ ॥ N 413
कर्मैश्च वहतां तेषां कर्म न क्षीयते सदा ।
पुनः पुनश्च म्रीयन्ते मारपक्षे[1] स्थिताः सदा ॥ ५५ ॥ 5
माराभिभूता दुष्प्रज्ञाः संक्लिष्टेन हि कर्मणा ।
अनुभोन्ति जातिमरणं तत्रतत्रोपपत्तिषु ॥ ५६ ॥
मरणं ते निगच्छन्ति अन्धा बालाः पृथग्जना ।
हन्यन्ते च विहन्यन्ते गतिश्चैषां न भद्रिका ॥ ५७ ॥
परस्परं च घातेन्ति शस्त्रेभिर्बालबुद्धयः । 10
एवं प्रयुज्यमानानां दुःखं तेषां प्रवर्धते ॥ ५८ ॥
पुत्रा मह्यं धनं मह्य बालबुद्धीहि कल्पितम् ।
असन्तं धर्मं कल्पित्वा संसारो भूयु वर्धते ॥ ५९ ॥
संसारं वर्धयन्तस्ते संसरन्ति पृथग्जना ।
पृथक् पृथक् च गच्छन्ति तेन चोक्ता पृथग्जना ॥ ६० ॥
पृथुधर्मा प्रनक्ष्यन्ति उज्झित्वा बुद्धशासनम् ।
न ते मोक्षं लभिष्यन्ति मारस्य वशमागता ॥ ६१ ॥ N 414
कामानां कारणं बाला स्त्रियं सेवन्ति पूतिकाम् ।
पूतिकां गतिं गच्छन्ति पतन्ते तेन दुर्गतिम् ॥ ६२ ॥
कामान्न बुद्धा वर्णेन्ति नापि स्त्रीणां निषेवणम् । 20
महाभयोऽहिपाशोऽयमिस्त्रिपाशः सुदारुणः ॥ ६३ ॥
विवर्जयन्ति तं धीराश्चण्डमाशीविषं यथा ।
न विश्वसन्ति इस्त्रीणां नैव मार्गो हि बोधये ॥ ६४ ॥
भावेन्ति बोधिमार्गं च सर्वबुद्धैर्निषेवितम्[2] ।
भावयित्वा च तं मार्गं भोन्ति बुद्धा अनुत्तरा ॥ ६५ ॥ 25
अनुत्तराश्च ते युक्ता भोन्ति लोकस्य चेतिया ।
अनुत्तरेण ज्ञानेन बुद्धा भोन्ति अनुत्तरा ॥ ६६ ॥
पोषधं च निषेवन्ति शीलस्कन्धे समादपी ।
समादपेन्ति बोधाय सत्त्वकोटीरचिन्तिया ॥ ६७ ॥
कुर्वन्ति तेऽर्थं[3] सत्त्वानामप्रमेयचिन्तियम् । 30
ते ते शूरा महाप्रज्ञा ताडेन्त्यमृतदुन्दुभिम् ॥ ६८ ॥

१ AB मारपक्षास्थिता हि ये २ AB पूर्वं for सर्वं. ३ AB भोन्ति बुद्धा महायशा for बोधिं बुध्यन्त्यनुत्तराम्.

शुक्लधर्मविपाकोऽयमसंस्कारेण पश्यति।
एकक्षणेन जानाति सर्वसत्त्वविचिन्तितम्॥ १००॥
यथा सत्त्वास्तथा चिन्ता यथा चिन्ता तथा जिनाः।
अचिन्तियेन बुद्धेन इयं चिन्ता प्रकाशिता॥ १०१॥
5 यो रहो एकु चिन्तेति कदा चिन्ता न भेष्यति।
नै चिन्तां चिन्तयन्तस्य सर्वचिन्ता निगच्छति॥ १०२॥
N 420 च्युते मृते कालगते यस्य चिन्ता प्रवर्तते।
चिन्तानुसारि विज्ञानं नासा चिन्तान्तमुच्यते॥ १०३॥
ये स्थिता इस्त्रिसंज्ञायां रागस्तेषां प्रवर्तते।
10 विभीत्सितायां संज्ञायां न रागेणोपलिप्यते॥ १०४॥
इयं चिन्ता महाचिन्ता धर्मचिन्ता निरुत्तरा।
अनया धर्मचिन्ताय भूतचिन्ता प्रवर्तते॥ १०५॥
बहु अचिन्तिया चिन्ता दीर्घरात्रं विचिन्तिता।
न च चिन्ताक्षयो जातश्चिन्तयित्वा अयोनिशः॥ १०६॥
15 योऽसौ चिन्तयते नाम क्षये ज्ञानं न विद्यते।
न क्षयो भूमिज्ञानस्य क्षयस्यो एष धर्मता॥ १०७॥
घोषो वाक्पथ विज्ञप्तिः क्षयशब्देन देशिता।
निर्विशेषाश्च ते धर्मा यथा ज्ञाने तथा क्षयः॥ १०८॥
N 421 अनुत्पन्नानिरुद्धाश्च अनिमित्ता अलक्षणाः।
20 कल्पकोटिं पि भाषित्वा अनिमित्तेन देशिताः॥ १०९॥
सर्वभावान् विभावित्वा अभावे ये प्रतिष्ठिताः।
न चान्यो दर्शितो भावो नाभावोऽन्यो निदर्शितः॥ ११०॥
विज्ञप्ता भावशब्देन अभावस्य प्रकाशना।
न चासौ सर्वबुद्धेहि अभावः शक्यु पश्यितुम्॥ १११॥
25 यो भावः सर्वभावानामभाव एष दर्शितः।
एवं भावान् विजानित्वा अभावो भोति दर्शितः॥ ११२॥
नासौ स्पर्शयितुं शक्यमभावो जातु केनचित्।
स्पर्शनात्तु अभावस्य निर्वृति[3] एष देशिता॥ ११३॥
अहं बुद्धो भवेल्लोके यस्यैषा हि मतिर्भवेत्।
30 न जातु भवतृष्णार्तो बोधिं बुध्येत पण्डितः॥ ११४॥
न कंचि धर्मं प्रार्थेति बोधिसत्त्वः समाहितः।
निष्किंचना निराभोगा एषा बोधीति उच्यते॥ ११५॥

1 A om. this line. 2 A om. this line. 3 B संवृती for निर्वृति. 4 A निरालम्बा for निराभोगा

बहू एवं प्रवक्ष्यन्ति वयं बोधाय प्रस्थिताः । N 422
इमां गतिमजानन्तो दूरे ते बुद्धबोधये ॥ ११६ ॥
शब्देन देशिता धर्माः सर्वे संस्कार शून्यकाः ।
यश्च स्वभावः शब्देस्य[1] गम्भीरः सूक्ष्म दुर्दृशः ॥ ११७ ॥
महाभिज्ञाय निर्देश इदं सूत्रं प्रवुच्चति । 5
अर्थाय बोधिसत्त्वानां सर्वबुद्धेहि देशितम् ॥ ११८ ॥
प्रतिपक्षा हतास्तेषां यावन्तः सांक्लेशिकाः ।
प्रतिष्ठिता अभिज्ञासु ऋद्धिस्तेषां सुभाविता ॥ ११९ ॥
स्थिताः प्रणिधिज्ञानस्मिंस्तच्च ज्ञानं विभावितम् ।
अलुप्तिलिङ्ग्यज्ञानस्य अप्रमेया अचिन्तिया ॥ १२० ॥ 10
न तेषामभिसंस्कारः समाधी ऋद्धिकारणम् ।
विपाक एष शूराणां नित्यकालं समाहितः ॥ १२१ ॥
विपाकजाये ऋद्धीये गच्छन्ती क्षेत्रकोटयः ।
पश्यन्ति लोकप्रद्योतान् यथा गङ्गाय वालिका ॥ १२२ ॥
उपपत्तिश्च्युतिस्तेषां यथा चित्तस्य वर्तते । 15 N 423
चित्तस्य वशितां प्राप्ताः कायस्तेषां प्रभास्वरः ॥ १२३ ॥
भावनामपि ऋद्धीये ये स्थिता बुद्धश्रावकाः ।
तेभिः संस्कारऋद्धीये कलां नायान्ति षोडशीम् ॥ १२४ ॥
न तेषां सर्वदेवेभिराशयः शक्यु जानितुम् ।
अन्यत्र लोकनाथेभ्यो ये वा तेषां समे स्थिताः ॥ १२५ ॥ 20
न तेषामस्ति खालित्यं न चैव पलितं शिरे ।
औदारिका जरा नास्ति न दुःखमरणं तथा ॥ १२६ ॥
संशयो विमतिर्नास्ति काङ्क्षा तेषां न विद्यते ।
रात्रिंदिवं गवेषन्ति सूत्रकोटीशतानि ते ॥ १२७ ॥
प्रहीणानुशयास्तेषां यावन्तः सांक्लेशिकाः । 25
समचित्ताः सदा भोन्ति सर्वसत्त्वान तेऽन्तिके ॥ १२८ ॥
समाधिकोटिनियुतां निर्दिशन्ति दशद्दिशे ।
प्रश्नकोटीसहस्राणि व्याकुर्वन् ध्यानसंस्थिताः ॥ १२९ ॥
स्त्रीसंज्ञा पुरुषसंज्ञा च सर्वसंज्ञा विभाविताः ।
स्थिता अभावसंज्ञायां देशेन्ति भूतनिश्चयम् ॥ १३० ॥ 30
परिशुद्धेन ज्ञानेन यथावद्धर्मदेशकाः ।
धर्मसंगीत्यभियुक्ताः समाधिज्ञानगोचराः ॥ १३१ ॥

1 A शून्यस्य for शब्दस्य.

कम्पेन्ति मारभवनं चालेन्ति मारकायिकान् ।
समादपेन्ति बोधाय मारकोटीरचिन्तियाः ॥ ६९ ॥
N 415 परवादीन्निगृह्णन्ति निर्जिनन्ति च तीर्थिकान् ।
कम्पेन्ति वसुधां सर्वां ससमुद्रां सपर्वताम् ॥ ७० ॥
विकुर्वमाणा कायेभिरनेकर्द्धिविकुर्वितैः ।
निदर्शेन्ति महाप्रज्ञाः प्रातिहार्याण्यचिन्तियान् ॥ ७१ ॥
क्षेत्रकोटी प्रकम्पेन्ति यथा गङ्गाय वालिका ।
पराजिनित्वा ते मारा बोधिं बुध्यन्त्यनुत्तराम् ॥ ७२ ॥
निर्मिण्वन्ति च ते वृक्षान् रत्नैः सुविचित्रितान् ।
फलपुष्पेहि संयुक्तान् गन्धवन्तान् मनोरमान् ॥ ७३ ॥
प्रासादांश्च विमानानि कूटागारान् सहर्म्यिकान् ।
निर्मिण्वन्ति च ते शूराः पुष्करिण्यो मनोरमाः ॥ ७४ ॥
अष्टाङ्गजलसंपन्नाः स्वच्छाः शीता अनाविलाः ।
पिबन्ति ये ततो वारि तिस्रस्तृष्णा जहन्ति ते ॥ ७५ ॥
अविवर्त्याश्च ते भोन्ति पीत्वा वारि निरुत्तरम् ।
अनुत्तरेण ज्ञानेन भोन्ति बुद्धा अनुत्तराः ॥ ७६ ॥
N 416 अनुत्तरां गतिं शान्तां गच्छन्तीति विजानथ ।
इमां गतिमजानन्तः प्रनष्टाः सर्वतीर्थिकाः[1] ॥ ७७ ॥
ते च तर्द्वैतिकाः[2] सत्त्वा ये तेषां भोन्ति निश्रिताः ।
पतिष्यन्ति महाघोरामवीचिमपरायणाः ॥ ७८ ॥
यास्तत्र वेदना घोरा न शक्यास्ताः प्रकीर्तितुम् ।
अहं च ताः प्रजानामि बोधिसत्त्वाश्च तायिनः ॥ ७९ ॥
ये चेह धर्मे काङ्क्षन्ति एवं गम्भीरि दुर्दृशे ।
अभूमिस्तत्र बालानामुपलम्भस्मि ये स्थिताः ॥ ८० ॥
निर्मिण्वन्ति वियूहास्ते नैकरूपनिदर्शनान् ।
येन ते सर्वि गच्छन्ति बुद्धक्षेत्राननुत्तरान् ॥ ८१ ॥
यावन्त्यो बुद्धक्षेत्रेषु रूपनिर्हारसंपदः ।
सर्वास्ता इह दर्शेन्ति बोधिसत्त्वा महर्द्धिकाः ॥ ८२ ॥
महावर्मेण[3] संनद्धा महावीरा महाबलाः ।
महाशून्यार्थवज्रेण प्रहाराणि ददन्ति ते ॥ ८३ ॥
रश्मिकोटिसहस्राणि यथा गङ्गाय वालिका ।
कायतो निश्चरन्त्येषां येभिर्लोकः प्रभास्वते ॥ ८४ ॥

१ AB अौपलम्भिका. for सर्वतीर्थिका . २ B तद्भागिका for तद्वैतिकाः. ३ C महावर्पेण for °धर्मेण.

न ते सौम्यभिरज्यन्ते न च तेषां विरागता ।
विभावितैतेषां संज्ञा इतिसंज्ञा स्वभावतः ॥ ८५ ॥
अशून्या बुद्धक्षेत्रास्ते येषु शूरा भवन्ति[1] ते ।
किं तेषां मारु पापीयानन्तरायं करिष्यति ॥ ८६ ॥
दृष्टीकृतेषु ये स्थित्वा बहु बुद्धा विरागिताः ।
व्यापादेन उपस्तब्धा इच्छालोभप्रतिस्थिताः ॥ ८७ ॥[2]
सर्वसंज्ञा विभावित्वा संज्ञावैवर्तिये स्थिताः ।
य एवं ज्ञास्यते ज्ञानं बुद्धज्ञानमचिन्तियम् ॥ ८८ ॥
पूर्वान्तमपरान्तं च प्रत्युत्पन्नं च पश्यति ।
एवं च देशिता धर्मा न चात्र किंचि देशितम् ॥ ८९ ॥
न च ज्ञानेन जानाति न चाज्ञानेन सीदति ।
ज्ञानाज्ञाने विकल्पेत्वा बुद्धज्ञानेति बुध्यति ॥ ९० ॥
विज्ञप्तिवाक्यसंकेतं बोधिसत्त्वः प्रजानति ।
करोति अर्थं[3] सत्त्वानामप्रमेयमचिन्तियम् ॥ ९१ ॥
संज्ञा संजाननार्थेन उद्ग्रहेण निदर्शिता ।
अनुद्ग्रहश्च सा संज्ञा विविक्तार्थेन देशिता ॥ ९२ ॥
यश्चो विविक्तं सा संज्ञा या विविक्ता स देशना ।
संज्ञास्वभावो ज्ञातश्च एवं संज्ञा न भेष्यति ॥ ९३ ॥
प्रहास्याम इमां संज्ञां यस्य संज्ञा प्रवर्तते ।
संज्ञा प्रपञ्चे चरति न स संज्ञातु मुच्यते ॥ ९४ ॥
कस्येयं संज्ञा उत्पन्ना केन संज्ञा उत्पादिता ।
केन सा स्पर्शिता संज्ञा केन संज्ञा निरोधिता ॥ ९५ ॥
धर्मो न लब्धो बुद्धेन यस्य संज्ञा उत्पद्यते ।
इह चिन्तेय तं धर्मं ततः संज्ञा न भेष्यति ॥ ९६ ॥
कदा[4] संज्ञा अनुत्पन्ना[5] कस्य संज्ञा निरुध्यते ।
विमोक्ष चित्तचारस्य कथं तत्र उत्पद्यते ॥ ९७ ॥
यदा विमोक्षं स्पृशति सर्व चिन्ता अचिन्तिया ।
अचिन्तिया यदा चिन्ता तदा भोति अचिन्तियः ॥ ९८ ॥
चिन्ताभूमौ स्थिहित्वान पूर्वमेव विचिन्तिता ।
सर्वचिन्तां जहित्वान ततो भेष्यत्यचिन्तियः ॥ ९९ ॥

---

१ AB वसन्ति for भवन्ति. २ After st. 87, AB add :
॥ एव मार विज्ञेय सर्वे दृष्टिप्रतिस्थिताः ।
न तेषां मारः पापीयानन्तराये प्रयुज्यते ॥
३ A सार्थं ; B स्वार्थं for अर्थं. ४ B यद for कदा. ५ B उत्पन्ना for अनु°.

N 424 यापि यानचरिस्तेषा नास्ती भावप्रतिष्ठिता ।
अनन्य वचन तेषामरण्या धर्मदेशना ॥ १३२ ॥
सुलब्ध तेन मानुष्य प्रहीणा सर्वि अक्षणा ।
कृतज्ञा सर्वबुद्धाना येषा सूत्रमिद प्रियम् ॥ १३३ ॥
5 कल्पा अचिन्तियास्तेहि ये ससाराद्यु छोरिता ।
यैरित सूत्रेश्रेष्ठातो घृता गाथा चतुष्पदा ॥ १३४ ॥
दृष्टास्ते सर्वबुद्धेहि तैस्ते बुद्धाश्च सत्कृता ।
क्षिप्र च बोधिं प्राप्स्यन्ति तेषा सूत्रमिद प्रियम् ॥ १३५ ॥
न तेषा काङ्क्ष विमती सर्वधर्मेषु भेष्यती ।
10 आसन्ना निर्वृतिस्तेषा येषा सूत्रमिद प्रियम् ॥ १३६ ॥
दृष्टस्तेहि महावीरो गृध्रकूटे तथागत ।
सर्वे व्याकृतु बुद्धेन द्रक्ष्यन्ति मैत्रक जिनम् ॥ १३७ ॥
N 425 दृष्ट्वा मैत्रेय सबुद्ध लप्स्यन्ते क्षान्ति भद्रिकाम् ।
ये केचि क्षयकालस्मिन्निह सूत्रे प्रतिष्ठिता ॥ १३८ ॥
15 स्थितास्ते भूतकोटीये भूतकोटिरचिन्तिया ।
अचिन्तियाया कोटीये काङ्क्षा तेषा न विद्यते ॥ १३९ ॥
न तेषा विद्यते काङ्क्षा अणुमात्रापि सर्वश ।
अणुमात्रे प्रहीणेस्मिन् बोधिस्तेषा न दुर्लभा ॥ १४० ॥
चरता दुष्कर चैव क्षयकाले सुभैरवे ।
20 शिक्षित सूत्ररत्नेऽस्मिन् प्रतिभानस्मि अक्षयम् ॥ १४१ ॥
इद सूत्र प्रिय कृत्वा बुद्धाना गञ्जरक्षका ।
सर्वबुद्धानिय पूजा धर्मपूजा अचिन्तिया १४२ ॥
नै तेषा दुर्लभ ज्ञान बुद्धज्ञानमचिन्तियम् ।
धारयिष्यन्तिद सूत्र क्षयकालेस्मि दारुणे ॥ १४३ ॥
II 426 25 येभिश्च पूर्वबुद्धानामिमे सूत्रान्त धारिता ।
तेषा कारयता एते क्षयकाले प्रवर्तिषु ॥ १४४ ॥
ते ते नाद नदिष्यन्ति बुद्धाना क्षेत्रकोटिषु ।
समुख लोकनाथाना शाक्यसिंहस्य या चरी ॥ १४५ ॥
सिंहनाद नदन्तास्ते बुद्धनादमचिंतियम् ।
30 अनन्तप्रतिभानेन वक्ष्यन्ते बोधिमुत्तमाम् ॥ १४६ ॥

---

१ AB सूत्ररत्नात्ते for °धिष्ठाते २ A लप्स्यन्ति ३ After अक्षयम्, C reads तत पूजित संबुद्धा भविष्यन्ति सगौरवा ४ AB प्रवर्तिता for प्रियं कृत्वा ५ B om this line ६ AB बुद्धानां पुरत एवा for बुद्धनादमचिन्तियम्

ते ते व्याकृत बुद्धेन इक्ष्वाकुकुलसंभवाः ।
ये रक्षिष्यन्तिमां बोधिं क्षयकाले महाभये ॥ १४७ ॥
ते ते रूपेण संपन्ना लक्षणेहि विचित्रिताः ।
विकुर्वमाणा यास्यन्ति बुद्धकोटीय वन्दकाः ॥ १४८ ॥
मायोपमेहि पुष्पेहि हेमवर्णनिदर्शनैः ।
रूप्यागमेहि पुष्पेहि वैडूर्यस्फटिकेहि च ॥ १४९ ॥
सर्वाणि रत्नजातानि प्रादुर्भोन्त्येषु पाणिषु ।
वैरायिरन्ति संबुद्धान् बोधिमार्गगवेषकाः ॥ १५० ॥
चित्रा नानाविधा पूजा वाद्यनिर्हारसंपदा ।
निश्चरी रोमकूपेभ्यो यथा गङ्गाय वालिकाः ॥ १५१ ॥
ये च शृण्वन्ति तं शब्दं सत्त्वकोटयो अचिन्तियाः ।
भवन्त्यविनिवर्त्यास्ते बुद्धज्ञाने अनुत्तरे ॥ १५२ ॥
तेषां च बुद्धकोटीनां वर्णं भाषन्त्यचिन्तियम् ।
अचिन्तियेषु क्षेत्रेषु तेषां शब्दः शृणीयति ॥ १५३ ॥
ये च शृण्वन्ति तं शब्दं तेषां संज्ञा निरुध्यते ।
निरोधितायां संज्ञाया बुद्धान् पश्यन्त्यनल्पकान् ॥ १५४ ॥
एतादृशेन ज्ञानेन चरित्वा बोधिचारिकाम् ॥
कृत्वार्थं सर्वसत्त्वानां भवन्त्यर्थकरा जिनाः ॥ १५५ ॥
गुणानुशंसा इत्येते या लभन्ते ह पण्डिताः ।
अन्ये अपरिमाणाश्च यैरियं बोधि धारिता ॥ १५६ ॥
मातृग्रामोऽपिदं सूत्रं श्रुत्वा गाथापि धारयेत् ।
विवर्तयित्वा स्त्रीभावं स भवेद् धर्मभाणकः ॥ १५७ ॥
न सा पुनोऽपि स्त्रीभावमितः पश्चाद् ग्रहीष्यति ।
भवेत् प्रासादिको नित्यं लक्षणैः समलंकृतः ॥ १५८ ॥
श्रेष्ठऽस्य इह सूत्रस्मिन् गुणाः श्रेष्ठाः प्रकाशिताः ।
तेऽस्य सर्वे भविष्यन्ति क्षिप्रं बोधिं च प्राप्स्यते ॥ १५९ ॥
विशारदश्च सो नित्यं भोति सर्वासु जातिषु ।
धारयित्वा इदं सूत्रं बोधिसत्त्वान गोचरम् ॥ १६० ॥
जनको बोधिसत्त्वानां समाधिः शान्त भाषितः ।
य इच्छेद् बुद्धितुं बोधिमिदं सूत्रं प्रवर्तयेत् ॥ १६१ ॥

5 10 15 20 25

N 427 N 428

१ AB मायामयेहि for मायोपमेहि. २ AB °संपदः for °संपदा. ३ AB समाधियेहि धारित for यैरियं बोधि धारिता. ४ AB विवर्जयित्वा for विवर्तयित्वा. ५ A सर्वबुद्धान for बोधिसत्त्वान.

आसन्नास्ते मुनीन्द्राणामासन्ना बुद्धबोधये।
लप्स्यन्ति नचिरेणेमां भूमिं शान्ता समाहिता ॥ १६२ ॥
इह बोधीय ते शूरा बोधिसत्त्वा स्थिता सदा।
पश्यन्ति बुद्धकोटीयो यथा गङ्गाय वालिका ॥ १६३ ॥
राजा भवित्वा महीपति चक्रवर्ती
दृष्ट्वा च बुद्धान् विरजान् सुशान्तचित्तान्।
गाथाशतैस्ता स्तविष्यति लोकनाथान्
सा लभित्व शान्त इमु विरज समाधिम् ॥ १६४ ॥
N 429
सो पूज कृत्व अतुलिय नायकाना
सुमहायशाना देवनरोत्तमानाम्।
मुक्त्वा स राज्य यथरिव खेटपिण्ड
शुद्धो विशुद्धश्चरिष्यति ब्रह्मचर्यम् ॥ १६५ ॥
स प्रव्रजित्व जिनवरशासनस्मि[2]
लब्ध्वापि चैत विरजु समाधि शान्तम् ॥
कल्याणवाक्यो मधुरगिर स भूत्वा
अधिष्ठानु धीमान् भविष्यति सूत्रकोट्या ॥ १६६ ॥
शून्यानिमित्त परमप्रणीतु शान्त
धर्मं प्रशान्त चर निपुण असङ्गम्[3]।
स्वभावशून्य सद विरज प्रशान्त
समाधिप्राप्या बहु जनि सम्प्रकाशयी ॥ १६७ ॥
गम्भीरबुद्धी सततमनन्तबुद्धी
विस्तीर्णबुद्धी अपरिमितार्थबुद्धी।
N 430
गम्भीर शान्त लभिय इम समाधि
आलोकप्राप्तो भविष्यति सर्वलोके ॥ १६८ ॥
शुचिश्च नित्य भविष्यति ब्रह्मचारी
स निराबाध सततमसंक्लिष्ट।
अन्याश्च तत्र स्थापिष्यति सत्त्वकोटयो
लब्ध्वा प्रशान्त इमु विरज समाधिम् ॥ १६९ ॥
स सुतीक्ष्णप्रज्ञो भविष्यति श्रेष्ठप्रज्ञ
श्रुतिसागरोऽसौ नित्यमनन्तबुद्धि।
कल्याणवाक्यो मतिकुशलो विधिज्ञो
धारित्व शान्ति इमु विरज समाधिम् ॥ १७० ॥

---

1 C भूमिं for शान्ता 2 AB मुनिवर° for जिनवर° 3 AB असमं

ये कर्मस्थाना तथरिव शिल्पस्थाना
  भैषज्यस्थानास्तथरिव औषधीनाम् ।
सर्वत्र धीरो भविष्यति पारप्राप्तो
  धारित्व सूत्रं इमु विरजं समाधिम् ॥ १७१ ॥
काव्येषु शास्त्रेषु तथपि च हास्यलास्ये    5
  नृत्येऽथ[१] गीते सुकुशल पारप्राप्तः ।
आचार्यु लोके भविष्यति नित्यकालं    N 431
  धारित्व शान्तं इमु विरजं समाधिम् ॥ १७२ ॥
परिवारवान् सो भविष्यति नित्यकालं
  स अभेद्यपक्षः सद सहितः समग्रः[२] ।    10
चरमाणु श्रेष्ठां वरां शिव बोधिचर्यां
  धारित्व सूत्रं इमु विरजं समाधिम् ॥ १७३ ॥
शोकाश शल्या तथरिव चित्तपीडा
  नो तस्य जातु भविष्यति पण्डितस्य ।
आरोग्यप्राप्तो भविष्यति सर्वकालं    15
  धारित्व शान्तं इमु विरजं समाधिम् ॥ १७४ ॥
ये कायशूलास्तथरिव चित्तशूलाः
  ये दन्तशूलास्तथपि च शीर्षशूलाः ।
नो तस्य भोन्ती व्याधयु जीवलोके
  धारित्व शान्तं इमु विरजं समाधिम् ॥ १७५ ॥    20
यावन्त रोगा बहुविध मर्त्यलोके
  ये कायरोगास्तथरिव[३] चित्तरोगाः ।
ते तस्य रोगाः सतत न जातु भोन्ति    N 432
  धारित्व शान्तं इमु विरजं समाधिम् ॥ १७६ ॥
चित्तस्य वा ये बहुविधु संक्लिशाः    25
  काये वापि बहुविध रोगजाताः ।
ते तस्य नास्ती बहुविध संक्लेशा
  धारित्व शान्तं इमु विरजं[४] समाधिम् ॥ १७७ ॥
यथन्तरीक्षं गगनमनोपलिप्तं
  प्रकृतिविशुद्धं विमल प्रभास्वरं च ।    30

१ AB नृत्येषु गीतेषु for नृत्येऽथ गीते. २ C समाहितः for समग्र. ३ AB तथापि च for तथरिव.
४ After st. 177, A adds:
चन्द्रस्य आभा तथरिव सूर्यआभा
शुद्धा अग्राह्या भवति प्रभास्वरा । =St. 179.

चित्तं तथैव भवति विशुद्ध तस्यो
धारित्व शान्तं [illegible] विरजं समाधिम् ॥ १७८ ॥

चन्द्रस्य आभा तथरिव सूर्यआभा
शुद्धा अग्राह्या भवति प्रभास्वराश्च ।
चित्तं तथैव भवति प्रभास्वरं च
धारित्व शान्तं इमु विरजं समाधिम् ॥ १७९ ॥

यथ अन्तरीक्षं न सुकरु चित्रणाय
रङ्गान् गृहीत्वा बहुविध नैकरूपान् ।
N 433
चित्तं तथैव न सुकरु चित्रितुं
सेवेत्वै शान्तं इमु विरजं समाधिम् ॥ १८० ॥

वातो यथैव चतुर्दिश वायमानो
असज्जमानो व्रजति दिशः समन्तात् ।
वातसमाना भवति स चित्तधारा
जगि सो असक्तो व्रजति अनोपलिप्तः ॥ १८१ ॥

जालेन शक्यं गृह्णितु वायमानः
पाशेन चापी बन्धितु शक्य वातः ।
नो तस्य चित्तं सुकरु विजाननाय
भावेत्व शान्तमिमु विरजं समाधिम् ॥ १८२ ॥

प्रतिभासु शक्यं जलगत गृह्णनाय
संप्रासु तोयं तथपि च तैलपात्रे ।
नो तस्य चित्तं सुकरु विजाननाय
भावेत्व शान्तं इमु विरजं समाधिम् ॥ १८३ ॥
N 434
गर्जन्ति मेघा विद्युलता चरन्ता
शक्यं ग्रहीतु पाणिन मानुषेण ।
नो तस्य चित्तं सुकरु प्रमाणु ज्ञातुं
भावेत्व शान्तं इमु विरजं समाधिम् ॥ १८४ ॥

सत्वान शक्यं स्तरचितं ग्रहीतुं
ये सन्ति सत्वा दशदिशि बुद्धक्षेत्रे ।
चित्तस्य तस्यो न सुकरु ज्ञातु कोटिं
समाधिलब्धो यद भवि बोधिसत्वः ॥ १८५ ॥

---

1 A चन्द्रप्रभो तथपि च सूर्यआभा for the line. २ B पद्मान् for रङ्गान्. ३ AB धारित्व for सेवेत्व ४ AB प्रजाननार्थे for विजा°. ५. A om. St. 184.

सो तां लभित्व[1] विरजं[2] समाधिभूमिं
　　असंक्लिष्टो भवति अनोपलिप्तः ।
नो तस्य भूयो विभवि निवेश जातु
　　अनेन लब्धो भवति समाधि शान्तः ॥ १८६ ॥
नो कामलोलो न च पुन रूपलोलो
　　न इस्त्रिलोलो न च पुन भ्रान्तचित्तः ।
शान्तः प्रशान्तो भवति अनोपलिप्तो
　　यद भोति लब्धो अयु विरजः समाधिः ॥ १८७ ॥
न पुत्रलोलो न च पुन धीतलोलो
　　नो भार्यलोलो न च परिवारलोलः ।
सुशान्तचारी भवति अनोपलिप्तो　　N 435
　　यद भोति लब्धो अयु विरजः समाधिः ॥ १८८ ॥
न हिरण्यलोलो न च पुनरर्थलोलो
　　न स्वर्णलोलो धनरत्नेष्वसक्तः ।
सुविशुद्धचित्तो भवति स निर्विकल्पः
　　समाधिप्राप्तो अयु भवती विशेषः ॥ १८९ ॥
न स्वर्गहेतोश्चरति स ब्रह्मचर्यं
　　न स्वर्गलोलो ददति सदा नु विज्ञः ।
संबोधिकामः[3] कुशलचरिं चरन्तः
　　समाधिप्राप्तो अयु भवती विशेषः ॥ १९० ॥
नो राज्यहेतोश्चरति तपो व्रतं वा
　　नैश्वर्यमर्थास्त्रिभुवनि प्रार्थमानः ।
संबोधिलोलो बहुजनहिताय
　　निष्पादयी सो इमु विरजं समाधिम् ॥ १९१ ॥[4]
नो तस्य रागो जनयति जातु पीडां　　N 436
　　यो न स्त्रीलोलो सो भवति भ्रान्तचित्तः ।
तथापि तेन प्रकृतिप्रज्ञाय रागो　　N 437
　　लभित्व एतं विरजु समाधि शान्तम् ॥ १९२ ॥
नो[5] तस्य दोषो जनयति जातु पीडां
　　व्यापादु येनो प्रतिघ[6]मयो करेय्य ।

---

१ A om. st. 184. २ AB शान्तं for °भूमिं. ३ AB संबोधिकामो ददति स बोधिसत्वः for the line. ४ After st. 191, ABT read a passage given in App. I (No. 26). ५ B om. st. 193. ६ AB प्रमथितु पण्डितेन for प्रतिघमयो करेय्य.

मैत्राय तेनो निहत स दोषधातु
प्रतिलभ्य एतं विरजु समाधि शान्तम् ॥ १९३ ॥

नो तस्य मोहो जनयति जातु पीडां
प्रज्ञाय तेनो निहत स मोह अविद्या ।
5 तं ज्ञानु लब्धं त्रितिमिरमप्रमेयं
समाधिप्राप्ते इमि गुण अप्रमेयाः ॥ १९४ ॥

N 438 अशुभाय रागः सतत सुनिगृहीतो
मैत्राय दोषो निहतु सदा अशेषः ।
प्रज्ञाय मोहो विधमिय क्लेशजालं
10 समाधिप्राप्तः प्रतपति सर्वलोके ॥ १९५ ॥

नो तस्य मिद्धं जनयति जातु पीडां
सुमाक्षिता से विविध उपक्लेशाः ।
अनोपलिप्तो भवति च विप्रमुक्तः
समाधिप्राप्ते[1] इमि गुण अप्रमेयाः ॥ १९६ ॥

15 नो तस्य मोहो[2] जनयति जातु पीडां
तथा हि त्यागे अभिरतु नित्यकालम् ।
सर्वस्वत्यागी भवति सुखस्य दाता
य इमं समाधिं धारयति बोधिसत्त्वः ॥ १९७ ॥

स्थामेनुपेतो भवति अनोपमेयो
20 स बलेनुपेतो भवति नित्यकालम् ।
नो तस्य लोके भवति समः[3] कदाचिद्
य इमं समाधिं धारयति बोधिसत्त्वः ॥ १९८ ॥

N 439 यद्यपि राजा स भवति चक्रवर्ती
मनुजातु लोके उपगत जम्बुद्वीपे ।
25 तदापि[4] भोगी बहुजनपूजनीयो
विशेषप्राप्तो भोंतिम[5] विशिष्टप्रज्ञ. ॥ १९९ ॥

ये भोन्ति मुख्याः कुलरतना विशिष्टा.
सुप्रभूतभोगा बहुजनस्वापतेयाः ।
यत्राश्व हस्ती रथवर युग्ययाना
30 हिरण्यस्वर्णं मणिरतन प्रभूतम् ॥ २०० ॥

---

१ AB °लब्धे for °प्राप्ते २ AB लोभो for मोहो. ३ AB समोऽन्य कश्चिद् for समः कदाचिद्. ४ AB ततपि for तदपि. ५ A विनिमिर श्रेष्ठप्रज्ञ for भंतिम विशिष्टप्रज्ञ.

ये श्राद्ध भोन्ती इह यत्नुबुद्धज्ञाने
ते जम्बुद्वीपे कुलरतनाभियुक्ताः ।
तत्रोपपन्नः कुलरत्ने विशिष्टे
करोति सोऽर्थं सुविपुल ज्ञातिसंघे ॥ २०१ ॥

अश्राद्ध ये वा इह कुल जम्बुद्वीपे 5
श्रद्धां स तेषां जनयति अप्रमत्तः ।
यं बोधिचित्ते प्रतिष्ठति सत्त्वकाये[1]
ते बुद्ध भोन्ती जिनप्रवर: स्वयंभूः ॥ २०२ ॥

ते च स्पृशित्व अतुलियमग्रबोधिं N 440
चक्रं प्रवर्तेन्त्यसदृश बुद्धक्षेत्रे । 10
ये चो विजानी इमु तद धर्मचक्रं
अनुत्पत्तिधर्मे निखिल ते संप्रतिष्ठी ॥ २०३ ॥

सुबहुकराश्चो अभि तद बोधिसत्त्वाः
सत्त्वान भोन्ति सततु ते पूजनीयाः ।
करोन्ति तेऽर्थं अतुलिय नित्यकालं 15
सत्त्वान चक्षुर्वितिमिर ते जनेन्ति ॥ २०४ ॥

बहव शतसहस्राः सत्त्वकोटी अनन्ता[2]
येष कुशलमूला भोन्ति तत्र श्रुणित्वा ।
ते अपि प्रतिलभन्ते उत्तमं बोधिचित्तं N 441
यद जिनु अनुशासी बोधिसत्त्वं महात्मा ॥ २०५ ॥ 20

[3]अक्षुन्यक्षेत्रा प्रमुदित भोन्ति नित्यं
निरुपलेपा अभि तद बुद्ध भोन्ती ।
यत्र स्थिहन्ती इमि तद बोधिसत्त्वाः
सत्त्वानमर्थं अपरिमितं करोन्ति ॥ २०६ ॥

रक्षन्ति शीलं असदृशु ब्रह्मचर्यं 25
मात्री समाची विपुलमनन्तकल्पान् ।
ध्याने विमोक्षे सुनिश्रित नित्यकालं
ते बोधिसत्त्वा भवि सद बुद्धपुत्राः ॥ २०७ ॥

ते ऋद्धिपादान् सततु निषेवमाणा
क्षेत्राणि गत्वा बहु विविधाननन्तान् ।

---

१ AB सत्त्वकायं; C सत्त्वकाले for सत्त्वकाये. २ T om. st. 205. ३ AB ये बोधिसत्त्वाः प्रमुदित मैत्रचित्ता for the line.

N 442

शृण्वन्ति धर्मं सुगतस्य प्रभाय
सर्वे च गृह्णी प्रतिष्ठितु धारणीये ॥ २०८ ॥
प्रभापि सूत्रानपरिमितानन्तान्
ये धारणीये प्रतिष्ठितु बोधिसत्वा ।
5 सत्वान अर्थं अपरिमित करोन्ति
ये धारणीये प्रतिष्ठितु बोधिसत्वा ॥ २०९ ॥
च्युतोपपादं जानाति सत्वानामागतिं गतिम् ।
यादृशं तैः कृतं कर्म विपाकोऽपि च तादृशः ॥ २१० ॥
धर्मणो न च संक्रान्तिरणुमात्रापि लभ्यते ।
10 तेऽपि तेषां विजानन्ति बोधिसत्वा महायशा ॥ २११ ॥
शून्यता च महात्मानो विहारो भोति उत्तम ।
स्थापयन्ति महायाने सत्त्वकोटीरचिन्तिया ॥ २१२ ॥
न तेषामोपदन्ताना सत्वसंज्ञा प्रवर्तते ।
अप्रवृत्तिं च धर्माणा बोधिसत्वा प्रकाशयी ॥ २१३ ॥
15 न प्रकाशयता धर्माणुपलम्भ प्रवर्तते ।
शून्याविहारिणो भोति दृढज्ञाने प्रतिष्ठिता ॥ २१४ ॥
N 443 उद्दिश्येम समाधिं च विहार सर्वशास्तुनाम् ।
न तेषां वर्तते संज्ञा इस्त्रिसंज्ञा स्वभावता ॥ २१५ ॥
इस्त्रिसंज्ञा विभावित्वा बोधिमण्डे निषीदति ।
20 बोधिमण्डे निषीदित्वा मारसंज्ञा निवर्तते ॥ २१६ ॥
न चात्र पश्यते मार मारसैन्यं च पण्डितः ।
न च पश्यति मारस्य तिस्रो दुहितरोऽपि ॥ २१७ ॥
*बोधिमण्डे निषण्णस्य सर्वसंज्ञा प्रहीयते ।*
सर्वसंज्ञाप्रहीणस्य सर्वा कम्पति मेदिनी ॥ २१८ ॥
25 सुमेरुव समुद्राश्च यावन्ति सन्ति दशा दिशे ।
ते च सत्वा विजानन्ति सर्वदिशु दशास्वपि ॥ २१९ ॥
बोधिसत्वस्य ऋद्ध्येयं मेदिनी संप्रकम्पिता ।
षड्विकार तदा काले बुध्यतो बोधिमुत्तमाम् ॥ २२० ॥
यावन्त संस्कृता धर्मा ये च धर्मा असंस्कृता ।
30 सर्वांस्तान् बुध्यते धर्मान् धर्मशब्देन देशितान् ॥ २२१ ॥

१ A प्रजानन्ति for विजानन्ति २ A B चैषाम् for तेषाम् ३ B प्रवर्तते for वर्तते ४ A विभावित for स्वभावता ५ A om this line ६ A विवर्तते, B विवर्तेते for निवर्तते

N 444

न चात्र बुध्यते कश्चित् सिंहनादश्च वर्तते ।
वर्तनीयं विजानित्वा भोति बुद्धः प्रभाकरः ॥ २२२ ॥
प्रतीत्य धर्मा वर्तन्ते उत्पद्यन्ते प्रतीत्य च ।
प्रतीत्यतां यद्धर्माणां सर्वे जानन्ति ते विदुः ॥ २२३ ॥ 5
विधिज्ञाः सर्वधर्मेषु शून्यताया गतिंगताः ।
गतिं च ते प्रजानन्ति सर्वधर्मगतिंगताः ॥ २२४ ॥
गतिमेतां गवेषित्वा बोधिसत्त्वो नु लभ्यते ।
येनैषा सर्वबुद्धानां ज्ञाता गतिरचिन्तिया ॥ २२५ ॥
स तां गतिं गतो भोति यः सर्वां गति जानति । 10
सर्वत्स्य माया उच्छिन्ना ज्ञात्वा सद्धर्मलक्षणम् ॥ २२६ ॥

N 445

बोधिमण्डे निषीदित्वा सिंहनादं नदी तथा ।
विज्ञापयी क्षेत्रकोटीरप्रमेया अचिन्तियाः ॥ २२७ ॥
तांश्च प्रकम्पयी सर्वा बुद्धवीरा महायशाः ।
यथ वैनेयिकान् सत्त्वान् विनेती सत्त्वसारथिः ॥ २२८ ॥ 15
स्पृशित्वा उत्तमां बोधिं बोधिमण्डात्तु उत्थितः ।
विनेयान् विनयेत् सत्त्वानप्रमेयानचिन्तियान् ॥ २२९ ॥
ततो निर्मिणि संबुद्धो अनन्तान् बुद्धनिर्मितान् ।
क्षेत्रकोटीसहस्राणि गच्छन्ती धर्मदेशकाः ॥ २३० ॥
स्थापयन्त्यग्रबोधीये सत्त्वकोटीरचिन्तियाः । 20
देशयन्त्युत्तमं धर्मं हितार्थं सर्वप्राणिनाम् ॥ २३१ ॥
ईदृशं तन्महाज्ञानं बुद्धज्ञानमचिन्तियम् ।
तस्माज्जनयथ च्छन्दं बोधिच्छन्दमनुत्तरम् ॥ २३२ ॥
जनेथ गौरवं बुद्धे धर्मे संघे गुणोत्तमे ।
बोधिसत्त्वान शूराणां बोधिमङ्या निषेवताम् ॥ २३३ ॥ 25
अनोलीनेन चित्तेन सत्करोथ अतन्द्रिताः ।
भविष्यथ ततो बुद्धा नचिरेण प्रभाकराः ॥ २३४ ॥

N 44

ये च क्षेत्रसहस्रेषु बोधिसत्त्वा इहागताः ।
पश्यन्ति लोकप्रद्योतं धर्मं देशेन्तमुत्तमम् ॥ २३५ ॥
ओकिरन्ति महावीरा महारत्नेहि नायकम् । 30
मान्दारवेहि पुष्पेहि ओकिरी बोधिकारणात् ॥ २३६ ॥

१ After st. 226, AB add:
सद्धर्मलक्षणं ज्ञात्वा सर्वक्षेत्रान् विलोकयि ।
सर्वक्षेत्रान् विलोकित्वा बोधिमण्डे निषीदति ॥
२ AB क्षेत्रात् for सर्वा. ३ AB वैनायिकान्; C नैरयिकान्. ४ B om. this line. ५ AB गवेषताम् for निषेवताम्.

अलङ्कुर्वन्तिदं क्षेत्रं बुद्धक्षेत्रमनुत्तरम् ।
रत्नजालेन च्छादेन्ति समन्तेन दिशो दश ॥ २३७ ॥
पताका अवसक्ताश्च उच्छ्रिता ध्वजकोटय ।
अलङ्कारैरनन्तैश्च इद क्षेत्रमलङ्कृतम् ॥ २३८ ॥
5 कूटागाराश्च मापेन्ति सर्वरत्नविचित्रितान् ।
प्रासादहर्म्यनिर्यूहानसंख्येयान् मनोरमान् ॥ २३९ ॥
विमानार्धचन्द्राश्च गवाक्षान् पञ्जरास्तथा ।
धूपिता ध्वजघटिका नानारत्नविचित्रिता ॥ २४० ॥
धूप्यमानेन गन्धेन अभ्रकूटसम स्फुटम् ।
10 क्षेत्रकोटीसहस्रेषु वाति गन्धो मनोरम ॥ २४१ ॥
ते च सर्वे स्फरित्वान गन्धवर्ष प्रवर्षिषु ।
ये च घ्रायन्ति त गन्ध ते बुद्धा भोन्ति नायका ॥ २४२ ॥
N 447 रागशल्य प्रहीणैषां दोषशल्य न विद्यते ।
विध्वसित मोहजाल तम सर्व विगच्छति ॥ २४३ ॥
15 ऋद्धि च तत्र स्पर्शेन्ति बलनोध्यङ्गइन्द्रियान् ।
ध्यानविमोक्षान् स्पर्शेन्ति भोन्ति चो दक्षिणार्हा ॥ २४४ ॥
पद्मकोटीय प्रज्ञप्ता वस्त्रकोटीभि संस्तृता ।
सर्वेषां रत्नजालेहि च्छत्रकोटीभि चित्रिता ॥ २४५ ॥
निषण्णास्तत्र ते शूरा बोधिसत्त्वा समागता ।
20 लक्षणैस्ते विरोचन्ते तथानुव्यञ्जनैरपि ॥ २४६ ॥
वृक्षैं रत्नमयै सर्वं बुद्धक्षेत्रमलङ्कृतम् ।
निर्मिता पुष्करिण्यश्च अष्टाङ्गजलपूरिता ॥ २४७ ॥
पानीय ते तत पीत्वा पुष्करिणीतटे स्थिता ।
सर्वे तृष्णा विनोदित्वा भोन्ति लोकस्य चेतिया ॥ २४८ ॥
25 अन्योन्येषु च क्षेत्रेषु बोधिसत्त्वा समागता ।
बुद्धस्य वर्ण भाषन्ते शाक्यसिंहस्य तायिन ॥ २४९ ॥
शृण्वन्ति ये च त वर्ण ते भोन्ती लोकनायका ।
अचिन्त्या अनुशासा मे इह सूत्रे प्रकाशिता ॥ २५० ॥
N 448 स्वर्णमयेहि पत्रेहि पद्मकोट्यो अचिन्तिया ।
30 बुद्धस्योरगसारस्य कर्णिकास्तत्र निर्मिता ॥ २५१ ॥

१ AB सूत्रं for क्षेत्रम् २ AB बुद्धक्षेत्रमिदं for अभ्रकूटसमं ३ A महाजालं तामसत्वं for मोहजालं तम सर्वं ४ A सभूता B संस्तृता for संछन्ना ५ AB वस्त्रकोटीहि for रत्नजालेहि ६ AB रत्नजालेहि चित्रिता for च्छत्रकोटीभि चित्रिता ७ AB महायशा for समागता ८ AB रत्नवृक्षैरिदं for वृक्षै रत्नमयै ९ A B शब्द for वर्ण

वैडूर्यस्य च दण्डानि स्फटिकस्य च पञ्जरा ।
केसरा गिरिगर्भस्य मापितास्तत्र शोभनाः ॥ २५२ ॥

ये च घ्रायन्ति तं गन्धं निश्चरन्तं मनोरमम् ।
तेषां सर्वे प्रशाम्यन्ति व्याधयः प्रीतचेतसाम् ॥ २५३ ॥

रागो द्वेषश्च मोहश्च अशेषास्तेहि क्षीयते ।
त्रीन् दोषान् क्षपयित्वा च भोन्ति बुद्धा सुखंददा ॥ २५४ ॥

शब्दस्ततो निश्चरति बुद्धशब्दो ह्यचिन्तियः ।
सद्धर्मसंघशब्दश्च विनिश्चरति सर्वतः ॥ २५५ ॥

शून्यताअनिमित्तस्य स्वरो अप्रणिहितस्य च ।
श्रुत्वा तं सत्त्वकोटीयो भोन्तिनैरर्थिका बहु ॥ २५६ ॥

निश्चरंश्चैव शब्दोऽसौ क्षेत्रकोटीषु गच्छति ।
स्थापेति बुद्धज्ञानस्मिन् सत्त्वकोटीरचिन्तिया ॥ २५७ ॥

शकुन्ताः कलविङ्काश्च जीवञ्जीवकपक्षिणः ।　N 449
तेऽपि प्रव्याहरी शब्दं बुद्धशब्दमनुत्तरम् ॥ २५८ ॥

रत्नामयाश्च ते वृक्षा इह क्षेत्रस्मि निर्मिता ।
विशिष्टा दर्शनीयाश्च मणिवृक्षा मनोरमा ॥ २५९ ॥

लम्बन्ते तेषु वृक्षेषु सर्वाभरणवेणयः ।
अनुभावेन बुद्धस्य इह क्षेत्रस्मि निर्मिता ॥ २६० ॥

न सोऽस्ति केशुचिद् व्यूहः सर्वक्षेत्रेषु सर्वशः ।
यो नेह दृश्यते क्षेत्रे तद्विशिष्टतमस्तदा ॥ २६१ ॥

पेयालमेतदाख्यातं शाक्यसिंहेन तायिना ।
न ते ज्ञानेऽत्र काङ्क्षति बोधिसत्त्वा महायशाः ॥ २६२ ॥

कोटीय एता बुध्यन्ति गतिस्तेषामचिन्तिया ।　N 450
ज्ञानेन ते विराजन्ते सागरो वा स्रवन्तिभिः ॥ २६३ ॥

---

१ After st 252 AB add
　तेषु चाचिन्तियो गन्धो अविच्छेदेन निश्चरी ।
　आपूरयेत् क्षेत्रकोटीयो पद्मगन्धो अचिन्तियो ॥
२ AB सर्वेग for सर्वत　३ AB मयूरा for शकुन्ता　४ After st 258 ABT add
　कुणालाः शारिका जीवा परपुष्टाश्च पक्षिणः ।
　तेऽपि प्रव्याहरि शब्दं धर्मशब्दमनुत्तरम् ॥
　कारण्डवा शुका हंसाश्चक्रवाकाश्च सारसा ।
　तेऽपि प्रव्याहरि शब्दं संघशब्दमनुत्तमम् ॥
　यावन्त शकुना केचिद् ये दिव्या ये च मानवा ।
　रत्नत्रयस्य वर्णानि व्याहरन्ति समन्ततः ॥

न तेषां लभ्यतेऽन्तो हि पिबतो वा महोदधेः।
आख्यातो बोधिसत्त्वानां नयो ह्येष अचिन्तियः॥ २६४॥

इह कोट्यां स्थिताः शूरा बोधिसत्त्वा यशस्विनः।
स्वराङ्गानि प्रमुञ्चन्ति यथा गङ्गाय वालिकाः॥ २६५॥

5 ततश्चिन्त्यः स्वरोऽप्येवं बोधिसत्त्वो न मन्यते।
मन्यनायां प्रहीणायामासन्नो भोति बोधये॥ २६६॥

न स शीलं विलुम्पेति अपि जीवितकारणात्।
अविलुप्तः स चरति बोधिसत्त्वो दृढव्रतः॥ २६७॥

नासौ भूयो विलुप्येत कामसंज्ञाय सर्वशः।
10 सर्वसंज्ञाप्रहीणस्य अप्रमेयाः समाधयः॥ २६८॥

N 451 समाहितः स चरति सज्जते न समाधिषु।
असक्तश्चाप्रमत्तश्च नासौ लोकेषु सज्जते॥ २६९॥

लोकधातूनतिक्रम्य स गच्छति सुखावतीम्।
गतश्च तत्र संबुद्धममिताभं स पश्यति॥ २७०॥

15 बोधिसत्त्वांश्च[1] तान् शूरान् लक्षणैः समलंकृतान्।
पञ्चाभिज्ञापारमि[2] च प्राप्ता धारणिगोचराः॥ २७१॥

गच्छन्ति क्षेत्रकोटीयो बुद्धानां पादवन्दकाः।
ओभापयन्तो गच्छन्ति बुद्धक्षेत्राननचिन्तियान्॥ २७२॥

सर्वदोषप्रहीणाश्च सर्वक्लेशविशोधिताः।
20 सर्वक्लेशसमुच्छिन्ना एकजातिस्थिता जिनाः॥ २७३॥

न चो अपायान् गच्छन्ति तस्मात् क्षेत्रात्तु ते नराः।
सर्वेऽपायाः समुच्छिन्नास्तस्मिन् क्षेत्रे अशेषतः॥ २७४॥

बोधिता[3] बुद्धश्रेष्ठेन अमिताभेन तायिना।
करोथ भा तत्र काङ्क्षां गमिष्यथ सुखावतीम्॥ २७५॥

N 452 25 यः क्षेत्रश्रेष्ठस्य[4] शृणित्व वर्णं
चित्तप्रसादं प्रतिलभि मातृग्रामः।
स क्षिप्र भोती पुरुषवरः सुविद्वान्
ऋद्धया च याति क्षेत्रसहस्रकोटीः॥ २७६॥

यावन्ति पूजा बहुविध अप्रमेया
30 या क्षेत्रकोटीनयुतशतेषु।

[1] AB बोधिसत्त्वाश्च ये शूरा लक्षणैः समलंकृताः for the line. [2] A महाभिज्ञा; B महाप्रज्ञा for पारमि च. [3] AB शोधिता लोकनाथेन for बोधिता बुद्धश्रेष्ठेन. [4] AB यः सूत्ररत्नमिह श्रुत्व वर्णं for the line.

तां पूज कृत्व पुरुषवरेषु नित्यं
　　संल्लापकलापी न भवति मैत्रचित्तः ॥ २७७ ॥
शीलं समाधि सततु निषेवमाणो
　　ध्यानान् विमोक्षांस्तथपि च अप्रमाणान् ।
शून्यानिमित्तान् सततु निषेवमाणो
　　नचिरेण सो हि सुगतु भवति लोके ॥ २७८ ॥
एषा हि पूजा परमा विशिष्ट महां
　　यः शीलस्कन्धे प्रतिष्ठितु बोधिसत्त्वो ।
सद सर्वबुद्धास्तेन सुपूजिता हि
　　क्षयान्तकाले यः स्थितु बोधिचित्ते ॥ २७९ ॥
सुपरीन्दितास्ते बुद्धसहस्रकोट्यो
　　ये बोधिसत्त्वा इमु क्षयि कालि घोरे ।
रक्षन्ति धर्मं सुगतवरोपदिष्टं
　　ते मह्य पुत्रा औरसक धर्मराज्ञः ॥ २८० ॥

इति श्रीसमाधिराजे सूत्रधारणानुशंसापरिवर्तो नाम द्वात्रिंशतितमः ॥ ३२ ॥

## क्षेमदत्तपरिवर्तः ।

N 455 [1]अथ खलु भगवान् पुन[2]रेव चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म[3]--भूतपूर्वं कुमार अतीते-ऽध्वन्यसंख्येये कल्पे असंख्येयतरे विपुले अप्रमाणे अचिन्त्ये अपरिमिते यदासीत् । तेन कालेन तेन समयेन घोषदत्तो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता [4]देवानां च मनुष्याणां च बुद्धो भगवान् । स
N 456 5 खलु पुनः कुमार घोषदत्तस्तथागतोऽर्हन् सम्यक्संबुद्धो अप्रमेयान[5]चिन्त्यानपरिमाणानसंख्येयान् सत्त्वानास्रवक्षयायार्हत्त्वे [6]प्रतिष्ठाप्य परिनिर्वाप्य अप्रमेयानसंख्येयांश्च सत्त्वाननुत्तरायां सम्यक्संबोधावविनिवर्तनीयत्वे प्रतिष्ठाप्य परिनिर्वृतोऽभूत् । तेन च कुमार कालेन तेन समयेन[7] राजाभूच्छ्रीघोषो नाम । स तस्य तथागतस्य[8] पूजार्थं तथागतधातुगर्भाणि चतुरशीतिस्तूपकोटिसहस्राणि कारयामास । एकैकस्मिंश्च स्तूपे चतुरशीतिचतुरशीतिदीपार्घ्यकोटीनियुतशतसहस्राणि प्रतिष्ठापयामास । एवं
10 वाद्यानां तूर्याणां पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकानाम् । एकैकत्र च स्तूपे चतुरशीतिचतुरशीतिकोटिसहस्राणि प्रतिष्ठापयामास । इति हि कुमार स राजा श्रीघोषस्तथागतशरी[9]राणां पूजां कृत्वा चतुरशीत्या बोधिसत्त्वकोटीनियुतशतसहस्राणां महान्तं बोधिसत्त्वसंनिपातं कारयित्वा
N 457 तेषां बोधिसत्त्वानां [10]महासत्त्वानां सर्वसुखोपधानेन पूजायामुद्युक्तोऽभूत् । सर्वे च ते बोधिसत्त्वा [11]महासत्त्वा धर्मभाणका अभूवन् अनाच्छेद्यप्रतिभानाः समाधिप्रतिलब्धाः असङ्गधारणीप्रतिलब्धा
15 भूतगुणधर्मदेशकाः परिशुद्धधर्मदेशका बोधिसत्त्ववशिपारमिप्राप्ताः । तेन च कुमार कालेन तेन समयेन तत्रैव पर्षदि क्षेमदत्तो नाम बोधिसत्त्वो महासत्त्वोऽभूच्छिशुर्दहरः कृष्णकेशः प्रथमयौवनसमन्वागते भद्रके वयसि वर्तमान अनिक्रीडितावी कामेषु कौमारब्रह्मचारी एकवर्ष उपसंपदा । तेन च कुमार कालेन तेन च समयेन राजा श्रीघोषस्तं महान्तं बोधिसत्त्वमहासत्त्वगणमभ्येपते स्म यदुत षट्पारमितासंगीतौ । बोधिसत्त्वपिटकमहाधारण्युपायकौशल्यवशिविनयासङ्गाभिनिर्हारार्थं
20 तान् बोधिसत्त्वान् महासत्त्वानध्येष्य रात्रौ संनिपण्णाया तथागतचैत्य[12]स्य पुरतः तत्रानेकानि दीपार्घ्यकोटिनियुतशतसहस्राणि प्रज्वालितानि । सिक्तसंमृष्टशोधितश्च मण्डलमात्रः कृतोऽभूत् पुष्पाभिकीर्णो नानाविचित्रशयनासनप्रज्ञप्तः । राजापि श्रीघोषः सान्तःपुरग्रामनगरजनपदपारिषद्य
N 458 सपौरो निष्क्रान्तः । वाद्यतूर्यतालावचरपुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाभिः परिगृहीताभिस्तथागतचैत्य[13]स्य पूजां कृत्वा सार्धमन्तःपुरेण प्रासादतलमभिरूढोऽभूद्धर्मश्रवणाय ।
25 महती च देवमानुषिका परिषत् संनिपतिता धर्मश्रवणार्थिका । अद्राक्षीत् क्षेमदत्तो बोधिसत्त्वो महासत्त्वस्तानि च महान्ति दीपार्घ्यकोटीनियुतशतसहस्राणि संप्रज्वलितानि । अनभासेनैव

१ AB तत्र for अथ खलु २ AB पुनरपि for °रेव ३ After स्म, ABT read a passage given in App 1 (No 27) ४ A देवमनुष्याणां for देवानां च मनुष्याणां च. ५ AB om. अचिन्त्यानपरिमाणान् ६ AB प्रतिष्ठापयति for प्रतिष्ठाप्य ७ After समयेन, AB add जम्बूद्वीपे. ८ After °गतस्य, AB add परिनिर्वृतस्य ९ AB °गतधातुगर्भाणां स्तूपानां for °गतशरीराणां. १० AB om. महासत्त्वानां ११ AB om. महासत्त्वा १२ ABT °गतधातुगर्भाणां चैत्यानां for °गतचैत्यस्य. १३ AB °गतधातुगर्भाणां चैत्यानां for °गतचैत्यस्य.

स्फुटमभूत्। सदेवमानुषिकां च जनतां धर्मश्रवणाय संनिपतितां विदित्वा तस्यैतदभूत्-
अहमपि महायानसंप्रस्थितः। यन्न्वहमिमं समाधिमाकाङ्क्षंस्तथागतपूजां कुर्याम्, यथारूपया पूजया
सदेवमानुषासुरलोकश्चित्रीकारप्राप्तो भवेदात्तमनाः प्रमुदितः प्रीतिसौमनस्यजातो भवेद्धर्मालोकप्राप्तः।
इमां च सर्वां तथागतपूजामभिभवेयं येयं श्रीघोषेण राज्ञा कृता। राजा च श्रीघोषश्चित्रीकारप्राप्तो
भवेदात्तमनाः प्रमुदितः प्रीतिसौमनस्यजातः सान्तःपुरपरिवारः॥ 5

अथ खलु क्षेमदत्तो बोधिसत्त्व एवंचित्तः प्रीतिसौमनस्यजातस्तं महान्तं जनकायं N 459
संनिपतितं विदित्वा धर्मश्रवणिकानां रात्रौ संनिषण्णायां तथागतचैत्यस्य पुरतः स्थित्वा
दक्षिणं बाहुं चोक्षपरिवेष्टितं कृत्वा तैलम्रक्षितं कृत्वा दीपयामास। अथ खलु क्षेम-
दत्तस्य बोधिसत्त्वस्य महासत्त्वस्याध्याशयेनानुत्तरां सम्यक्संबोधिं पर्येषमाणस्य तथा
प्रदीप्ते दक्षिणे पाणौ नाभूत् चित्तस्य मुखवर्णस्य वा अन्यथात्वम्। अथ खलु कुमारः 10
समनन्तरप्रदीप्ते क्षेमदत्तस्य बोधिसत्त्वस्य महासत्त्वस्य पाणौ संप्रज्वलिते संज्योतीभूते
एकज्वालाप्राप्ते, अथ खलु तस्यां वेलायां महापृथिवीचालः प्रादुरभूत्। तस्य पाणौ दीप्य-
मानस्य प्रभया तान्यनेकानि दीपार्धकोटीनयुतशतसहस्राणि ध्यामीकृतान्यभूवन्। सर्वासु
च दिक्षु महानवभासोऽभूत्, येनावभासेन सर्वा दिशोऽवभासिताः समन्तात् स्फुटा अभूवन्।
स प्रीतिसौमनस्यजात इमं सर्वधर्मस्वभावसमताविपञ्चितं समाधिं वल्गुना मनोरमेण स्वरेण 15 N 460
विशिष्टया वाचानुप्रबद्धैः पदव्यञ्जनैर्विस्तरेण सर्वपर्षदं विज्ञापयन् संप्रकाशयति स्म। तत्र
द्वादश सहस्राणि त्रायस्त्रिंशत्कायिकानां देवानां संनिपतितानि धर्मश्रवणाय। ते प्रीतिसौमनस्यजाता
विविधां दिव्यां पूजामकार्षुः, अप्सरोगणाश्च दिव्याः संगीतीः प्रयोजयामासुः। अद्राक्षीद्राजा
श्रीघोषः उपरिष्टात् प्रासादतलगतः स्वजनपुरस्कृतः अन्तःपुरमध्यगतोऽष्टाङ्गपोषधसमादत्तः
क्षेमदत्तं बोधिसत्त्वं महासत्त्वं बाहुनावभासयन्तं सर्वाः प्रभा अभिभूय दिव्यया अतिक्रान्तमानु- 20
ष्यकयावभासितम्। दृष्ट्वा च पुनरस्यैतदभूत्- अभिज्ञाप्राप्तो बतायं क्षेमदत्तो बोधिसत्त्वो महासत्त्वो
भविष्यतीति। स तीव्रं प्रेम च प्रसादं च गौरवं च चोपस्थाप्य सपरिवारो महाकुशलमूलपुण्य-
स्कन्धोपस्तब्धः सार्धमशीत्यान्तःपुरिकाभिस्ततः प्रासादतलादात्मानमुत्क्षिपत् यदुत क्षेमदत्तस्य
बोधिसत्त्वस्य दर्शनाय प्रीतिसंमोदनाय। स गौरवनिर्जातेन कुशलमूलेन दृष्ट एव N 461
धर्मे सपरिवारो देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगपरिग्रहं प्रतिलभते। स देवनागयक्ष- 25
गन्धर्वासुरगरुडकिन्नरमहोरगपरिगृहीतः पुनरेव राजा श्रीघोषः, सपरिवारः परिपूर्णाद्दस्तशतसह-
स्रिकात् प्रासादात् पतितः। न चास्य कायविहेठश्चित्तविहेठो वा अवलीनता वाभूत्॥

---

१ AB तथागतपूजया for पूजया. २ After आत्तमना°, B adds. मानुषिकां जनतां धर्मश्रवणाय संनिपतितां विदित्वा तस्यैतदभूत्-अहमपि महायानसंप्रस्थित°. ३ After कृत्वा, AB add. तैलस्नुतमकार्षीत्. ४ After °सत्त्वस्य, AB add: प्रतिपन्नस्य. ५ After संबोधिं, AB add अभिसंप्रस्थितस्य. ६ AB दक्षिणबाहौ for दक्षिणे पाणौ. ७ A om. °स्वभाव°. ८ AB °परिवृत° for पुरस्कृतः. ९ A om. चोपस्थाप्य सपरिवारः.

अथ खलु राजा श्रीघोषः उभौ बाहू प्रगृह्य महता जनकायेन सार्धं महान्तं निर्नादनिर्घोषमाक्रन्दं चाकार्षीत् यदुत क्षेमदत्तस्य बोधिसत्त्वस्य महासत्त्वस्य बाहुं दह्यमानं दृष्ट्वा संप्रज्वलितम् । स राजा तेन महता जनकायेन सार्धं प्रारोदीदश्रूणि प्रवर्तयमानः ॥

अथ खलु क्षेमदत्तो बोधिसत्त्वो महासत्त्वः राजानं श्रीघोषमामन्त्रयते स्म – किं 5 पुनस्त्वं महाराज अनेन महता जनकायेन सार्धं महान्तं निर्नादनिर्घोषमाक्रन्दं कुर्वन् रोदिषि अश्रूणि च प्रवर्तयसि ? अथ खलु राजा श्रीघोषः क्षेमदत्तं बोधिसत्त्वं गाथाभिगीतेन प्राभाषत –

N 452

क्षेमदत्तं महाप्राज्ञं पण्डितं धर्मभाणकम् ।
अङ्गहीनं विदित्वैनं जनोऽयं तेन रोदिति ॥ १ ॥
एतादृशं रूपमिदं तेजोराशिसमुद्गतम् ।
10 बाहुहीनं विदित्वा हि भूयोऽहमपि दुःखितः ॥ २ ॥
यत्त्वया दीपितो बाहुः प्रभा मुक्ता दिशो दश ।
इमे जिह्मीकृता दीपा दिव्यया त्वत्प्रभूतया ॥ ३ ॥
प्रकम्पितेयं पृथिवी चित्तं ते न च लीयते ।
तत उत्पादितं चित्तं नैषो अवरकोविदः ॥ ४ ॥
15 हस्तशतसहस्रातः प्रासादात् पतितो ह्यहम् ।
सार्धमन्तःपुरेणेह न च मे काय हिंसितः ॥ ५ ॥
साधु ते ज्ञानमाश्चर्यं साधु चित्तमनुत्तरम् ।
साधु वीर्यं च स्वारब्धं साधु चाप्याशयो महान् ॥ ६ ॥
यस्य हस्तौ विदह्यन्ते न जात्वस्तीह इञ्जना ।
20 प्रीतिप्रामोद्यजातश्च भूयो धर्मे प्रभाषसे ॥ ७ ॥
पूर्णमास्यां यथा चन्द्रः सूर्यो भासौ नभस्तले ।
सुमेरुगिरिराजो वा एवं शोभसि मारिष ॥ ८ ॥
अहं पि एवं प्रणिधिं परिपूर्य पण्डितः ।
कायं प्रेमं जहित्वाहं कुर्यामर्थं च प्राणिनाम् ॥ ९ ॥
25 धर्मप्रेम्णा च हृष्यामि प्रीतिर्मेऽत्र अचिन्तिया ।
यत् पुनो अङ्गहीनोऽसि तेन मे दुःखमुत्तमम् ॥ १० ॥
क्षेमदत्तो हि राजानं देवनागेहि पूजितः ।
अनन्तप्रतिभानेन इमा गाथा अभाषत ॥ ११ ॥
नैवं स्यादङ्गहीनोऽसौ यस्य बाहुर्न विद्यते ।
30 स तु देवाङ्गहीनः स्याद् यस्य शीलं न विद्यते ॥ १२ ॥

N 453

१ AB उत्क्षिप्य for प्रगृह्य. २ After °मानः, AB add: क्षेमदत्तस्य बोधिसत्त्वस्य महासत्त्वस्य पुरतः स्थितोऽभूत् । अवादीत् कुमार क्षेमदत्तो. ३ After सार्धं, AB add: मम पुरत स्थित्वा. ४ AB एवमुक्ते for अथ खलु ५ AB प्रत्यभाषत for प्राभाषत. ६ A धरणी for पृथिवी ७ AB बाहौ विदह्यति for हस्तौ विदह्यन्ते. ८ AB मार्ष प्रशोभसि for शोभसि मारिष.

अनेन पूतिकायेन पूजिता मे तथागताः ।
अचिन्तिया दक्षिणीयाः सर्वलोकस्य चेतियाः ॥ १३ ॥
अनन्तो यास्त्रिसाहस्रा रत्नानां परिपूरिताः ॥
प्रदद्याल्लोकनाथेभ्यो बुद्धज्ञानगवेषकः ॥ १४ ॥
अस्त्येषा लौकिकी पूजा अन्या पूजा अचिन्तिया । 5
ये धर्मान् शून्यान् जानन्ति त्यजन्ते कायजीवितम् ॥ १५ ॥
सत्यैवालयं करिष्यामि महाराज शृणोहि मे ।
या चेयं जनता सर्वा इमां गाथां विजानथ ॥ १६ ॥ N 464
येन सत्येन बुद्धोऽहं मेध्ये लोकस्य चेतियः ।
तेन सत्येन धरणी षड्विकारं प्रकम्पतु ॥ १७ ॥ 10
भाषिता च इयं वाचा धरणी च प्रकम्पिता ।
आश्चर्यमद्भुतप्राप्ता देवकोट्यः प्रहर्षिताः ॥ १८ ॥
हर्षिता देवमनुजा बोधिचित्तमुपादयुः ।
प्रस्थिता अग्रयानस्मिन्नप्रमेया अचिन्तियाः ॥ १९ ॥
सत्त्वानां कृतो अर्थः क्षेमदत्तेन भिक्षुणा । 15
बुद्धानां वर्तते ज्ञानं यत्राक्षयमचिन्तियम् ॥ २० ॥
येन सत्येन धर्मोऽसौ बाहुर्नाम न विद्यते ।
तेन सत्येन मे बाहुर्भोति क्षिप्रं यथा पुरा ॥ २१ ॥
येन सत्येन धर्मोऽसौ क्षेमदत्तो न विद्यते ।
दिशो दश गवेषद्भिः शून्यत्वान्नोपलभ्यते ॥ २२ ॥ 20
कोऽपि निश्चरते शब्दस्तं पि शून्यं विजानथ ।
प्रतिश्रुत्कोपमः शब्दो धर्मानेवं विजानथ ॥ २३ ॥
सदा विशारदो भोति शून्यतायां गतिंगतः ।
तस्य सत्येन वाक्येन सर्वलोको न दह्यते ॥ २४ ॥ N 465
यावन्तस्त्रिभवे सत्त्वा ये देवा ये च मानुषाः । 25
सर्वज्ञतायास्तेजेन सर्वे भोन्ति समाहिताः ॥ २५ ॥
यावन्त्युपद्रवाः केचिद् ये दिव्या ये च मानुषाः ।
अवैवर्तिकतेजेन सर्वे ते भोन्ति निर्वृताः ॥ २६ ॥
भाषिताश्च इमा गाथा बाहुश्च पुनरुत्थितः ।
क्षेमदत्तस्य कायश्च लक्षणेहि विचित्रितः ॥ २७ ॥ 30

१ AB अनन्तान् त्रिसाहस्रान् रत्नानां परिपूरितान् for the line. २ C अन्यथा किं for सत्यवाक्ये. ३ A मानवाः for मानुषाः.

देवकोटीसहस्राणि अन्तरिक्षे स्थितानि च।
मन्दारपुष्पैस्तं भिक्षुमोकिरन्ति च तत्क्षणम् ॥ २८ ॥
अमानुष्येहि पुष्पेहि जम्बुद्वीपो ह्ययं स्फुटः।
अप्सरःकोटिनियुतैः संगीतः संप्रयोजिताः ॥ २९ ॥
इमं नादं नदन्तस्य क्षेमदत्तस्य तत्क्षणम्।
बुद्धकोटीसहस्राणि पश्यन्तीदं विकुर्वितम् ॥ ३० ॥
N 466 स्वकस्वकेषु क्षेत्रेषु आरोचेत् सुमहायशाः।
भिक्षूणां भिक्षुणीनां च उपासक उपासिकाम् ॥ ३१ ॥
क्षेमदत्तो ह्यसौ भिक्षुः पण्डितः सुमहाबलः।
10 येनासौ दीपितो बाहुर्बुद्धज्ञानस्य कारणात् ॥ ३२ ॥
तेन क्षेत्रसहस्राणि यथा गङ्गाय वालिकाः।
ओभासिताः प्रदीपेन कल्पोदाह इव स्थिते ॥ ३३ ॥
पुष्पचन्दनचूर्णैश्च सर्वक्षेत्राः स्फुटा अभूत्।
यावद्भूमिमुपादाय जानुमात्रमभूत् स्फुटम् ॥ ३४ ॥
15 सर्वरत्नैः सर्वपुष्पैर्बुद्धक्षेत्रमभूत् स्फुटम्।
क्षेमदत्तस्य पूजायै नागा वर्षन्ति मौक्तिकम् ॥ ३५ ॥
सर्वरत्नामयैर्व्यूहैरिदं क्षेत्रमलंकृतम्।
संस्तृतं रत्नमुक्ताभि क्षेमदत्तस्य पूजया ॥ ३६ ॥
देवा नागाश्च यक्षाश्च किन्नराप्सरमहोरगाः।
20 प्रस्थिता अग्रबोधीये यथा गङ्गाय वालिकाः ॥ ३७ ॥
शाक्यसिंहोऽपि संबुद्धो गृध्रकूटस्मि पर्वते।
पुरतो भिक्षुसंघस्य सिंहनादं नदी जिनः ॥ ३८ ॥
N 467 क्षेमदत्तोऽहमभवं श्रीघोषोऽप्यजितोऽभवत्।
कल्पकोटीसहस्राणि चरन् संबोधिचारिकाम् ॥ ३९ ॥
25 सहदर्शनेन भिक्षुस्य क्षेमदत्तस्य तत्क्षणम्।
अचिन्त्याभिस्तदा स्त्रीभिः स्त्रीभावो विनिवर्तितः[1] ॥ ४० ॥
व्याकृतास्ते नरेन्द्रेण नास्ति तेषां विनिवर्तना।
स्वयंभुवो भविष्यन्ति सर्वे लोकविनायकाः ॥ ४१[2] ॥
श्रुत्वा सूत्रमिदं विद्वान् संक्लेशगुणदर्शनम्।
30 काये प्रेम न कुर्वीत इह धर्मे सुनिश्चितः ॥ ४२ ॥
इति श्रीसमाधिराजे क्षेमदत्तपरिवर्तो नाम त्रयस्त्रिंशतितम ॥ ३३ ॥

---

१ AC जितो भवेत् for अजितोऽभवत्. २ ABT अनन्ताभि for अचिन्त्याभिः.

## ३४

## ज्ञानावतीपरिवर्तः ।

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन इमं समाधिमाकाङ्क्षता क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन कुशलमूले प्रतिष्ठिते[1] धर्मदानेन वा आमिषदानेन वा योगः करणीयः। तेन बोधिसत्त्वेन महासत्त्वेन तद्दानं चतसृभिः 5 परिणामनाभिः परिणामयितव्यम्। कतमाभिश्चतसृभिः? यदुत यैरुपायकौशल्यैस्तैर्बुद्धैर्भगवद्भिरनुत्तरा सम्यक्संबोधिरभिसंबुद्धा, तेषामुपायकौशल्यानां प्रतिलम्भायेदं दानकुशलमूलमवरोपयामि। अयं प्रथमः परिणामः। येभ्यः कल्याणमित्रेभ्योऽन्तिकात्तान्युपायकौशल्यानि शृणुयामुद्गृह्णीयां पर्यवाप्नुयां धारयेयम्, तैरनुत्तरा सम्यक्संबोधिरभिसंबुध्यते। तैर्मे कल्याणमित्रैः सार्धं समवधानं भवेत्, एवमेतद्दानकुशलमूलमवरोपयामि। अयं द्वितीयः परिणामः। ये भोग[2]प्रतिलाभाः सर्वलोको- 10 पजीव्या भवेयुस्तैर्मे भोगप्रतिलाभैः समवधानं भवेत्, एवमिदं कुशलमूलमवरोपयामि। अयं तृतीयः परिणामः। य आत्मभावप्रतिलाभः[3] द्वाभ्यामनुग्रहाभ्यां सत्त्वाननुगृह्णीयाद्यदिदमामिषानुग्रहेण च धर्मानुग्रहेण च, तस्य मे आत्मभावस्य प्रतिलम्भो भवेत्, एवमिदं कुशलमूलमवरोपयामि। अयं चतुर्थः परिणामः। आभिः कुमार चतसृभिः परिणामनाभिर्बोधिसत्त्वेन महासत्त्वेन तानि कुशलमूलानि परिणामयितव्यानि॥ 15

पुनरपरं कुमार बोधिसत्त्वेन महासत्त्वेनेमं समाधिमाकाङ्क्षता गृहिणा वा प्रव्रजितेन वा क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन शीलवन्तो गुणवन्तः[4] प्रज्ञावन्तो बोधिसत्त्वा महासत्त्वाः सेवितव्या भजितव्याः पर्युपासितव्या अशाठ्येन[5]। योऽस्य समाधेर्धारको भिक्षुर्बोधिसत्त्वो महासत्त्वो भवेत्, स च स्यादाबाधिको बाढग्लानः, तेन स्वमांसशोणितेनापि स भिक्षुस्तस्मादाबाधाद् व्युत्थापयितुमुत्सोढव्यः। अध्याशयसंपन्नेन कुमार बोधिसत्त्वेन महासत्त्वेनेमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेनाविकम्पमानेन[6] विशारदेन स्वकं मांसशोणितमपि परित्यज्य धर्मभाणको भिक्षुराबाधाद् व्युत्थापयितव्यः। तदनेनापि ते कुमार पर्यायेणैवं 20 वेदितव्यम्॥

भूतपूर्वं कुमार अतीतेऽध्वन्यसंख्येये कल्पे असंख्येयतरे विपुले[7] अप्रमाणे[8] यदासीत् तेन कालेन तेन समयेनाचिन्त्यप्रणिधानविशेषसमुद्गतराजो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्। स खलु पुनः कुमार अचिन्त्यप्रणिधानविशेषसमुद्गत- 25 राजस्तथागतोऽर्हन् सम्यक्संबुद्धो यस्मिन्नेव दिवसेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्तस्मिन्नेव दिवसे परिहृते अप्रमेयानसंख्येयान् बुद्धनिर्मितान् निर्माय अपरिमाणानां च सत्त्वानां विनयं कृत्वा

---

१ AB प्रत्युपस्थिते (न) for प्रतिष्ठिते. २ A भोगाः प्रतिलाभाः for भोग°. ३ A °प्रतिलम्भ for लाभः. ४ B om. गुणवन्तः प्रज्ञावन्तो. ५ After अशाठ्येन, AB add तत्रेदं मे शाठ्यम् (B तत्रेदमसाठ्ये) ६ A अविकल्पमानेन for °कम्पमानेन. ७ After विपुले, AB add अचिन्त्ये. ८ AB अपरिमिते for अप्रमाणे.

आस्रवक्षयायार्हत्त्वे प्रतिष्ठाप्य अपरिमाणाश्च सत्त्वाननुत्तरायां सम्यक्संबोधावविनिवर्तनीयत्वे[1] प्रतिष्ठाप्य
तत्रैव दिवसे परिनिर्वृतोऽभूत् । तस्य खलु पुनर्भगवतः परिनिर्वृतस्य चतुरशीतिं वर्षकोटीनयुत-
N 471 शतसहस्राणि सद्धर्मोऽतिष्ठत् । तस्य च भगवतोऽचिन्त्यप्रणिधानविशेषसमुद्गतराजस्य तथागतस्य
शासनान्तर्धानकालसमये पश्चिमायां पञ्चशत्यां वर्तमानायां बहवो भिक्षवः प्रादुर्भूता उपलम्भ-
दृष्टयः । तेषामेवंरूपाः सूत्रान्ता न रोचन्ते न चाधिमुच्यन्ते प्रतिबाधन्ते प्रतिक्षिपन्ति । ईदृशानां
च सूत्रान्तधारकाणां भिक्षूणां पीडां कुर्वन्तो यावज्जीविताद् व्यपरोपणमकार्षुः । तैरभिसत्काराध्य-
वसितैरीदृशसूत्रान्तधारकाणां भिक्षूणां सहस्रं जीविताद् व्यपरोपितमभूत् । तेन च पुनः कुमार
5 कालेन तेन समयेन राजाभूद् ज्ञानबलो नाम जम्बुद्वीपेश्वरः सद्धर्मपरिग्राहकः पूर्वप्रणिधानसंपन्नः ।
तेन खलु पुनः कुमार कालेन तेन समयेन इह जम्बुद्वीपे एको भिक्षुर्धर्मभाणकोऽभूत्, तस्य
समाधेर्धारको भूतमतिर्नाम्ना तस्य राज्ञः कुलप्रवेशकः कल्याणमित्रो हितैषी अनुकम्पकः
अर्थकामः । स चास्य राजा अतृप्तो दर्शनेनाभीक्ष्णप्रतिकाङ्क्षी चाभूद्दर्शनेन धर्मसंकथनोप-
संक्रमणपर्युपासनपरिपृच्छाग्रहणधारणवाचनविज्ञापनसमर्थः । स खलु पुनर्धर्मभाणको भिक्षुः
10 सत्त्वानामीर्याचर्याधिमुक्तिधातुवासनाकुशलोऽभूत् । सत्त्वानामिन्द्रियबलवीर्यविमात्रताज्ञानधातुवासना-
N 472 कुशलः सत्यसंधिकुशलः विसंधिप्रतिवचनकुशलः अर्थविनिश्चयकुशलः गम्भीरप्रतिभानः सत्त्वानां
विनयविधिज्ञः पूर्वाभिलापी[2] स्मितमुखः अपगतभ्रूकुटिमुखो महद्व्रतचित्तविहारी महाकरुणाभियुक्तः
अनभिभूतः सर्वपरप्रवादिभिः । तेन च कुमार कालेन तेन च समयेन राज्ञो ज्ञानबलस्य दुहिता
दारिकाभूत् षोडशवर्षा जात्या अभिरूपा प्रासादिका दर्शनीया परमया शुभवर्णपुष्कलतया
15 समन्वागता ज्ञानवती नाम । तस्याः स[3] भूतमतिर्भिक्षुराचार्योऽभूत् कुशलेषु धर्मेषु संदर्शकः
समुत्तेजकः संप्रहर्षकः समादापकः । तेन च कुमार कालेन तेन समयेन तस्य धर्मभाणकस्य
भिक्षोर्महाकृष्णवैसर्प उरौ प्रादुरभूत् दुश्चिकित्स्यो दुर्लभभैषज्यः । स वैद्यैः ग्लानः प्रतिक्षिप्तोऽभूत् ॥
अथ खलु राजा[4] सान्तःपुरः सपुत्रः सदुहितृपरिवारः [illegible] भिक्षुं ग्लानं विदित्वा[5]
प्रारोदीदश्रूणि प्रवर्तयति स्म सार्धमशीत्या स्त्रीसहस्रैः सार्धं पौरैर्नागरैः सार्धं राष्ट्रेण
N 473 20 नैगमजानपदैर्गणकमहामात्रैः सार्धममात्यदौवारिकपारिषद्यैः । ते सर्वे तं भिक्षुं ग्लानं विदित्वा
प्रारोदन्त अश्रूणि प्रवर्तयामासुः[6] —मा खल्वयं भिक्षुः कालं कुर्यादिति । तेन च कुमार कालेन
तेन समयेन राज्ञो ज्ञानबलस्यान्यतरा देवता पुराणसालोहिताभूद[7]नुबद्धा । सा तस्य राज्ञः
स्वप्नान्तर्गतस्योपदर्शयति स्म— सचेत् महाराज एतस्य भिक्षोर्नवकेनासंक्लिष्टेन मानुष्येण
रुधिरेणैष कृष्णवैसर्प आलिप्येत, नवकं चासंक्लिष्टं मानुषं मांसं नानारससंप्रयुक्तं भोजनं दीयेत,
25 एवमेष भिक्षुरस्मादाबाधाद् व्युत्तिष्ठेत । अथ खलु राजा ज्ञानबलस्तस्या रात्र्या अत्ययेन ततः
स्वप्नान्तरात् प्रतिविबुद्धोऽन्तःपुरमध्यगतः [illegible] स्वप्नप्रकृतिमंतःपुरायारोचयामास —एवंरूपः स्वप्नो
मया दृष्टः । इति हि कुमार ततः स्त्र्यागाराच्चतश्च राजकुलान्न काचित् स्त्री उत्सहते तस्य

---

१ [illegible] अविनिवर्तनीयार्हत्त्वे for °नीयत्वे २ A पूर्वालापी for पूर्वाभिलापी ३ B सुभूतमति नाम for [illegible] भूतमतिः ४ After राजा A B add ज्ञानबल ५ A B दृष्ट्वा for विदित्वा ६ After प्रवर्तयामासुः A [illegible] add एवं चाहुः ७ After अभूत्, A B add पृष्ठतः

भिक्षोस्तद्भैषज्यं दातुम् । ज्ञानावत्यपि राजदुहिता इममीदृशमेव स्वप्नमद्राक्षीत् । दृष्ट्वा च पुनः प्रतिविबुद्धा अन्तःपुरमध्ये इममेव स्वप्नप्रकृतिं मातृणां परिवारस्य चारोचयति स्म । न च काचिदुत्सहते स्त्री तस्य भिक्षोरेतद् भैषज्यं दातुम् ॥ N 474

अथ खलु ज्ञानवती राजदुहिता तुष्टा उदग्रा आत्तमनस्का प्रमुदिता प्रीतिसौमनस्यजाता एवं व्यवसायमकार्षीत्—यत्त्वहमेतद् भैषज्यं स्वकाच्छरीराद् यथोपदिष्टं नैव रुधिरं नवं च मांसं 5 दद्याम् । अहमेवेह राजकुले सर्वहरा च सर्वतरणी च असङ्क्लिष्टकायवाङ्मनस्कर्मा च । असङ्क्लिष्टज्ञानमेवास्मि । असङ्क्लिष्टस्य धर्मभाणकस्य स्वशरीराद् रुधिरं च मांसं चोपनामयिष्यामि । अप्येव नामैष भिक्षुरस्मादाबाधाद् व्युत्तिष्ठेत । अथ खलु सा ज्ञानवती राजदुहिता स्वकमावासं गत्वा तीक्ष्णं शस्त्रं गृहीत्वा धर्मान्तर्गतेन मानसेन स्वयमूरुमांसं छित्त्वा नानारससंप्रयुक्तं प्रणीतमभिसंस्कृत्य लोहितं च प्रगृह्य तं चाचार्यं प्रवेश्य राज्ञो ज्ञानबलस्य पुरतो निषद्य लोहितेन तं विसर्पमालेपयित्वा 10 तेन च स्वभिसंस्कृतेन भोजनेन संतर्पयति । अथ खलु स भिक्षुरजानन्नपरिभुज्यमानः अपरिशङ्कमानस्तद्भक्तं परिभुक्तवान् । समनन्तरपरिभुक्ते च तस्मिन्नाहारे तस्य भिक्षोः सर्वास्ता वेदनाः प्रतिप्रस्रब्धाः, सर्वश्च व्याधिरपगतः । तेन विगतपरिदाहेन सर्वसुखसमर्पितेन तथा धर्मो देशितो यथा ततोऽन्तःपुरात्ततश्च नगरजनपदाद्भूमनिपाताद् द्वादशानां प्राणिसहस्राणामनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पन्नानि ॥ N 475 15

अथ खलु राजा ज्ञानबलः स्वकां दुहितरं गाथाभिरध्यभाषत —

कुतस्त्वया शोणितु लब्धु दारिके
कुतो इदं आहृतु मांसं मानुषम् ।
आहारु यः साधितु तेऽद्य धीते
येनो सुखीयं कृतु धर्मभाणकः ॥ १ ॥ 20

हतो अथ वाथ मृतोऽथ लब्धो
यत् साधितं नानरसेहि व्यञ्जनम् ।
कुतश्च ते शोणितु लब्धु दारिके
येनो अयं मोचितु व्याधि पापकः ॥ २ ॥

पितु श्रुणित्वा वचनं च दारिका 25
ज्ञानावती तस्य इदं ब्रवीति ।
अलीनचित्ता च गिरं प्रभाषते
शृणुष्व ताता यदहं ब्रवीमि ते ॥ ३ ॥

स्वप्नस्तावत् मया स्वप्नो देवताया निदर्शितः । N 476
शृणुष्व मे भूमिपते भूतार्थं विजानथ ॥ ४ ॥ 30

१ MSS ज्ञानावती and ज्ञानवती promiscuously २ AB नवकं for नवं ३ AB °स्कर्मान्ता for °स्कर्मा ४ AB समोजयति स्म, संतर्पयति स्म ° सप्रवारयति स्म for संतर्पयति. ५ A B अद्य for तेऽद्य ६ A B °भाणकम् for °भाणक ७ A भूमहीनाथ for भूमिपते

सा देवता ममावोचन्मानुषं मांसशोणितम्।
यो दद्यादस्य भिक्षुस्य व्याधेर्मुच्येत स पापकात् ॥ ५ ॥
मया चोत्थाय शय्यातः प्रविश्यान्तःपुरं नृप।
स्वप्नस्तदायमाख्यातो ज्येष्ठिकानां हि मातृणाम् ॥ ६ ॥
5 चेटिकानां मयाख्यातं का शक्ता कर्तुमीदृशम्।
मानुषं शोणितं मांसं रससिद्धं सुसंस्कृतम् ॥ ७ ॥
भोजनं च प्रदातव्यं शोणितेन च लेपनम्।
कृष्णवैसर्पतो एष कथं भिक्षुर्विमुच्यते ॥ ८ ॥
यदि क्रिया न क्रियते क्षिप्रमेतेन व्याधिना।
10 कालं कुर्यादयं भिक्षुर्भैषज्येन विनेति वा ॥ ९ ॥
त्रिभवे को न सत्वस्त्याजयेत् स्वमांसशोणितम्।
इमं दृष्ट्वा ने[1] को विद्वान् कुर्यात् कायस्मि निश्रयम् ॥ १० ॥
अन्तःपुरस्यो प्रतिवेदयाम्यहं
न एक नारीपि भणाति दास्ये।
N 477 15 प्रियश्च मे भिक्षुः प्रियश्च आत्मा
बोध्यर्थु त्यक्तं मय मांसशोणितम् ॥ ११ ॥
तेषां न कायेस्मिं[2] च भक्ति निश्रिता
प्रेमापि नैवात्मनि चाणुमात्रम्।
त्यक्त्वापि चात्मानु न भोति दुर्मनाः
20 ये बोधि प्रार्थेन्ति शिवामशोकाम् ॥ १२ ॥
अन्तःपुरं ततः श्रुत्वा सर्वं तद्विस्मितं अभूत्।
न चात्रोत्सहते काचिदेनां योजयितुं क्रियाम् ॥ १३ ॥
ततो मे नामितं चित्तं भिक्षोर्दास्यामि भोजनम्।
स्वानि मांसान्यहं छित्वा शोणितेन च लेपनम् ॥ १४ ॥
25 स्वकमूरुं मया छित्वा गृहीतं मांसशोणितम्।
मांसपेशी मया पक्वा नानारससुसंस्कृता ॥ १५ ॥
भिक्षोस्तस्यातुरस्याहं दास्यामि पितुरग्रतः।
भोजनं मानुषं मांसं शोणितेन च लेपनम् ॥ १६ ॥
शृणोहि मह्यं वचनं नराधिपा
30 मनुष्यमांसस्मि अविद्यमाने।

---

[1] A B ततो for न को. [2] A B कायेऽस्मि for कायेस्मिं.

छित्त्वा स्वमांसानि मयोक्तो नृपा  N 478
  सार्धेन्व दत्तानिम धर्मभाणके ॥ १७ ॥
एषो मयानुत्तरबोधिअर्थे
  स्वकात्त कायात्त कृतो महार्थः ।
भिक्षुश्च मुक्तः कृतु निर्विकारो  5
  मया च पुण्यं कृतमप्रमेयम् ॥ १८ ॥
राजाप्यवोचद्दुहितां कथं ते
  छिद्यन्ति कायातु स्वकातु मांसे ।
भैषज्ययोगे क्रियमाणि दारिके
  मा ते अभूद् दुःख शरीरवेदना ॥ १९ ॥
स राजधीता मतिमान् विशारदा  10
  समाल्पी राज शृणु नराधिपा ।
श्रुत्वा च तत्र प्रतिपद्य योनिशो
  अचिन्तियः कर्मविपाकु तादृशः ॥ २० ॥
पापेन कर्मेण कृतेन ताता
  निरयेऽपि सत्त्वा प्रपद्यन्ति दारुणे ।  15
निर्मांस भूत्वा च समांस भोन्ति  N 479
  पश्येतु कर्माण फलं अचिन्तियम् ॥ २१ ॥
पापेन कर्मेण निर्मांसशोणिताः
  क्षणेन चो भोन्ति समांसशोणिताः ।
किं वा पुना तत् कुशलेन कर्मणा  20
  अधिमुक्तितो जायति मांसशोणितम् ॥ २२ ॥
छिद्यन्ति मांसे न ममास्ति वेदना
  आहारि मे शोणितु नास्ति इञ्जना ।
न धर्मकायस्य व्रणो न छिद्रं
  यदि सर्वु छिद्येयु मम स्वमांसम् ॥ २३ ॥  25
प्रीतिं मया धर्मि परां जनित्वा
  छित्त्वा प्रदत्तं स्वकमूरुमांसम् ।
न चो ममा तात व्रणेन दुःखं
  जानामि कायो यथपूर्वमासीत् ॥ २४ ॥

१ AB छित्वात्ममांसानि for छित्त्वा स्वमांसानि. २ AB अप्रमाणम् for °मेयम्. ३ A B प्रपतन्ति for प्रपद्यन्ति.

औदुम्बरं पुष्पु यथैव ताता
बहुकल्पकोटीषु कदाचि दृश्यते ।
एमेव एतादृश धर्मभाणको
कदाचि दृश्यन्तिह जम्बुद्वीपे ॥ २५ ॥
N 480 5 यथैव जाम्बूनद निष्कु भासते
पश्यन्त सत्त्वा न वितृप्तिमेन्ति ।
एमेव एतादृश धर्मभाणकान्
दृष्ट्वा न तृप्यन्तिह देवमानुषाः ॥ २६ ॥
पीत्वा यथाच्छं सलिलं जनस्य
10 तृषाभिभूतस्य तृषा विगच्छति ।
एमेव एते विदु धर्मभाणका
धर्मामृतैस्तृष्ण विनेन्ति प्राणिनाम् ॥ २७ ॥
सुत्यक्तमेतन्मम मांसशोणितं
यद्दत्तु भिक्षुस्य गिलानकस्य ।
15 विसर्पु शान्तश्च स धर्मभाणके
कृत मया गौरवु बुद्धवर्णितम् ॥ २८ ॥
चारित्रवन्तस्य बहुश्रुतस्य
इमं समाधीवरधारकस्य ।
यन्मे तु त्यक्तं स्वकमात्ममांस-
20 मेतेष धर्माण भवेय्य लाभिनी ॥ २९ ॥
N 481 यथैव गन्धः सुरभी मनोरमः
कालानुसारी शुभ चन्दनस्य[1] ।
प्रवाति गन्धो दशसु दिशासु
एमेव गन्धोपम धर्मभाणकाः ॥ ३० ॥
25 यथैव मेरुर्दिशतासु दृश्यते
समन्तप्रासादिकु दर्शनीयः ।
अवभासयन्तो दिशतासु रोचते
तथैव मेरूपम धर्मभाणकाः ॥ ३१ ॥
यथैव स्तूपं पतमानु कश्चिद्
30 व्युत्थापयेत् संस्करि पण्डितो नरः ।
यस्तत्र स्तूपेऽपि प्रसादु कुर्याद्
व्युत्थापितो येन स तस्य हेतुः ॥ ३२ ॥

[1] AB हरिचन्दनस्य.

एमेवयं धर्मस्तूपो गिलानको
¹विमोचितो लोहितलेपनेन ।
स्वकेन मांसेन च धर्मगौरवाद्
दीपो मया दीपितु जम्बुद्वीपे ॥ ३३ ॥ 5
एषोऽकरिष्यद् यदि भिक्षु कालं
समाधिशब्दोऽपिह जम्बुद्वीपे । N 482
निरुद्धु सत्त्वान सदाभविष्यत्
चिकित्सितेऽस्मिन् स समाधि लब्धः ॥ ३४ ॥
सर्वस्य लोकस्य परित्राणु भिक्षु- 10
रन्धस्य लोकस्य च चक्षुदायकः ।
रागस्य दोषस्य मोहस्य चैव
चिकित्सकोऽयं मम वैद्यराजः ॥ ३५ ॥
महद्व्रते चित्ति सदा प्रतिष्ठितः
प्रमाणु चर्याय न तस्य लभ्यते । 15
सुविनिश्चितार्थेषु पदेषु शिक्षितो
अनाभिभूतश्च परप्रवादिभिः ॥ ३६ ॥
न मह्य भूयो विनिपाततो भयं
स्त्रीत्वं पुनर्मे न च भूयु² मेष्यति । N 483
सहस्रकल्पान च कोटियो भुयो 20
कृत्वा परं गौरवु धर्मभाणके ॥ ३७ ॥³
यो बुद्धक्षेत्रान् यथ गङ्गवालिका:
रतनान पूर्णान् ददि नायकानाम् ।
यश्चैव पादाङ्गुलिमेक दद्या-
दिदं ततः पुण्यु विशिष्यते परम् ॥ ३८ ॥ 25
सा दारिका कालमितश्च कृत्वा
अदासि बुद्धान सहस्रकोट्यः ।
सर्वेष चो शासनि प्रव्रजित्वा
इमं वरं शान्तु समाधि देशयी ॥ ३९ ॥
सर्वेष तेषां द्विपदोत्तमाना 30
परिनिर्वृतानां चरमस्मि काले ।

---

¹ A विलसितो for विमोचितो. ² A B न कदाचि for न च भूयु. ³ After st. 37, ABT add a passage given in App. I (No. 28).

प्रव्रज्यलाभिन्यिमु नित्यकाल-
मसंक्लिष्टाः सुगतान पुत्रकाः ॥ ४० ॥

N 484 दीपप्रभस्याथ तथागतस्य
चरित्व सा शासनि ब्रह्मचर्यम् ।
5 क्षीमावु तस्मिन् विनिवर्तयित्वा
अभूपि भिक्षुस्तद धर्मभाणकः ॥ ४१ ॥[1]

मैत्रेय ज्ञानबलु सो नरेन्द्रः
सद्धर्मपरिग्राहकु नित्यकालम् ।
दीपंकरोऽसौ अभूद्धर्मभाणको
10 अहं च आसं तद राजधीता ॥ ४२ ॥[2]

एकेन मासेन च शोणितेन चो
उपस्थितो मे तद धर्मभाणकः ।
शाठ्यं च सर्वं परिवर्जयित्वा
इमं समाधिं प्रतिकाङ्क्षता तदा ॥ ४३ ॥[3]

15 येभी तदा रोदितु भिक्षु दृष्ट्वा
गिलानकं पीडितु वेदनाभिः ।
N 483 अविवर्तिकास्ते सद सर्वि भूवन्
न जातु याता विनिपातभूमिम् ॥ ४४ ॥

नाभूपि तेषां सद अक्षिरोगो
20 न शीर्षरोगो न च कर्णरोग.[4] ।
न घ्राणरोगो न च जिह्वरोगो
न च दन्तशूलं[5] न कदाचिदासीत् ॥ ४५ ॥

समन्तप्रासादिकु भोन्ति नित्यं
शिरीय तेजेन अलंकृतकायाः ।
25 द्वात्रिंशकेतुशतपुण्यलक्षणा
उपस्थितो यैस्तद भिक्षु ग्लानक· ॥ ४६ ॥

---

१ A अभूत्स भिक्षुर्विदु धर्मभाणक· for the line. २ After st. 42, ABT add :
सा देवता आसि पुराणसालोहित नरेन्द्र ज्ञानबल पृष्ठतोऽनुगा ।
स्वप्नान्तरे बोधितु याय राजा अक्षोभ्यु साभूचरमाणु चारिकाम् ॥
३ After st. 43, B adds पुनरपि–
चन्द्रप्रभ कुमार आसी पुराणसालोहिता नरेन्द्र श्रीराज· स्थिपृतान् ?।
स्वप्नान्तरे बोधितु याय राजा अक्षोभ्यु सोऽभूचरमाणु चारिकाम् ॥
४ A om. न शीर्षरोगो. ५ C चित्तशूलं for दन्तशूलं.

मह्यं च ते शासनि प्रव्रजित्वा
प्रव्रज्यमानानिसु बुद्धबोधिम्।
धारित्व ते गच्छु तथागतानां
द्रक्ष्यन्ति बुद्धान सहस्रकोटियो ॥ ४७ ॥ 5

सुसंगृहीत्वानिम बुद्धबोधिं
धारेत्व नित्यं च हि गौरवेण। N 486
ते अर्थु कृत्वा विपुलं प्रजानां
द्रक्ष्यन्ति अक्षोभ्य नराणमुत्तमम् ॥ ४८ ॥

श्रुत्वा च ते चर्य निरुत्तरामिमां
लप्स्यन्ति प्रीतिं चरियां निरामिषाम्।
श्रुत्वा च ते आत्मन पूर्वचर्यां 10
काहिन्ति बुद्धान उदारपूजाम् ॥ ४९ ॥

दृष्ट्वा च भिक्षून् विदु शीलवन्तो
निःशाठियेनो सद सेवितव्याः।[1]
अखिलं च दोषं च विवर्जयित्वा
सेवेत भिक्षुं तदे[2] धर्मभाणका. ॥ ५० ॥ 15

आघातु क्रोधं च विवर्जयित्वा
पूजेय पुत्रान् मम धर्मशासने[3]।
मा अन्धभूता बहुकल्पकोटियो
विनिपातप्राप्ताश्च भवेत दुःखिता. ॥ ५१ ॥

न शीलु त्रायेत श्रुतं च तस्य 20
न ध्यानु त्रायेन्न अरण्यवासः।
तदा नु त्रायेन्न च बुद्धपूजा
व्यापादु कृत्वान परस्परेण ॥ ५२ ॥

इति श्रीसमाधिराजे ज्ञानावतीपरिवर्तश्चतुस्त्रिंशतितमः ॥ ३४ ॥

---

१ AB अशाठियेन्ते for निः°. २ B विदु for तद्. ३ ABT धर्मपालान् for °शासने

## सुपुष्पचन्द्रपरिवर्तः ।

N 487 अथ खल्वायुष्मानानन्द उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—पृच्छेयमहं भगवन्तं तथागतमर्हन्तं सम्यक्संबुद्धं कंचिदेव प्रदेशं सचेन्मे भगवानवकाशं कुर्यात् पृष्टप्रश्नव्याकरणाय। एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत्—तेन ह्यानन्द स्वके आसने निषद्य पृच्छ त्वं तथागतमर्हन्तं
5 सम्यक्संबुद्धं यद् यदेवाकाङ्क्षसि, अहं ते तस्य तस्य प्रश्नस्य व्याकरणेन चित्तमाराधयिष्ये। एवमुक्ते आयुष्मानानन्दो भगवन्तमेतदवोचत्—कृतावकाशोऽस्मि भगवन्, कृतावकाशोऽस्मि सुगत प्रश्नव्याकरणाय। अथ खल्वायुष्मानानन्दो भगवतः पुरतः आसने निषद्य भगवन्तमेतदवोचत्—को नु भगवन् हेतुः कः प्रत्ययो यदिह एकत्या बोधिसत्त्वा बोधिसत्त्वचारिकां
N 488 चरमाणा हस्तच्छेदान् पादच्छेदान् कर्णच्छेदानक्ष्युत्पाटनानि अङ्गोत्तमाङ्गच्छेदान् निगच्छन्ति
10 प्रत्यङ्गच्छेदांश्च? विविधानि दुःखानि प्रत्यनुभवन्ति? नो च हीयन्ते? न च परिक्षीयन्तेऽनुत्तरायाः सम्यक्संबोधेः? एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत्—सचेत् त्वमानन्द जानीया यानि मे दुःखानि प्रत्यनुभूतानि इमामनुत्तरां सम्यक्संबोधिं समुदानयितुम्, एतदपि ते च प्रतिभायात्। किं पुनर्यत्तथागतं परिप्रष्टव्यं मन्यथाः। तद् यथापि नाम आनन्द इह कश्चिदेव पुरुषः अधस्तात् पादतलमुपादाय यावन्मूर्धकाद् आदीप्तो भवेत् प्रज्वलित एकज्वालीभूतः, तं कश्चिदेव पुरुष उपसंक्रम्य
15 एवं वदेत्—एहि त्वं भो पुरुष अनिर्वापितेनात्मभावेन पञ्चभिः कामगुणैः समर्पितः समन्वङ्गीभूतः क्रीडस्व रमस्व परिचारयस्वेति। तत् किं मन्यसे आनन्द अपि तु स पुरुषः अनिर्वापितेनात्मभावेन पञ्चभिः कामगुणैः समर्पितः समन्वङ्गीभूतः क्रीडेत रमेत परिचारयेत? आनन्द आह—
N 489 नो हीदं भगवन्। भगवानाह—क्रीडेतानन्द स पुरुषो रमेत परिचारयेत परिकल्पमुपादाय। निर्वापितेनात्मभावेन पञ्चभिः कामगुणैः समर्पितः समन्वङ्गीभूतः। न त्वेव तथागतस्य पूर्वं
20 बोधिसत्त्वचारिकां चरमाणस्य सत्त्वांस्त्रिभिरपायैर्दुःखितान् दृष्ट्वा दरिद्रांश्चाभूत् मुदा वा सौमनस्यं वा चित्तप्रहर्षो वा। ये आनन्द बोधिसत्त्वा महासत्त्वाः पूर्वं बोधिसत्त्वचारिकां चरमाणा अखण्डशीला भवन्ति अच्छिद्रशीला अकल्माषशीला अशबलशीला अपरामृष्टशीला अचलितशीलाः, अलुब्धशीला अक्षोभ्यशीला, नोत्तानशीला, न परदर्शनशीला न विमनादनशीला, ऋजुशीला यथाप्रतिज्ञाशीला सत्त्वानुग्रहशीला। एवंरूपेण शीलेन समन्वागता भवन्ति, ते
25 आनन्द बोधिसत्त्वा महासत्त्वा अनन्ता बोधिसत्त्वचारिकां चरमाणा न हस्तच्छेदेन परिहाणिं निगच्छन्ति। न पादच्छेदेन परिहाणिं निगच्छन्ति। न कर्णनासाच्छेदेन परिहाणिं निगच्छन्ति।

---

१ B om. प्रदेशं २ A दद्यात् for कुर्यात् ३ After निषद्य, A B add प्राञ्जलिको ४ After °सत्त्वा, A B add महासत्त्वा अनन्ता ५ A B कर्णनासाच्छेदानक्ष्युत्पाटनानि शीर्षच्छेदान् for कर्णच्छेदानक्ष्युत्पाटनानि ६ After च A adds निगच्छन्ति अन्यानि च B adds अन्यानि च ७ T समादापयितुम् for समुदानयितुम् ८ AB आनन्द for च ९ AB भवेत् for एकज्वालीभूत १० B अनिर्वापितेन for अनिर्वापितेन ११ A om. अकल्माषशीला १२ After °शीला B adds अखण्डितशीला

न नेत्रोत्पाटनशीर्षच्छेदेन परिहाणिं निगच्छन्ति । नाङ्गप्रत्यङ्गच्छेदेन परिहाणिं निगच्छन्ति । न च विविधानि दुःखानि प्रत्यनुभवन्ति । क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते ॥

N 490

भूतपूर्वमानन्द अतीतेऽध्वन्यसंख्येयकल्पैरसंख्येयतरैर्विपुलैरप्रमाणैरचिन्त्यैरतुल्यैरमाप्यैरपरिमाणैर्यदासीत् । तेन कालेन तेन समयेन रत्नपद्मचन्द्रविशुद्धाभ्युद्गतराजो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां च बुद्धो भगवान् । तेन खलु पुनरानन्द समयेन तस्य भगवतो रत्नपद्मचन्द्रविशुद्धाभ्युद्गतराजस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य नवतिकल्पकोटीनियुतशतसहस्राण्यायुष्प्रमाणमभूत् । सर्वत्र च दिवसे नवतिकल्पकोटीसहस्राणि सत्त्वानामवैवर्तिकतायां बुद्धधर्मेषु प्रतिष्ठापयति स्म । तेन खलु पुनरानन्द समयेन तस्य भगवतो रत्नपद्मचन्द्रविशुद्धाभ्युद्गतराजस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य परिनिर्वृतस्य चरमिकायां पश्चाशति सद्धर्मान्तर्धानकालसमये सद्धर्मविप्रलोपे वर्तमाने इमे एवंरूपाः सूत्रान्ता बहुजनजुगुप्सिता बहुजनविवर्जिता बहुजनविरुद्धा महाजनोत्सृष्टाश्चाभूवन् । महाभयभैरवकाले वर्तमाने महोपद्रवे अतिवृष्टिकालसमये अनावृष्टिकालसमये वर्तमाने व्यालकालसमये वर्तमाने विद्युत्कान्तारकल्पसमये दुर्भिक्षकालसमये मिथ्यादृष्टिकालसमये असम्यग्दृष्टिकालसमये तीर्थिकमन्त्रपर्येष्टिकालसमये बुद्धबोधेः प्रलुज्यमानकालसमये वर्तमाने सप्त बोधिसत्त्वसहस्राणि ग्रामनगरनिगमराष्ट्रराजधानीजनपदेभ्यो निर्वासितानि समन्तभद्रं नाम वनखण्डं तदुपनिश्रित्य विहरन्ति स्म सार्धं सुपुष्पचन्द्रेण धर्मभाणकेन, यस्तेषां भिक्षूणां धारणीधर्मपर्यायं देशयति स्म । स खलु पुना राजा सुपुष्पचन्द्रो धर्मभाणक एको रहोगतः प्रतिसंलीनो दिव्येन चक्षुषा अतिक्रान्तमानुषेण पश्यति स्म — बह्वीर्बोधिसत्त्वकोटीरवरुप्तकुशलमूला अन्योन्येभ्यो बुद्धक्षेत्रेभ्य इहोपपन्नाः । सचेत्ते लभेरन् धारणीधर्मपर्यायश्रवणाय, न निवर्तेरन्ननुत्तरायाः सम्यक्संबोधेः । अथ न लभेरन् धारणीधर्मपर्यायश्रवणाय, विवर्तेरन्ननुत्तरायाः सम्यक्संबोधेः । अथ खलु सुपुष्पचन्द्रो धर्मभाणकः स्मृतः संप्रजानंस्ततः समाधेर्व्युत्थाय येनासौ महान् बोधिसत्त्वगणस्तेनोपसंक्रान्तः । उपसंक्रम्य तं महान्तं बोधिसत्त्वगणमेतदवोचत् — गमिष्यामः कुलपुत्राः । ग्रामनगरनिगमराष्ट्रराजधानीरवतरित्वा सत्त्वेभ्यो धर्मं देशयिष्यामः । अथ खलु स महान् बोधिसत्त्वगणः सुपुष्पचन्द्रं धर्मभाणकमेतदवोचत् — नास्माकमभिप्रेतं यदायुष्मानितो वनषण्डाद् ग्रामनगरनिगमराष्ट्रराजधानीरवतरेत् । तत्कस्य हेतोः ? बहवोऽभिमानिका भिक्षुभिक्षुण्युपासकोपासिकाः । सद्धर्मप्रतिक्षेपकालश्च वर्तते । तमायुष्मन्तं जीविताद्व्यवरोपयिष्यन्ति । आयुष्मांश्चातीव प्रासादिकोऽभिरूपो दर्शनीयः प्रथमयौवनसमन्वागतो भद्रके वयसि वर्तते । स धौतकाञ्चन-

N 491

N 492

---

१ After निगच्छन्ति, AB add तदनेनापि ते आनन्द पर्यायेणैवं वेदितव्यम्. २ After प्रतिष्ठापयति स्म ABT add a passage given in App. I (No. 29) ३. After वर्तमाने, ABT add a passage given in App. I (No 30). ४ After °समये A adds अकालवृष्टिसमये, ५. A om. वर्तमाने. ६ Dutt reads विद्युत्पातकालसमये for विद्युत्कान्तारकल्पसमये against Mss. on the strength of T. ७ After देशयति स्म ABT add a passage given in App I (No 31). ८ AB आनन्द for राजा. ९ After चक्षुषा AB add विशुद्धेन. १०. B शुद्धान्त° for धौत°.

N 493 हाटकच्छविः शङ्खकुन्देन्दुवर्णयोर्णया प्रतिमण्डितोऽपि शोभितललाटो नीलकुञ्चितकेशोष्णीषश्च । मा ते राजपुत्रा वा अन्ये वा तत्प्रतिमा ईर्ष्यामात्सर्योपहतचेतसो जीविताद्व्यवरोपयिष्यन्ति । अथ खलु सुपुष्पचन्द्रो धर्मभाणकस्तं बोधिसत्वगणमेतदवोचत्—सचेन्मे आत्मा आरक्ष्यो भवेत्, न मया अतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां शासने आरक्षा कृता भवेत् । तस्यां च 5 वेलायामिमा गाथा अभाषत —

न आत्मसंज्ञाय वसित्व जातु
शक्यं इहा शासनि रक्ष कर्तुणा ।
महाविताना सुगतान बोधिः
प्रकाशना पश्चिमि कालि दारुणे ॥ १ ॥

10 यो आत्मसंज्ञा प्रजहित्व सर्वशः
सत्वानिमान् पुद्गलवादनिश्रितान् ।
रूपाणि शब्दांश्च रसांश्च गन्धान्
स्पृष्टव्यु वर्जेति स रक्षि शासनम् ॥ २ ॥

N 494 बुद्धान कोटीनयुतान्युपस्थिहे-
15 दन्नेन पानेन प्रसन्नचित्तः ।
छत्रैः पताकाभि दीपक्रियाभिः
कल्पान कोटी यथ गङ्गवालिकाः ॥ ३ ॥

यथैव सद्धर्म प्रलुज्यमाने
निरुध्यमाने सुगतान शासने ।
20 रात्रिंदिवं एक चरेय्य शिक्षान्
इदं ततः पुण्यु विशिष्टु भोति ॥ ४ ॥

ये दानि तेषां पुरुषर्षभाणां
सद्धर्मि लुज्यन्ति उपेक्षि भावयी ।
न तैर्जिना सत्कृत भोन्ति केचित्
25 न चो कृतं गौरवु नायकेषु ॥ ५ ॥

युष्मे भोथ सुखी स्वकार्थु कुरुथा गोपायथा आत्मनं
युष्मे भोथ इहाप्रमत्त विनये मैत्रीविहारी सदा ।
शीलं रक्षथ उज्ज्वलं अशबलं शुद्धं शुचि निर्मलं
येही रक्षितु शीलु भोति अमलं बुद्धेभि संवर्णितम् ॥ ६ ॥

१ B नीलकुण्डल्यकुञ्चित॰ for नीलकुञ्चित॰. २ AB स्थिति for वसित्व. ३ A om. from शक्यं to प्रजहित्व in st. 2. ४ B महावियूहा for महाविताना. ५ A हस्तेन पादेन for अन्नेन पानेन. ६ B च दीपमाल्यैः for दीपक्रियाभिः. ७ A उज्वकं for उज्ज्वलं.

N 495

येही सत्कृतु भोन्ति सर्वि सुगता यावन्त पूर्वे अभूत्
तेहि त्राथितु भोन्ति सर्वजनता या बोधिसंप्रस्थिता।
तेही उद्धरिता भवन्ति नरका सत्त्वा बहू पापकाः
येही रक्षितु भोन्ति शीलु अमलं बुद्धैः प्रशस्तं पुरा॥ ७॥

दानं देथ विशिष्ट धर्मरतनं क्षान्ति सदा रक्षथा-
रण्यं चाश्रयथा समाधिकुशला भावेथ चो मार्दवम्।
मा चो विग्रह सर्वथा विचरथा शिष्टां शिवां चारिकां
गच्छामो वयु राजधानि नगरं सत्त्वान त्राणार्थिकाः॥ ८॥

तस्मिन्नोतरती महामतिधरे सत्त्वाग्रसारे ऋषौ
वर्तेन्ती इमि अश्रुकाः सुकरुणं[2] पादेहि अन्ये पती।
मा ही ओतरही महामति विदु प्रेक्ष वने पादपान्
मञ्जुगन्ध[3] मनोरमान् सुरुचिरानात्मान त्राणात्मकः॥ ९॥

N 496

तेऽपी पूर्व विनायका दशबलाः शान्तेन्द्रियाः सूरताः
गत्वा काननि शैलशृङ्गशिखरे बोधाधिगम्यां वराम्।
श्रेष्ठां[1] चारिक बोधिहेतु चरितास्ते पुण्यज्ञानां वराः
तेषां शिक्षिहि कानने निवसतो मा गच्छ त्वं सुव्रत[4]॥ १०॥

गात्रं चित्रितु लक्षणैः सुरुचिरैः केशाश्च नीलास्तथा
वर्णः काञ्चनसंनिभप्रभकरो ओभासते मेदिनीम्।
ऊर्णा ते भ्रमुखान्तरे सुरुचिरा शङ्खनिकाशप्रभा
मा ते ईर्ष्यु जनित्व कायु विनिरी राजानुराजे तथा॥ ११॥

N 497

अथ खल्वानन्द सुपुष्पचन्द्रो धर्मभाणकस्तं बोधिसत्त्वगणं गाथयाभ्यभाषत-

यावन्तः पुरिमेण आसि सुगताः सर्वज्ञ क्षीणास्रवाः
सर्वे तेऽप करित्सु लोकि विमते बोधाधिगम्यां वराम्।
श्रेष्ठां चारिक बोधिहेतु चरितास्ते पुण्यज्ञानां वराः
तेषां शिक्षथ बोधिसत्त्व नियुता सत्त्वान त्राणार्थिकः॥ १२॥

सर्वे कृत्व प्रदक्षिणं ऋषिविदुं पादानि वन्दित्वना
घोरं ओश्वसतो[5] स्वनन्ति करुणं क्रन्दन्त आर्तस्वरम्।
अन्ये छिन्न प्रपात मेदिनि पती मूर्छित्व सालो यथा
नो चा ते परिवर्ति पुण्यनिचितः सत्त्वार्थकामो ऋषिः॥ १३॥

पात्रं चीवरु गृह्य प्रस्थितु ऋषी सिंहो यथा केसरी
नो चास्यो गुणदोष तत्र अभवी धर्मस्वभावे स्थितः।

1 AB श्रेष्ठां for श्रिष्ठां. 2 AB अश्रुकरुणं for सुकरुणं. 3 AB मञ्जुघोष for मञ्जुगन्ध. 4 C मा ओरहाते जवात् for मा गच्छ त्वं सुव्रत. 5 AB निश्वसत for आश्वसतो.

धने[1] काननि अस्मि लोकि वसत सत्वा अपाये पति
सोऽभूत्त[2] नगर गमी पुरवर सत्त्वान त्राणार्थिक ॥ १४ ॥

N 498 अथ खलु सुपुष्पचन्द्रो धर्मभाणको ग्रामनगरनिगमराष्ट्रराजधानीरवतरित्वा सत्त्वाना[3] धर्मं देशयति स्म। तेन पूर्वाह्णे अवतरित्वा सत्त्वाना नवनवति प्राणिकोट्य अवैवर्तिकताया स्थापिता अनुत्तराया सम्यक्संबोधौ। न च ता रत्नावती राजधानीमनुप्राप्त। सोऽनुपूर्वेण ता रत्नावतीं राजधानीमनुप्राप्त। स तस्या रत्नावत्या राजधान्यामुपसंक्रमित्वा अन्यतरस्मिन् प्लक्षसालमूले व्यहार्षीत्। स तस्या रात्र्या अत्ययेन ता रत्नावतीं राजधानीं प्राविशत्। प्रविश्य षट्त्रिंशत्प्राणिकोटीरवैवर्तिकत्वे स्थापयति बुद्धधर्मेषु। न च तावद् भक्तकृत्यमकार्षीत्। स भक्तच्छेदच्छिन्नो रत्नावत्या राजधान्या निष्क्रम्य येन भगवतो नखस्तूपस्तेनोपसंक्रम्य आस्थितक[4] एव
10 रात्रिंदिवमतिनामयति स्म। स तस्या रात्र्या अत्ययेन द्वितीये प्राग्भक्ते रत्नावतीं राजधानीं प्रविश्य त्रयोविंशतिप्राणिकोटीरवैवर्तिकबुद्धधर्मेषु प्रतिष्ठापयति स्म। न च तावद् भक्तकृत्यमकार्षीत्[5]। स
N 499 द्वितीयभक्तच्छेदच्छिन्नो रत्नावत्या राजधान्या निष्क्रम्य येन भगवतो नखस्तूपस्तेनोपसंक्रम्य उत्थितक एव रात्रिंदिवमतिनामयति स्म। स तस्या रात्र्यामतीतायां[6] त्रिरात्रभक्तच्छेदच्छिन्नो रत्नावतीं राजधानीं प्रविश्य नवनवतिप्राणिकोटीशतसहस्राण्यवैवर्तिकबुद्धधर्मेषु प्रतिष्ठापयति स्म[7]। न
15 च तावद् भक्तकृत्यमकार्षीत्। स त्रिरात्रभक्तच्छेदच्छिन्नो रत्नावत्या राजधान्या निष्क्रम्य येन भगवतो नखस्तूपस्तेनोपसंक्रम्य उत्थितक एव तृतीय रात्रिंदिवमतिनामयति स्म। स तस्या रात्र्या अत्ययेन चतुर्थे प्राग्भक्ते रत्नावतीं राजधानीं प्रविश्य नवनवतिप्राणिशतसहस्राण्यवैवर्तिकबुद्धधर्मेषु प्रतिष्ठापयति। स चतुर्दिवसभक्तच्छेदच्छिन्नो रत्नावत्या राजधान्या निष्क्रम्य येन भगवतो नखस्तूपस्तेनोपसंक्रम्य उत्थितक एव रात्रिंदिवमतिनामयति स्म। स तस्या रात्र्या अत्ययेन
20 पञ्चमे दिवसे रत्नावतीं राजधानीं प्रविश्य राज्ञोऽन्तःपुरं प्राविशत्। प्रविश्य चाशीतिं स्त्रीसहस्राण्यवैवर्तिकत्वेऽनुत्तरायां सम्यक्संबोधौ प्रतिष्ठापयति स्म। तस्माच्च नगरात्[8] सर्वसत्त्वानवै-
N 500 वर्तिकताया स्थापयति बुद्धधर्मेषु[9]। स तस्या रात्र्या अत्ययेन षष्ठे प्राग्भक्ते रत्नावतीं राजधानीं प्रविश्य सहस्रं राजपुत्राणामवैवर्तिकत्वे स्थापयति स्म अनुत्तरायां सम्यक्संबोधौ। न च तावद् भक्तस्य कृत्यं करोति स्म। स षष्ठे भक्तच्छेदच्छिन्नो रत्नावत्या राजधान्या निष्क्रम्य येन भगवतो
25 नखस्तूपस्तेनोपसंक्रम्य रात्रिंदिवमतिनामयति स्म। स तस्य रात्र्या अत्ययेन सप्तमे पुरोभक्ते रत्नावतीं राजधानीं प्रविश्याद्राक्षीच्छूरदत्तं राजानमुद्यानमभिनिष्क्रामन्तं सुवर्णमयेन रथेन रूप्यमयैः पक्षैर्भिल्लगसारचन्दनमय्या ईषया वैदूर्यमयैश्चक्रैः उच्छ्रितच्छत्रध्वज[10]समलंकृतेन[11] ईषापञ्जरवनद्धेन दूष्यपञ्जसञ्छादितेन

१ B भामे C कामे for धने २ Dutt सो भूयं against Mss ३ AB om सत्त्वानां ४ B अनुत्थितक Dutt उत्थितक for आस्थितक ५ AB कृतवान् for अकार्षीत् ६ AB रात्र्या अत्ययेन तृतीये प्राग्भुक्ते for रात्र्यामतीतायां ७ AB अवैवर्तिकत्वे स्थापयति स्म अनुत्तरायां सम्यक्संबोधौ। न च तावद्भक्तकृत्यमकार्षीत् for अवैवर्तिकबुद्धधर्मेषु प्रतिष्ठापयति ८ After नगरात्, AB add अप्रमेयानसंख्येयान् सत्त्वाननुत्तरायां सम्यक्संबोधौ प्रतिपादयति स्म। न च तावद्भक्तकृत्यं कृतवान्। स पञ्चरात्रभक्तच्छेदच्छिन्नो रत्नावत्या निष्क्रम्य येन भगवतो नखस्तूपस्तेनोपसंक्रम्योत्थितक एव रात्रिंदिवमतिनामयति स्म ९ AB om from सर्व° upto बुद्धधर्मेषु १० AB °ध्वजपताका° for °ध्वज° ११ After °कृतेन, AB add रत्नकृतविचित्रेण

यत्राष्टौ शतानि कुमारीणां रत्नसूत्रपरिगृहीतानाम्, यास्त रथं वाहयन्ति अभिरूपा प्रासादिका दर्शनीया परमया शुभ्रवर्णपुष्कलतया समन्वागता प्रीतिकार्ये औद्धिल्यकार्ये बालाना न पण्डितानाम्। चतुरशीतिक्षत्रियमहाशालकुलसहस्राणि पृष्ठत समनुबद्धान्यभूवन्। चतुरशीतिब्राह्मणमहाशाल सहस्राणि चतुरशीतिगृहपतिमहाशालसहस्राणि पृष्ठत पृष्ठतोऽनुबद्धान्यभूवन् । पञ्च च दुहितृशतानि रत्नमयीशिबिकाभिरूढा पुरतो निर्याति स्म। ता सहदर्शनेनैव तस्य 5 भिक्षोरवैवर्तिका अभूवन्ननुत्तरायां सम्यक्संबोधौ। अष्टषष्टिश्चास्य पुत्रिकाशतसहस्राणि सहदर्शनेनैव तस्य भिक्षोरवैवर्तिका अभूवन्ननुत्तरायां सम्यक्संबोधौ। स च महाजनकायो मणिकुण्डलान्यपनीय पादुकाश्चापनीय एकांसं चीवरं प्रावृत्य दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन स भिक्षु स्तेनाञ्जलिं प्रणम्य नमस्यमानः स्थितोऽभूत्। अथ खलु ता अपि कुमार्यः पूर्वके कुशलमूलै 10 संचोदिता समानास्ताभ्यः शिबिकाभ्योऽवतरित्वा एकांसं चीवरं प्रावृत्य दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन स भि स्तेनाञ्जलिं प्रणम्य गाथाभिरभ्यभाषन्त-

N 501

अवभासितमद्यैव रश्मिभिर्व समन्ततः ।
भिक्षुणा प्रविशतेन जनकायश्च चिह्नितः ॥ १५ ॥

N 502

रागदोषाः समुच्छिन्ना मोहश्च विषमीकृताः । 15
क्रोधो दोषश्च ईर्ष्या च सर्वं छिन्नं तदन्तरम् ॥ १६ ॥

न राज प्रेक्षते कश्चिन्न चैनमनुयात्यसौ ।
यो राज्ञः शूरदत्तस्य परिवार सुतादिकः ॥ १७ ॥

पूर्णमास्यां यथा चन्द्रो नक्षत्रपरिवारितः ।
एव स शोभते भिक्षू राजपुत्रपुरस्कृतः ॥ १८ ॥ 20

स्वर्णबिम्बं यथा चित्रं कुशलेभिः सुचित्रितम् ।
पुष्पितः सालराजो वा एमेव भिक्षु शोभते ॥ १९ ॥

शक्रश्च देवेन्द्र महानुभाव
सहस्रनेत्राधिपतिः पुरंदरः ।
सुमेरुमूर्ध्नि त्रिदशान ईश्वरो 25
एमेव भिक्षु प्रविशतु शोभतेऽयम् ॥ २० ॥

ब्रह्मेव मन्ये प्रतितिष्ठु ब्रह्मलोके
सुनिर्मितो वाधिपति देवपुत्र ।
सुयामु देवो यथरिव कामधातौ
एमेव भिक्षु प्रविशतु शोभतेऽयम् ॥ २१ ॥

---

१ A रयसूत्र for रत्नसूत्र २ After अवतरित्वा AB add मणिकुण्डलान्यपनीय पादुकानि चापनीय ३ C चिह्नित for चिह्नित ४ AB ईर्ष्या मान च तृष्ण च सर्वे छिन्नदनन्तरम् for the line ५ A त्रिदशेश्वरो वा for त्रिदशान ईश्वरो ६ B om st. 21 ७ A बोधिसत्व for ब्रह्मलोके

N 503 सूर्यो वा मन्ये प्रतपति अन्तरीक्षे
सहस्ररश्मिर्विधमिय अन्धकारम्।
ओभासयन्तो समु दिशता समन्ताद्
एमेव भिक्षुः प्रविशतु शोभतेऽयम्॥ २२॥
5 दानं ददित्वा सुविपुल नन्तकल्पान्
रक्षित्व शीलं अशबलु नित्यकालम्।
भावेत्व क्षान्तिमसदृश सर्वलोके
सो लक्षणेभिः परिवृतु एव शोभी॥ २३॥
जनयित्व वीर्यं अरियजनप्रशस्तं
10 सेवित्व ध्याना चतुरि अलीनचित्तः।
उत्पाद्य प्रज्ञां निहनिय क्लेशजालं
तेनैष भिक्षुः प्रतपति सर्वलोके॥ २३॥
ये बुद्धवीरा असदृश सत्त्वसाराः
समतीत शूरा विकिरिये धर्मश्रेष्ठान्।
N 504 15 येऽनागतेऽध्वे तथरिव प्रत्युत्पन्ने
तेनैष पुनो वशगानु धर्मराज्ञः॥ २५॥
मा ते अनित्यं भवतु कदाचि भिक्षो
यद्वपतेत्रं प्रतपसि सर्वलोके।
संपश्य तेजो सुरुचिर शब्दघोषो
20 राजान तेजो न तपति सुष्ठु भूयः॥ २६॥
धर्मो यथावं अधिगतु आत्मना ते
बुद्धानुज्ञातो विचरसि सर्वलोके।
N 505 एमेव सर्वे निजहिय ऋषिभावे
सर्वेऽपि यामो यथरिव एष भिक्षुः॥ २७॥
25 ते अञ्जलीयो दशनख कृत्व सर्वे
भाषित्व गाथाः क्षिपिंसु पिलन्धनानि।
सौवर्णमाला तथपि च मुक्तहारा-
नवंतसकानि तथपि च वर्णनिष्कान्॥ २८॥
राजा वै यथ चक्रवर्ति बलवान् सर्वान् विपश्यी महीं
30 पुरसंज्ञ उपस्थपेति विचरन् द्वीपानि चत्वारिमे।

१ AB अन्ये for मन्ये २ A om. from विकिरिय upto धर्मराज्ञ; B विधरिय for विकिरिय. ३ B बोधिराज्ञ for धर्मराज्ञ. ४ A om. from मा up to सुरुचिर in the third line of the stanza. ५ A निदन्धनानि for पिलन्धनानि. ६ AB बहुविध for तथपि च.

श्रेष्ठी क्षत्रिय ब्राह्मणां गृहपती ये कोट्टराजा स्वका
नो तेषामतिरेकु स्नेह जनयी सर्वेषु प्रेमं समम् ॥ २९ ॥
एवं शिक्षित धारणीनयगतो भिक्षू अयं सूरतो
बोध्यङ्गा बल इन्द्रियान् विभेजति[1] मार्गं च अष्टाङ्गिकम्।
चन्द्रो वा यथ रात्रिये प्रतपति तारागणैर्मध्यगो
सूर्यश्चो यथ मण्डलं प्रतपते[2] वैरोचनस्तेजवान् ॥ ३० ॥
सर्वान् बुद्धान्नमस्यामो दशबलान् शान्तेन्द्रियान् सूरतान्
येषां वर्णनु कश्चिदुत्सहि नरो कल्पाशतैः क्षेपितुम्।
कल्पा कोटिसहस्र भाषितु बहून् नो चेद् गुणा क्षेपितुं
नो चो वर्ण क्षिपेय लोकप्रवरे एकस्य रोमस्य हि ॥ ३१ ॥
येनो चक्र प्रवर्तितं असदृशं ज्ञानोपदं देशितं
निपुणं धर्म प्रभाषितस्य[3] चिरजं नो चास्य दृश्यं क्वचित्।
श्रमणाब्राह्मणदेवनागअसुरैर्मारैः सब्रह्मादिभि-
र्नो शक्तो गुणआर्णवः प्रकथितुं बुद्धस्य सर्वज्ञिनः ॥ ३२ ॥
वन्दामो जिनवैद्यराजमसमं यस्येदृशा औरसाः
भाषित्वा इमि गाथ सर्वि मुदिता राज्ञः कुमार्यस्तदा।
स्वर्णं काञ्चनचूर्णकाश्च प्रकिरी चैलानि च प्रस्तरी
चूडाना च मणीन् सहाररुचिरा कोटीशतामूल्यिका
तं भिक्षुं अभिछादयित्व मुदिता बोधाय संप्रस्थिताः[4] ॥ ३३ ॥

अथ खलु राज्ञः शूरदत्तस्यैतदभवत्—विप्रतिपन्नं बतेदमन्तःपुरं जनकायश्च व्युत्थितः। स च जनो मणिकुण्डलान्यपनीय एकांसं चीवरमावृत्य दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन स भिक्षुस्तेनाञ्जलिं प्रणाम्य नमस्यति स्म। स च राजा शूरदत्तस्तावत् प्रासादिकोऽभूत् तावद्दर्शनीयो न च तावदभिरूपो यावदभिरूपः स भिक्षुः। स राज्यहेतोर्लुब्धस्तोऽभूत्। तस्य च भिक्षो राजमार्गस्थस्य रूपकायपरिनिष्पत्तिं च तस्य भिक्षोर्दृष्ट्वा अतीव रोषमकार्षीत्। तस्य च भिक्षो राजमार्गस्थस्य राज्ञश्चक्षुर्भ्यां प्रविष्टः। तस्यैतदभवत्—संरक्तचित्तेनैतेन भिक्षुणा ममान्तःपुरं दृष्टम्। अक्षिभ्यां चानेन संकेतः कृतः। तस्यैतदभवत्—क इदानीमिमं भिक्षुं जीविताद् व्यपरोपयिष्यतीति। अथ राज्ञः शूरदत्तस्य पृष्ठतः पुत्रसहस्रमनुबद्धमभूत्। स तानामन्त्रयति स्म—व्यपरोपयध्वं कुमारा एतं भिक्षुं जीवितादिति ॥

---

[1] AC विजयते for विभजति. [2] AB उदयते for प्रतपते. [3] B प्रभाषितस्य for प्रभाषितस्य.

[4] After st. 33, AB add

चूडैश्चापि मणीभिर्हाररुचिरैः कोटीशतामूल्यिकैः
मन्दारैः सुगन्धनिचयैः पुष्पैस्तथा चन्दनैः (B चम्पकैः)।
पुष्पैर्दिव्यमनोरमैः फलैः प्रफुल्लैस्तथा
रत्नैश्चाप्यहता (?) प्रभासरुचिरैर्नानाप्रकारैर्वरैः ॥

अथ खलु ते कुमारा राज्ञः शूरदत्तस्य प्रतिक्रहन्ति स्म तस्य भिक्षोः कृतशः । तस्यैत-
दभवत्—पुत्रा अपि मे आज्ञा न कुर्वन्ति । एक एवाहं स्थापितः अद्वितीयः । क इदानीमिमं भिक्षुं
जीविताद्व्यवरोपयिष्यति ? अथ राज्ञः शूरदत्तस्य नन्दिको नाम वध्यघातकोऽभूत् चण्डः
N 509 साहसिको रौद्रः[1] । अथ राजा शूरदत्तस्तुष्ट उदग्रः आत्तमनाः[3] एवं चिन्तयामास — अयं नन्दिक एतं
5 भिक्षुं जीविताद्व्यवरोपयिष्यति । अथ खलु नन्दिको वध्यघातको येन राजा शूरदत्तस्तेनोपसंक्रामत्[2] ।
अथ खलु राजा शूरदत्तस्तमाह[4]—शक्ष्यसि त्वं नन्दिक एतं भिक्षुं जीविताद्व्यवरोपयितुम् ?
महान्तं तेऽभिच्छादं[5] दास्यामि । नन्दिक आह—सुष्ठु देव, यथाज्ञापयसि । अथैनं भिक्षुं
जीविताद्व्यवरोपयिष्यामि । तेन हि नन्दिक यस्येदानीं कालं मन्यसे । तीक्ष्णमसिं[6] गृहीत्वा एतं
भिक्षोर्हस्तपादं[7] छिन्द । कर्णनासां छिन्द । अनेन मे संरक्तचित्तेनान्तःपुरं प्रेक्षितम् । अतोऽस्य
10 सन्दंशेनाक्षिणी उत्पाटय । अथ नन्दिकेन वध्यघातकेन तस्यामेव वेलायां तीक्ष्णमसिं गृहीत्वा
भिक्षोर्हस्तपादांश्छित्वा अक्षिणी चोत्पाटिते[8] । ततोऽसौ[9] महान् जनकायो रुदन् क्रन्दन् परिदेवमानः
पुनरपि रत्नावतीं राजधानीं प्रविष्टः ॥

अथ खलु राजा शूरदत्तः सप्ताहस्यात्ययादुद्यानगतो न रमते न क्रीडति न परिचार-
यति । स उद्यानान्निवृत्तः सप्ताहस्यात्ययेन रत्नावतीं राजधानीं प्राविशत् । सोऽद्राक्षीत्तं भिक्षुं
N 510 15 राजमार्गे छोरितं सप्ताहमृतकं अविवर्णशरीरम् । तस्यैतदभूत्—यथायं भिक्षुरविवर्णशरीरः,
निःसंशयमेष भिक्षुरवैवर्तिको भविष्यत्यनुत्तरायां सम्यक्संबोधौ । पापं मया कर्म कृतं
महानरकसंवर्तनीयम् । क्षिप्रमेव मया महानिरये प्रतिपत्तव्यं भविष्यति । तस्यैवं चिन्तयतः
उपर्यन्तरीक्षे चतुरशीतिभिर्देवपुत्रसहस्रैरेकस्वरस्वरघोषशब्दमुदीरितम्—एवमेतन्महाराज यथा
वदसि । अवैवर्तिक एष भिक्षुरनुत्तरायां सम्यक्संबोधौ । तस्य तावद् भूयस्या मात्रया भयं च
20 त्रासं च स्तम्भितत्वं च रोमहर्षश्चोत्पन्नो विप्रतिसारश्चाभूत् । अथ राजा शूरदत्तो दुःखितो
दुर्मना विप्रतिसारी तस्यां वेलायामिमां गाथा अभाषत[10]—

राज्यं त्यजिष्ये तथपि च राजधानीं
हिरण्य सुवर्ण तथ मणिमुक्त रत्नान् ।
घातेयमात्मा स्वय शस्त्र गृह्य
25 निहीनकर्मास्मिह बालबुद्धिः ॥ ३४ ॥

सुपुष्पचन्द्रोऽयमिह भिक्षुरासीद्
द्वात्रिंशता कतचितु लक्षणेभि. ।
N 511 ओभासयन्तो प्रविशति राजधानीं
नक्षत्रराजो यथरिव पूर्णमास्याम् ॥ ३५ ॥

---

१ After रौद्रः, A adds: शूरदत्तस्य नन्दिके स्थितोऽभूत्. २ B om. from अथ upto संक्रामत्. ३ After आत्तमना A adds प्रमुदित प्रीतिसौमनस्यजात एवं चिन्तयामास. ४ AB तं नन्दिकमेवमाह for तमाह. ५ A विच्छन्दं for अभिच्छादं ६ A शस्त्र for असिं. ७ A शिरः कर्णनासाहस्तपादा for हस्तपाद. ८ After °चोत्पाटिते AB read A passase given in App. 1 (No 32) ९ AB जनकायेन देवमानन्द श्रुत्वा for ततः १० AB महाक्रन्दमकार्षीत्, एवमाह for इमां गाथा अभाषत.

अहं च हीनः प्रलुलितु कामभोगे
  नारीगणेना प्रमुदितु निष्क्रमामि ।
रथाभिरूढः परिवृतु क्षत्रियेभिः
  अयं च एती सुरभि सुनेत्र भिक्षुः ॥ ३६ ॥

तं दृष्ट्व भिक्षुं प्रमुदितु नारिसंघो
  सौवर्णमाल्यान्यसिरि प्रेमजाता ।
सर्वे गृहीत्वा दशनखु अञ्जलीयो
  गाथाभिगीतैस्तमभिस्तविंसु भिक्षुम् ॥ ३७ ॥

ते गीतशब्दाः प्रशमित सर्वि राज्ञः
  न रथाभिरूढः परिवृतु क्षत्रियेभिः ।
अयं च एती सुरभि सुनेत्रो भिक्षु-
  र्महानुभावः सुगतवरस्य पुत्रः ॥३८ ॥

मम चैव चित्तं परम निहीनु आसी-
  दीर्ष्या च क्रोधं च तत्र जनेमि मूढः ।
मुदितं विदित्व सुविपुल नारिसंघो
  आलोक्य भिक्षुं प्रविशतु राजधानिम् ॥ ३९ ॥ N 512

अतिघोररूपा अहु गिरि भाषि तत्र
  पुत्रसहस्रं भणामि तत्क्षणस्मिन् ।
गत्वान भिक्षुं प्रकुरुत खण्डखण्डा-
  न्मेषो हि मह्यं परम अमित्र घोरः ॥ ४० ॥

ते कुमार सर्वे परमसुशीलवन्तो
  स्वहितैषिचित्ता अभिरत येन भिक्षुः ।
आणत्ति देवा न करिय एवरूपा
  शोकाभिभूतो अहमपु तस्मि काले ॥ ४१ ॥ N 513

इमु भिक्षु दृष्ट्व परम सुशीलवन्तं
  मैत्र्या उपेतं पितरमिव प्रवृत्तम् ।
सुदुष्टचित्तो अवसरि घातनार्थं
  पतितो अवीचौ अहु पश्चकाले ॥ ४२ ॥

यश्चान्तिकोऽयं इह स्थितु राजमार्गे
  अतिरौद्रकर्मा दुःखकरु मानुषाणाम् ।

---

१ AB प्रेक्षन्ति *for* आलोक्य. २ C *repeats from* आलोक्य *up to* खण्डखण्डान् *in st. 40.*
After st. 39, ABT add :

चन्द्रोभासितेन चतुर्दिशता समन्ता
  चन्द्रेण वा राहुविमुक्तशोभिना ।
प्रामोदयन्ते प्रमुदितु नारिसंघा
  उमालोक्य भिक्षुं प्रविशतु राजधानिम् ॥

३ A मरि घोररूपः for अमित्र घोरः. ४ AB सुमधुर॰ for परम॰.

आणत्ति तेना मम कृत एवरूपा
  मालागुणो च अयमिह छिन्न भिक्षुः ॥ ४३ ॥
समन्तभद्रे वनवरि प्रेमणीये
  द्विजाभिकीर्णे कुसुमितमञ्जुगन्धे।
5 सो चापि अन्यः सुविपुल भिक्षुसंघो
  मात्रा विहीनो यथरिव एकपुत्रकः ॥ ४४ ॥
उत्तिष्ठ भिक्षो प्रतिवस काननस्मिन्
  कृतो ते अर्थः सुविपुल मानुषाणाम्।
N 514 यद्राजधानीमिमु तद आगतोऽसि
10  एष्यन्ति भिक्षु सुकरुण क्रन्दमानाः ॥ ४५ ॥
पुष्पध्वजानि इम कृत दक्षिणेना
  वामेन अन्ये सुरुचिर दर्शनीया.।
प्रज्ञप्त मार्गः स्फुट कृत चीवरेभि
  उत्तिष्ठ भिक्षो प्रतिभण धर्म श्रेष्ठम् ॥ ४६ ॥
15 चिरप्रनिष्टो तुहु इह राजधान्या-
  मेष्यन्ति भिक्षु सुकरुणु क्रन्दमानाः।
मा अन्तरायो भव सिय जीवितस्य
  प्रलोपकाले जिनवरशासनस्मिन् ॥ ४७ ॥
N 515 यथैव कश्चित् पुरुष महानुभावो
20  दिक्षु विदिक्षु सततु विघुष्टशब्दः।
महाप्रपातं प्रपतति वसुंधराया
  सर्वाभिभूय त्रिभवमिमं समन्तात् ॥ ४८ ॥
एमेव भिक्षुरिह पतितो धरण्या
  सुरूपरूपो भूषितु लक्षणैर्वरैः।
25 अदोषदुष्टो मय कृत पापबुद्धिना
  सुपुण्यचन्द्रो तिष्ठति खण्डखण्डः ॥ ४९ ॥
भिक्षु इहो दु.खहत सर्वे एव
  अप्रीतिजातास्तथपि च शल्यचित्ताः।

---

१ AB शल्य सर्वे for सर्व एव. २ in C, the first two lines of sts 49 and 50 have the following version :

एमेव ते शल्यदु खहत सर्वमेते
  प्रीतिश्च जाता अतिरिव शल्यता च।
तस्यापि श्लोको श्रुणिय निरीक्षतो वा
  उत्पन्नत्रास भविष्यति सर्वलोक ॥

In AB the last two lines seem to be preserved. T does not contain these.

N 516

मेष्यन्ति क्षिप्रं दृष्टिमु धर्मभाणकं
सुपुष्पचन्द्रं हतु पतितं पृथिव्याम् ॥ ५० ॥

सुपुष्पचन्द्रो यथरिव शैलराजो
द्वात्रिंशतीभिः कचचितु लक्षणेभिः ।
मालागुणेव प्रमदगणेन गृह्य
क्षणे निकीर्णं कृतु खण्डखण्डम् ॥ ५१ ॥ 5

कृतस्मि कर्म परम सुघोररूपम्
अवीचि गमिष्ये यमविषयमनाथो ।
बुद्धान मेष्ये परम सुदूरदूरे
स भिक्षुः कृतु इह खण्डखण्डम्[1] ॥ ५२ ॥ 10

न पुत्र त्राण न पि मम ज्ञातिसंघो
नो चास्य मान्या न च भटपादमल्लिकाः ।
मेष्यन्ति त्राणं नरकगतस्य मह्यं
स्वयं करित्व परम निहीनकर्म ॥ ५३ ॥ 15

N 517

येऽतीत बुद्धास्तथपि च ये अनागता-
स्तिष्ठन्ति ये चो दशसु दिशासु केचित् ।
ते सार्थवाहा दशबल निष्क्लेशाः
शरणं उपैमी वज्रघन आत्मभावान्[2][3] ॥५४ ॥

दृष्ट्वान भिक्षुं कृतु इह खण्डखण्डं 20
क्रोशः प्रमुक्तः सुकरुण देवताभिः ।
गल्यान ते आरोचयि भिक्षुसंघे
सुपुष्पचन्द्रो हतु इह राज्यधान्याम् ॥ ५५ ॥

योऽसौ विदु पण्डितु धर्मभाणको
महानुभावो दिशिविदिशासु घुष्टः । 25
सो बोधिसत्त्वो प्रतिष्ठितु धारणीये
सुपुष्पचन्द्रो हतु इह राजधान्याम् ॥ ५६ ॥

यो देति दानं विविधमनन्तकल्पान्
यो शील रक्षत्यशबलमसंप्रवेधिम ।
यो भावि क्षान्तीमसदृश सर्वलोके 30
सुपुष्पचन्द्रो हतु इह राजधान्याम् ॥ ५७ ॥

---

१ AB इह राजधान्याम् for खण्डखण्डम्  २ A शरणं उपेमो वज्रिन घनात्मभावो for the line.
३ C विप्रमुक्त for आत्मभावान्



N 518

यो[1] वीर्यवन्तः सततमनन्तकल्पान्
यो ध्यानु ध्यायी चतुरि अलीनचित्तः।
यः प्रज्ञ भावेति क्लिशघातकीं
सुपुष्पचन्द्रो हतु इह राजधानिये ॥ ५८ ॥

5 यः कायप्रेमं विजहित्व सर्वशोऽ-
नपेक्ष भूत्वा तथ जीवितातो।
समन्तभद्राद्वनतोतरित्वा
सुपुष्पचन्द्रो हतु इह राजधानिये[2] ॥ ५९ ॥[3]
ते राजधानीं प्रविशित्व सूरता
10 आर्तस्वरं क्रन्दिषु घोररूपम्।
दृष्ट्वान भिक्षुं हतु इह खण्डखण्डं
मूर्च्छित्व सर्वे प्रपतित ते धरण्याम् ॥ ६० ॥
राजान तं सो अवचिषु भिक्षुसंघो
किमापराद्धं तव देव भिक्षुणा।

N 519

अच्छिद्रशीलेन सुसंवृतेन
यः पूर्वजातिं स्मरते अचिन्तियाम् ॥ ६१ ॥
एषो वशी धारणिज्ञानपारगो
एष प्रजानातिह शून्य संस्कृतम्।
एषोऽनिमित्तं जगतो निर्दर्शयी[4]
20 प्रणिधानसंज्ञां इति[5] सर्व वर्जयी ॥ ६२ ॥
एषो मुञ्चि मनोज्ञ घोष रुचिरं शान्तेन्द्रियः सूरतो
एषो पूर्वनिवासपारमिगतो लोकस्य[6] अभ्युद्गतः।
एषो बुद्ध स्वयंभु ज्ञानवृषभो लोकस्य चित्रीकृतः
शुद्धा चक्षुष प्रेक्षिषु वितिमिरो अत्यर्थ-मैत्री-कृपः ॥ ६३ ॥

N 520

25 कामा हीन जघन्य दुःखजननाः स्वर्गस्य निर्नाशकाः
कामान् सेवतु मोन्ति श्रोत्रविकलाः[7] प्रज्ञाविहीना नराः।
कामान् सेवतु अन्धु भोति मनुजो मातापि घातयी
कामान् सेवतु शीलवन्तु वधयी तस्माद्विवर्जेन्नरो ॥ ६४ ॥

---

१ Before यो, AB add यो सो विदू पण्डितु धर्मभाणको. २ A सुपुष्पचन्द्रं वधितमनापराधिं for the line. ३ After st. 59, B adds :

आक्रन्द श्रुत्वा सकरुण देवतानां ते भिक्षु सर्वे परमदुःखाभिभूता।
द्रष्टुं समग्रा पुन पुरि प्रविष्ट सुपुष्पचन्द्रं वधितमनापराधिम् ॥

४ AB अस्य देशयी for निर्दर्शयी. ५ AB इमु for इति. ६ AB लोकेन for लोकस्य. ७ B om. from श्रोत्र upto सेवतु in the next line.

कामान् सेवतु राज पार्थिववरा वर्जेत्व ऋद्धिमिमां
घोरान् गच्छति कर्कशान् दुखकरान्नरकान् भयानन्तकान् ।
पापं कर्म करोति ईदृश विदुं भिक्षुं वधेती सदा
तस्मात् पापु विवर्जितव्यु विविधं यो इच्छि बोधिं शिवाम् ॥ ६५ ॥

5

रूपाणि शब्दान् रस तथ गन्ध श्रेष्ठान्
स्प्रष्टव्यधर्मान् त्यजति अलीनचित्तः ।
कार्यं विदित्व यथरिव माय तुच्छं
चक्षुं च श्रोत्रं तथरिव घ्राण जिह्वम् ॥ ६६ ॥

N 521

10

दाने शिक्षितु शीलि अप्रतिसमः क्षान्ति च वीर्यं तथा
ध्यानं सेवतु प्रज्ञपारमिगतः सत्त्वान अर्थंकरः ।
लोकः सर्वु सदेवकः समनुजः प्रेक्षन्ति मैत्र्या जिनं
तेनो चक्षु महान्धकारगहने बुध्यन्ति बोधिं शिवाम् ॥ ६७ ॥

हस्तीअश्वरथांस्त्यजन्ति मुदिता अट्टालमञ्चांस्तथा
शिबिकां दोलिभद्रयुग्ययानवृषभान् ग्रामाणि राष्ट्राणि च ।
नगरं राज्य त्यजित्व[१] स्वर्णस्फटिकां रूप्यं प्रवालांस्तथा
भार्याप्रियपुत्रधीतसशिरास्त्यजित्वा[२] बोधिप्रस्थिताः ॥ ६८ ॥

15 N 522

पूजां चो अतुलां करोन्ति मुदिताः पुष्पेभि गन्धेभि चो
गृह्य च्छत्रध्वजा पताक विविधा संगीतिभाण्डानि च ।
नो चापी अभिनन्दिषु भवगतिं ज्ञात्वान शून्यान् भवान्
तेनो लक्षणचित्रिता दशबला भासन्ति सर्वा दिशः ॥ ६९ ॥

20

न कामधातौ न च रूपधाता-
वारूप्यधातौ च न ते निविष्टाः ।
त्रैधातुकं नाभिनिविष्टधर्मा
ये बोधिसत्त्वाः प्रतिष्ठितु धारणीये ॥ ७० ॥

25

नो आत्मसंज्ञा न च पुन सत्त्वसंज्ञा
नो जीवसंज्ञा पुद्गलसंज्ञ नापि ।
नित्यं चरन्ता अशबलु ब्रह्मचर्यं
ये बोधिसत्त्वाः प्रतिष्ठितु धारणीये ॥ ७१ ॥

N 523

न भावसंज्ञा न च पुनरभावसंज्ञा
न क्षेमसंज्ञा न पुनरक्षेमसंज्ञा ।

१ AB शिक्षित्व for शिक्षितु. २ AB त्यजन्ति for त्यजित्व. ३ A त्यजि for त्यजित्वा.

नो सौख्यसंज्ञा न पुनरसौख्यसंज्ञा
ये बोधिसत्त्वाः प्रतिष्ठितु धारणीये ॥ ७२ ॥
नो अस्तिसंज्ञा न पुनर्नास्तिसंज्ञा
नो इस्त्रिसंज्ञा न पुनः पुरुषसंज्ञा ।
5 न ग्रामसंज्ञा न च नगरेषु संज्ञा
नो राष्ट्रसंज्ञा न पि निगमेषु संज्ञा ॥ ७३ ॥
नो रागसंज्ञा न पुन विरागसंज्ञा
नो दोषसंज्ञा न पुनरदोषसंज्ञा ।
नो मोहसंज्ञा न पुनरमोहसंज्ञा
10 ये बोधिसत्त्वाः प्रतिष्ठितु धारणीये[3] ॥ ७४ ॥
नो इन्द्रियेभिर्न पुन ते क्लेशभि-
र्बोध्यङ्गध्याने न च पुन ते निविष्टाः ।
N 524 त्रैधातुके ते प्रविजहि दोष सर्वे
ये बोधिसत्त्वाः प्रतिष्ठितु धारणीये ॥ ७५ ॥
15 नो रागरक्ता न च पुन दोषदुष्टा
नो मोहमूढा अशठ भवन्ति नित्यम् ।
दृष्ट्वा च बुद्धा दशबल सत्करोन्ति
नो चापि स्वर्गं मतिधर प्रार्थयन्ति ॥ ७६ ॥
तेषां श्रुत्वा परत विशिष्टधर्मं
20 नो भूय तस्मिन् भवति कदाचि काङ्क्षा ।
तैलस्य पात्रं यथरिव अच्छ शुद्धं
छेदाच्छेदं परमत तेमि ज्ञातम् ॥ ७७ ॥
N 525 स्नेहं कुर्वंतु जायते अनुनयः सोऽपी किलेशो महान्
दोषं कुर्वंतु जायतेऽस्य प्रतिघो वैरं भयं पापकम् ।
25 द्वावेतौ विजहित्व मतिधरा बोधाय ये प्रस्थिताः
ते भोन्तीह नरर्षभा दशबला लोके समभ्युद्गताः ॥ ७८ ॥
अध्यात्मं प्रजहित्व बाह्यमपि चो धर्मस्वभावे स्थिताः
शीलस्कन्धु विशोधितो अशबलो अखण्ड अच्छिद्रितः ।

---

१ AB संख्य॰ for सौख्य. २ After संज्ञा, ABT read ये बोधिसत्त्वाः प्रतिष्ठितु धारणीये.
३ After st. 74, ABT add:

न मानसंज्ञा न पुनरमानसंज्ञा नो विद्यसंज्ञा न पुनरविद्यसंज्ञा ।
नो दृष्टिसंज्ञा न पुनरदृष्टिसंज्ञा ये बोधिसत्त्वाः प्रतिष्ठितु धारणीये ॥

४ A प्रजहित्व for प्रविजहि.

नो वा तेषु कदाचि शील शबलं नो चापि कल्माषता
द्वावेतौ परिवर्जिया मतिधरा बुध्यन्ति बोधिं शिवाम् ॥ ७९ ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत– ‖ 526

अहं स पूर्वे चरमाणु चारिकां
राजा अभूवं तद शूरदत्तः । 5
रत्नावती नाम स राजधानी
उद्यानभूमिर्यतु निष्क्रमामि ॥ ८० ॥
रथाभिरूढस्तद दृष्ट्व भिक्षुं
समन्तप्रासादिकु दर्शनीयम् ।
द्वात्रिंशता कवचितु लक्षणेभि- 10
रोभासयन्तं दश दिशता समन्तात् ॥ ८१ ॥
सुपुष्पचन्द्रो दिशता सुविश्रुतो N 527
हितानुकम्पी करुणाविहारी ।
सर्वानुकम्पी नगरं प्रविष्टः
शिरीय तेजेन च शोभमानः ॥ ८२ ॥ 15
अहं च रूपेण न तादृशोऽभवं
मात्सर्यमुत्पन्नु सुभैरवं मे ।
कामेषु गृद्धो ग्रथितश्च राज्ये
मा एष राज्यान्मम च्यावयेत ॥ ८३ ॥
पुत्राण संपूर्ण सहस्र मह्यं
रथेषु रूढा अनुयान्ति पृष्ठतः ।
विचित्रमुकुटाभरणा विभूषिता
यथ देवपुत्रास्त्रिदशेन्द्र यान्ति ॥ ८४ ॥
दुहितॄण तस्मिन् शत पञ्च मह्यं
मणिपादुकारूढ सुदर्शनीयाः । 25
आबद्धमुकुटाभरणा विभूषिता-
स्ते हेमजाले रथु ते वहन्ति ॥ ८५ ॥
स्त्रीणां सहस्राणि अशीति मह्यं
प्रासादिकाः सर्व सुदर्शनीयाः ।

---

१ B द्वावस्तौ for द्वावेतौ. २ After st. 79, ABT add a passage given in App. I (No 33). ३ For इमा गाथा अभाषत, AB substitute; आयुष्मते आनन्दाय इदमेव पूर्वयोगकथानिर्देशं भूयस्या मात्रया गाथागीतेन विस्तरेण प्रकाशयति स्म. ४ A सत्त्वे हितार्थं fo सत्त्वानुकम्पी. ५ AB रथाभिरूढा for रथाभु॰. ६ B मुक्ता for मुकुटा. ७ A om. from आबद्ध up to सुदर्शनीयाः in st 86.

N 528 रथाधिरूढाः समुदीक्ष्य भिक्षुं
प्रासादिकं मेरुमिवोद्गतश्रियम् ॥ ८६ ॥

दृष्ट्वा च तासां पितृसंज्ञ जाता
उत्पादितं चित्त वराग्रबोधये ।
5 समादयित्वा तद ब्रह्मचर्यं
क्षिपिंसु तानाभरणान् मनोरमान् ॥ ८७ ॥

ईर्ष्या ममोत्पन्न अभूपि तत्क्षणं
व्यापाददोषश्च खिलं च दारुणम् ।
ऐश्वर्यमत्तश्च वदामि पुत्रान्
10 घातेय भिक्षुं स्थितु यः पुरस्तात् ॥ ८८ ॥

श्रुत्वाथ ते मह्य कुमार वाक्यं
सुदुःखिता दुर्मनसो अभूवन् ।
मा एव प्रव्याहर तात वाचं
न घातयामो वय भिक्षुमीदृशम् ॥ ८९ ॥

15 यदीह्यमङ्गातु शरीर छिद्येत्
कल्पान कोट्यो यथ गङ्गवालुकाः ।
न त्वेव भिक्षुं वय हिंसयेम
तथाहि बोधाय उत्पन्नु चित्तम् ॥ ९० ॥

N 529 श्रुत्वाथ राजा तद पुत्रवाक्यं
20 भृत्यं भणी रोषितु वध्यघातकम् ।
आनेय शीघ्रं इमु भिक्षु घातयी
स्थितु यः पुरस्तापि अन्तःपुरस्य ॥ ९१ ॥

अथागमी पश्चि स वध्यघातको
स रौद्रचित्तो य सु नन्दिनामा ।
25 असिं गृहीत्वान स तैलपायितं
येनो कृतो भिक्षुण अङ्गखण्डः ॥ ९२ ॥

कृत्वा त्वकर्मेति सुघोररूपं
निर्यातु उद्यानु गता क्षणेन ।

---

१ AB यथङ्गसं [illegible] for यदङ्गमङ्गातु २ AB यश्च for पश्चि, ३ Dutt तैलपाई for तैलपायित-
४ After क्षणेन in st. 93, ABT add:

न तस्य किंनाश्पि अङ्गमङ्ग रक्त स्रवी रश्मिसहस्र निश्चरी।
श्रीस्वस्तिकमध्यकतु खण्डच्छेदेष्वन्तर्गता अक्षण तस्य काये॥

न तस्य क्रीडा च रती च जायते
स्मरित्व भिक्षुं तद पुष्पचन्द्रम् ॥ ९३ ॥

स शीघ्रशीघ्रं त्वरमाणरूपः
ततः प्रविष्टः स्वकु राजधानीम्।
रथाभिरूढो गतु तं प्रदेशं
यस्मिन् कृतो भिक्षु स अष्टखण्डम् ॥ ९४ ॥

अश्रौषि सो घोषमथान्तरीक्षाद्
बहून देवानयुतान क्रन्दताम्।
कलिराज पापं सुमहु त्वया कृतं
च्युतो गमिष्यस्यसुखं अवीचिम् ॥ ९५ ॥

श्रुत्वान राजा मरुतान घोषं
सुदुःखितो दुर्मनु त्रस्तचित्तः।
बहू मया दारुण पापकं कृतं
येनो मया घातितु पुष्पचन्द्रः ॥ ९६ ॥

यः पुत्रु बुद्धान नरर्षभाणा
अनन्तज्ञानीन तथागतानाम्।
गुप्तेन्द्रियः सूरतु शान्तमानसः
सोऽपी मया घातितु कामकारणात् ॥ ९७ ॥

यो धर्मु धारेति तथागताना
सद्धर्मकोशे क्षयि वर्तमाने।
ज्ञानप्रदीपं करि सर्वलोके
कस्मै स मे घातितु कामकारणात् ॥ ९८ ॥

यो धर्म प्रत्याहरती प्रजानां
गम्भीर शान्तं निपुणं सुदुर्दृशम्।
यो बोधिमण्डस्य वरस्य देशकः
सोऽयं मया घातितु कामकारणात् ॥ ९९ ॥

यो धर्मकोशंधरु नायकाना-
मन्धस्य लोकस्य प्रदीपभूतः।

---

१ A क्रीडासु जायते मन- for क्रीडा च रती च जायते. २ B om. from रथाभिरूढो upto देवान् in st. 95. ३ C मनुजान for मरुतान. ४ B करुणात्मलोके for करि सर्वलोके. ५ Dutt कस्मा against Mss. ६ After st. 98, ABT add.
यो वैद्यराजो इह सर्वलोके चिकित्सको सत्त्व सदा गिलानका।
विरेचनस्यो अमृतस्य दायको भिक्षुर्मया घातितु कामकारणात् ॥

यो धारणी धारयि सूत्रराजं
स किं मया घातितु कामकारणात् ॥ १०० ॥

असंक्लिष्ट सुविशुद्धज्ञानी
शान्त प्रशान्त सतत समाहित ।
5 कामान्धभूतेन मयाद्य घातितो
येनातिकष्ट निरय गमिष्ये ॥ १०१ ॥

येऽतीत बुद्धाप्यथ ये अनागता
ये चापि तिष्ठन्ति नरोत्तमा जिना ।
N 532 अनन्तवर्णान् गुणसागरोपमान्
10 उपैमि सर्वान् शरण कृताञ्जलि ॥ १०२ ॥

N 533 घोरान् गमिष्ये निरयाश्च्युतस्य[1]
त्रातो[2] न तत्र प्रतिविद्यते मम ।
कर्म[3] ह्यनिष्ट हि कृत मयाद्य
येद्[4] घातितोऽद्य मय धर्मभाणक ॥ १०३ ॥

15 धिक् पापचित्त व्यसनस्य कर्तृ
धिग् राजभाव मदगर्वितानाम् ।
एक प्रयास्यामि विहाय सर्वं
सार न मे किंचिदितो गृहीतम् ॥ १०४ ॥

विशुद्धधर्मो गत[5]दोषमोह
20 प्रियंवद कारुणिको जितात्मा ।
अदूषक सर्वजनैकबन्धु
कस्माद्धतो मे वरपुष्पचन्द्र ॥ १०५ ॥

हा सुव्रता क्षान्तितपोधनाढ्या
हा रूपदाक्षिण्यगुणैरुपेता ।
N 534 25 हा निष्कुहा श्रीघन निष्प्रपञ्चा
कुह प्रयातोऽसि विहाय मा त्वम्[6] ॥ १०६ ॥

N 535 अथात्रगच्छामि महर्षिवाक्य
N 536 कामा ह्यनित्या वधका प्रजानाम् ।
N 537 मनोज्वरा[7] दुर्गतिहेतवश्च
30 तस्मात् प्रहास्ये[8] एत कामचर्याम् ॥ १०७ ॥

---

१ After st 102, ABT add a passage given in App I (No 34) २ AB त्रातार for त्राता [illegible] ३ ABT पाप for कर्म ४ AB यद् घातितो मे वरधर्मभाणक for the line ५ ABT हतराग्दोष for गतदोषमोह ६ After st 106 ABT add a passage given in App I (No 35) ७ AB मनोजला for °ज्वरा ८ B प्रभोत्स्ये, C प्रभाष्ये for प्रहास्ये

पात्स्ये घोरमहं ह्यवीचिनिरये त्राणं न मे विद्यते
　पापं कर्म कृतं ह्यनिष्टमसुखं भिक्षुर्मया घातितः ।
मुक्त्वा राज्य हु ब्रह्मचर्यपरमः पूजां करिष्ये वरां
　पुष्पैर्गन्धविलेपनैः सुरुचिरैः स्तूपं करिष्याम्यहम् ॥ १०८ ॥
पुत्राश्चो दुहितॄः स्त्रियो गृहपती ये चा अमात्या मम　　5
　श्रेष्ठी नैगम क्षत्रिया बहुविधाः सर्वेप भाषाम्यहम् ।
अगरुं पद्मकु चन्दनं सुरुचिरं गन्धाश्च ये शोभनाः
　शीघ्रं कुर्वथ गन्धुगर्भशिबिकां यद्भिक्षु ध्मापीयतु ॥ १०९ ॥
श्रुत्वा पार्थिववाक्य सर्वनगरं गन्धां हरित्वा वरां
　चितिकें[1] कृत्व मनोज्ञगन्ध रुचिरामारोप्य भिक्षुं तहिम् ।　　10
अगरुं पद्मकु[2] चन्दनं सतगरं सूक्ष्मां तथा पाटलां　　N 538
　पुष्पैर्माल्यविलेपनेभि रुचिरैस्तैलेन प्रज्वालयी ॥ ११० ॥
ध्याप्यां तस्य कृत्य शरीरमभवद् या भाषिता भिक्षुभि-
　स्तेषां स्तूपु करित्व राज अवची पूजास्य कामाम्यहम् ।
पुष्पं माल्य विलेपनं च प्रक्षिप्य छत्रान् पताकां ध्वजा-　　15
　स्तस्मिंस्तूर्यसहस्रकोटिनयुतां वादापयी पार्थिवः ॥ १११ ॥
त्रैकाल्यं दिवसे व्रजी महिपति भिक्षुस्य स्तूपं तदा
　त्रिष्यप्यध्वसु देशयी पुरिमकं यत्किंचि पापं कृतम् ।
वर्षा कोटिसहस्र पञ्चनवतिं तं क्षेपयी दुष्कृतं
　शीलं पश्चि अखण्ड रक्षितु वरं शुद्धं शुची निर्मलम् ॥ ११२ ॥　　20
वर्षा कोटिसहस्र पञ्चनवतिं पोषी तदा पोषधं
　भिन्ने स्नो तद आत्मभावि पतितो घोरामवीचिं पुनः ।
कृत्वा निर्व्रण वर्णा वेदयि दुःखं कर्मनिदानं बहु
　बुद्धा कोटिसहस्र पञ्चनवतिं वीरागिता ये मया ॥ ११३ ॥
वर्षा कोटिसहस्र पञ्चनवती अन्धोऽक्ष्मास तदा　　25　N 539
　द्वाषष्टी पि च कल्प कोटिनयुता नेत्रा मि भिन्ना पुरा ।
नैका कल्पसहस्र कोटिनयुतामुत्पाटय चक्षुर्हतं
　हस्ता छिन्न अनन्तकल्पनयुतान् पादाश्च कर्णाः शिराः ॥ ११४ ॥
मानुष्ये सति कल्पकोटिनयुतानन्यासु या जातिषु
　दुःखा वेदन वेदयामि च चिरं संसारदुःखार्दितः ।　　30
कृत्वा पापकु कर्म दुःखनुभवी संसारमाणश्चिरं
　तस्मात् पापु न कुर्यु भिक्षि नियते यो बोधिमिच्छेच्छिवाम् ॥ ११५ ॥

---

१ AB त्रिचितं for चितिकें　२ ABT पद्मक for पद्मकु.

देशेत्व कर्म पुरिमकु राजश्रेष्ठो
नाशी विमुच्यी पुरिमकु दुष्कृतातः[1] ।
कृत्वा च कर्म पुरिमकु घोररूपं
स च च्यविच्च[2] गच्छेन्निरयमवीचि घोरम् ॥ ११६ ॥

5 हस्ता विच्छिन्नास्तथपि च पाद कर्ण
नासा विच्छिन्ना बहुविध नन्तकल्पान् ।
N 540 नेत्रा च मह्यं बलशो हृता क्षिपित्वा
उत्क्षिप्त दण्डैर्विचरतु चारिकायाम् ॥ ११७ ॥[3]

त्यक्त्वा स्वकाये शिर कर बोधिहेतोः
10 पुत्रश्च दाराश्च्यन तथात्ममांसम् ।
हस्तांश्च पादान् परित्यजि हृष्टचित्तो
नो च क्षपेसी पुरिमकु पापकर्म ॥ ११८ ॥

राजा अभूवं तद अहु शूरदत्तो
ते पुत्र मह्यं चारिमक धर्मपालाः ।
15 पद्मोत्तरोऽयं आसि सुपुष्पचन्द्रो
वर्धनन्दि आसीद्दशबलु शान्तिराजः[4] ॥ ११९ ॥[5]

N 541 सो नारिसंघो सुविपुल क्षत्रियाश्चो
गृहपती ये बलपति ये चमात्याः ।
श्रेष्ठी तथैव नैगम कोट्टराजा
20 सर्वेऽप्यभूवी दशबल निष्क्लेशाः ॥ १२० ॥[6]

कुमार एवाचरितमनन्तकल्पं[7]
दृष्टान बुद्धान् धुतगुण निष्क्लेशाः ।
ते ते मि दुश्चा तद अनुभूतपूर्वा
चरन्तु[8] श्रेष्ठा इम बोधिचर्याम् ॥ १२१ ॥

यो बोधिसत्त्व प्रतिष्ठित धारणीये
मैत्राविहारी अचेल्ठितु अप्रकम्पी[9] ।

---

[1] C दस्तृतात. for दुष्कृतात . [2] C चवेत्व for च्यविच्च. [3] After st. 118, ABT read sts. 121-123 below. [4] ABT यो नन्दको आसि स शान्तिराजः for the line. [5] After st. 119, ABT add.

तथागतोऽभूद् द्विपदानमुत्तमो त्रिलोकशूरो जगदेकबान्धवः ।
कृत्वा च अर्थं विपुलं प्रजानां परिनिर्वृतो दीपु यथैव नायकः ।

[6] ABT read sts 121-23 after st. 118 ABT आनन्द एवं चरत अनन्तकल्पान् for the line. [7] ABT शिक्षित अप्रमेयान्, [8] ABT चरमाणु for चरन्तु [9] ABT अचलु सदा प्रकम्पी for अचल्ठितु अप्रकम्पी.

नासौ कदाचिद् व्रजति अपायभूमिं
पूजेत्व बुद्धान् धुतगुण निष्क्लेशान् ॥ १२२ ॥

यो इच्छि बुद्धो भवेयमिह धर्मस्वामी
द्वात्रिंशतीभिः कर्तचित्तु लक्षणेभिः।
सो शीलरक्षी अनावल आर्जवेधा 5
देशेति धर्मं प्रनिहितु धारणीये ॥ १२३ ॥

इति श्रीसमाधिराजे सुपुष्पचन्द्रपरिवर्तः पञ्चत्रिंशतितमः ॥ ३५ ॥

---

१ ABT भूतज देवदेवान् for धुतगुण निष्क्लेशान्. २ ABT भविष्ये for भवेयमिह. ३ ABT सज्जिता for कर्तचित्तु. ४ ABT ध्यामार्दि for आर्जवेधा.

# ३६

## शीलस्कन्धनिर्देशपरिवर्तः ।

N 543 तस्मात्तर्हि कुमार य आकाङ्क्षेद्बोधिसत्त्वो महासत्त्व किमित्यह सुखमनुत्तरा सम्यक्सबोधिमभिसबुध्येयमिति, तेन कुमार बोधिसत्त्वेन महासत्त्वेन शीलस्कन्धे सुप्रतिष्ठितेन भवितव्यम्, सर्वबोधिसत्त्वेषु च शास्तृप्रेमसज्ञा उपस्थापयितव्या ॥

अथ खलु भगवास्तस्या वेलायामिमा गाथा अभाषत–

5 य शीलस्कन्धे प्रतिष्ठितु बोधिसत्त्वो
हितैषिचित्तो विचरति चारिकायाम् ।
क्षिप्र स गत्वा अमितिबुद्धक्षेत्र
क्षान्ति लभित्वा भविष्यति धर्मराज ॥ १ ॥

N 544 तस्मात् सप्रग्रा भवथ अदुष्टचित्ता
10 सर्वे च भोगा सतत मनापकारी ।
दृष्ट्वा च बुद्धान् शिरिघन अप्रमेयान्
बोधिं स्पृशित्वा भविष्यथ धर्मस्वामी ॥ २ ॥

तस्माच्छृणित्वा इम वर आनुशसान्
दृष्ट्वा च भिक्षून् परम सुशीलवन्ता ।
15 नि शाठियेनो विदु सद सेवितव्या
समाधिलाभा भविष्यथ नोचिरेण ॥ ३ ॥

सचेन्निधानापरिमिताप्रमाण
पूर्णा भवेयु मणिरतनेभि सर्वे ।
तथैव भूयो रतनवराण पूर्णा
20 क्षेत्रा भवेयुर्वालिकगङ्गतुल्या ॥ ४ ॥

दानाधिमुक्तो भविय स बोधिसत्त्व
एकैक रात्रिंदिवमिह दानु दद्यात् ।
N 545 एव ददन् सो बहुविध कल्पकोटी
नो विष्ठित स्याद् वालिक गङ्गतुल्या ॥ ५ ॥

25 यश्चो समाधि इममिह बोधिसत्त्वो
श्रुत्वान धारेत सुगतवराण गर्भम् ।
य पुण्यस्कन्धो भवति गृहीतु तेनो
तत् सर्वदान कलमपि नानुभोति ॥ ६ ॥

---

१ Before तस्मात्, ABT insert तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म २ BT insert after महासत्त्वेन and A after उपस्थापयितव्या, a passage given in App I ( No-36 ) ३ AB समभि for सर्वे . ४ B धर्मम् for गजम

एषो वरो अनुपम पुण्यस्कन्धो
　ज्ञानस्य कोशे अपरिमिताकरोपम ।
श्रे[2]ष्ठो नरो यो इमु आनुलोमिकं
　धारेय्य अग्रं इमु विरजं समाधिम् ॥ ७ ॥
धारेय्य एत विरज समाधि शान्त　　5
　महाधनो भवति स बोधिसत्त्वः ।
म[3]हासमुद्रो बहुविधरत्नस्य आकरो
　न तस्य पुण्यस्य प्रमाणमस्ति ॥ ८ ॥
येहि धर्मेहि अचिन्तियेहि　　N 546
　सर्वै[4]र्हितो युज्यति बोधिसत्त्वः ।　　10
न तस्य बोधाय कदाचि संशयो
　य उद्दिशेयाति इमं समाधिम् ॥९॥
संस्थाप्य लोकाचरियं विनायकं
　बुद्धं महाकारुणिकं स्वयंभुवम् ।
यः पुण्यस्कन्धेन वरेणुपेतो　　15
　अचिन्तियो यस्य प्रमाणु नास्ति ॥ १० ॥
नै[5] उत्तरो तस्य च सत्त्व कश्चित्
　महासहस्राय कदाचि विद्यते ।
यः पुण्यस्कन्धेन समो भवेत
　ज्ञानेन वासादृशाचिन्तियेन ॥ ११ ॥　　20
अन्यत्र यः श्रुत्व समाधिमेतं
　धारेय्य वाचेय्य पर्यापुणेय्या ।
पर्येषमाणोऽतु[6]ल बुद्धबोधिं　　N 547
　न तस्य ज्ञानेन समो भवेत ॥ १२ ॥
सचेत् कुमारा सिय अयु धर्मरूप　　25
　यः पुण्यस्कन्धो उपचितु तेन भोति ।
धारे[7]तु वाचेतु इमं समाधिं
　न सो विचे[8]र्या इह पृथुलोकधातुषु ॥१३॥
तस्मात् कुमारेह य बोधिसत्त्वो
　आकाङ्क्षते पूजितु सर्वबुद्धान् ।　　30

---

१ C बुद्धो for कोश. २ C श्रेष्ठवरोयं चह आनुलोमिक यो for the line. ३ C महासमुद्रो च शतस्य आगमो for the line. ४ A युक्तो, C युक्तहितो for सर्वैर्हितो. ५ C अनन्तर् for न उत्तरो. ६ AB अतुलिय for अतुल. ७ AB धारेत्व वाचेत्व for धारेतु वाचेतु ८ AB समेय्या for विचेर्या

अतीत उत्पन्न तथागतांश्च
धारेतु वाचेतु इमं समाधिम् ॥ १४ ॥

एषा हि सा बोधि तथागतानां
श्रद्देहि मह्यं वचनं कुमाराः ।
5 न भाषते वाचमृषां तथागतो
न हीदृशाः सत्त्व मृषां वदन्ति ॥ १५ ॥

N 548 यस्मिन् मया शोधितु आत्मग्राहो[1]
इतः पुरे कल्पशतानचिन्तियान् ।
श्रेष्ठां चरन्तेन पि बोधिचारिकां
10 पर्येषमाणेन इमां समाधिम् ॥ १६ ॥

तस्मादिमं श्रुत्व अथ धर्मगञ्जं
यः सूत्रकोटीनयुतान आगमः ।
यः पुण्यस्कन्धो विपुलो अचिन्तियो
येनो लघुं बुध्यति बुद्धज्ञानम् ॥ १७ ॥

15 सर्वेषं सूत्राणिदमग्रसूत्र-
मचिन्तियस्यो कुशलस्य आकरम् ।
पर्यन्तु धर्माण न तेष लभ्यते
यां सो सदा निर्दिशते विशारदः ॥ १८ ॥

छिन्दित्व भिन्दित्व महासहस्रं
20 शक्यं गणेतुं परमाणुसंचयः ।
न त्वेव ते सूत्रशता अचिन्तियान्
प्रभाषु यं भाषति सो अभिष्ठितः ॥ १९ ॥

N 549 आश्वास प्रश्वास गणेतु शक्यं
सर्वेष सत्त्वानिह बुद्धक्षेत्रे ।
25 पर्यन्तु सूत्राण न तेष शक्यं
यान् भाषते सोऽत्र समाधिये स्थितः ॥ २० ॥

बुद्धान क्षेत्रा यथ गङ्गवालिका
ये तेष सत्त्वा गति तेषूपपन्नाः ।
गणेतु ते शक्यमथोपि चिन्तितुं
30 न तेष सूत्राण य नित्यु भाष्यते ॥ २१ ॥

---

१ ABT लभ्यति for बुध्यति २ A om. st. 18. ३ A om. the first two lines of st. 20.
४ B om. this line. ५ AB तथा विचिन्तितु for अथापि चिन्तितु

गणेतु शक्यमित कल्पकोटिभिः
महासमुद्रेष्विह यन्ति वालिकाः ।
नदीषु कुण्डेषु ह्रदेषु तद्वद्
अनन्त सूत्रान्त स[1] यत् प्रभाषते ॥ २२ ॥ 5

शक्यं गणेतुं बहुकल्पकोटिषु
य आपस्कन्धः सद तत्र तिष्ठति ।
शताय भिन्नाय वालाग्रकोटिये M 550
स्वराङ्ग तेषां न तु शक्यु सर्वशः ॥ २३ ॥

शक्यं गणेतुं बहुकल्पकोटिभि-
र्ये सत्त्व आसन् पुरिमेण तत्र । 10
य आत्मभावे विनिबद्धसारा
न तेष सूत्रान्तनिर्हार जानितुम् ॥ २४ ॥

गणेतु शक्यं क्त सर्वप्राणिनां
ये सन्ति सत्त्वा दशसु दिशासु ।
न शक्यु सूत्रान्त गणेतु तस्य 15
यद् भाषतेऽसौ सततमधिष्ठितः ॥ २५ ॥

सर्वैर धर्माण निदेशु जानति
निरुक्तिनिर्देशपदार्थकोविदः ।
विनिश्चये[2] भूतनयेषु शिक्षितो
विशालबुद्धिः सद हर्षप्रज्ञः ॥ २६ ॥ 20

अभिन्नबुद्धिर्विपुलार्थचिन्ती
अचिन्त्य चिन्तेति सदा प्रजानति ।
घोषस्वभावं पृथु सर्व जानती N 551
शब्दांश्च तान् निर्दिशतो न सज्जति ॥ २७ ॥

असक्त[3] सो बुध्यति धर्मभाणको 25
न सज्जते सर्वजगस्य भाषत ।
प्रश्नान निर्देशपदेहि[4] कोविदः
तथाहि तेनो परमार्थु ज्ञातः ॥ २८ ॥

एकस्य सूत्रस्युपदेशकोटियो
अचिन्तियां निर्दिशतो न सज्जति । 30

१ A समम for स यत्. २ AB विनिश्चितो for विनिश्चये ३ A असक्तु; B असंङ्ग for असक्त
४ ABT °शतेहि for °पदेहि-

असङ्गनिर्देशपदार्थकोविदो [१]
भाषन्तु सो पर्षगतो न सज्जते ॥ २९ ॥

यः सुस्थितो भोति इहो समाधियें
स बोधिसत्त्वो भवती अकम्पियः ।
5 धर्मे बलाधानविशेषप्राप्तः
करोति सोऽर्थं बहुप्राणकोटिनाम् ॥ ३० ॥

यथैव मेरुरचलो अकम्पियः
सर्वेहि वातेहि न शक्य कम्पितुम् ।
N 552 तथैव भिक्षुर्विदु धर्मभाणकं
10 कम्पेतु शक्यं न परप्रवादिभिः ॥ ३० ॥

महासहस्रेष्विह लोकधातुषु
ये पर्वता उक्त अकम्पनीयाः ।
ते शक्य वातेन प्रकम्पनाय
न त्वेव धर्मे स्थितु शून्यि भिक्षुः ॥ ३२ ॥

15 य शून्यतायां सततं प्रयुक्तो
सुदान एषो नियतं विहारः ।
प्रजानती निश्चितु धर्म शून्यां
स सर्ववादीभि न शक्यु क्षोभितुम् ॥ ३३ ॥

अकम्पियो भोति परप्रवादिभि
20 सर्वप्रवादेहि अनाभिभूतः ।
अनाभिभूतश्च अनिन्दितश्च
इमुमुदिशित्वान समाधि शान्तम् ॥ ३४ ॥

गतिं गतो भोति स शून्यताया
सर्वेषु धर्मेषु न काङ्क्षतेऽसौ ।
25 अनन्तज्ञाने स्द सुप्रतिष्ठितो
इमुमुदिशित्वान समाधि शान्तम् ॥ ३५ ॥

N 553 बलानि बोध्यङ्ग न तस्य दुर्लभा
प्रतिसंविदो ऋद्धिविधी अचिन्तिया ।
अभिज्ञ नो तस्य भवन्ति दुर्लभा
30 धारेत्व वाचेत्व इमं समाधिम् ॥ ३६ ॥

---

१ AB प्रकम्पितुं तदा for प्रकम्पनाय २ A सत्त्व for सर्व°.

भवाभिवृत्तस्य न तस्य दुर्लभं
अनन्तज्ञानेन जिनान दर्शनम् ।
संबुद्ध कोटीनयुतानचिन्तियान्
सो द्रक्ष्यते एतु समाधि धारयन् ॥ ३७ ॥ 5
सर्वेष चो तेष जिनान अन्तिके
स श्रोष्यते एतु समाधि शान्तम् ।
वरेण ज्ञानेन उपेतु भेष्यती
प्रतिसंविदासु यश पारमिं गतः ॥ ३८ ॥
सचेद् भवेन्मणिरत्नान पूर्णा 10
महासहस्रा इय लोकधातुः ।
ये दिव्य श्रेष्ठ मणिरत्नाः प्रधाना[1]
हेष्टं उपादाय भवाग्रु यावत् ॥ ३९ ॥
यावन्त क्षेत्रा बहुविध ते अनन्ता
जाम्बूनदासंस्तृत पूर्ण सर्वे । 15 N 554
दानं ददे जिनवरेषु सर्वं
भूमीतलादुपरि भवाग्र यावत् ॥ ४० ॥
यावन्ति सन्ति बहु विविधा हि सत्त्वा
दानं ददेयुस्त्रिविधमनन्तकल्पान् ।
बुद्धान दद्युः सततमविच्छिन्तो[2] 20
बोध्यर्थिको चो ददितु दानस्कन्धम् ॥ ४१ ॥
यश्चैव भिक्षुरभिरतु शून्यतायां
बुद्धान्नमस्ये दशनखप्राञ्जलीयो ।
न स दानस्कन्धः पुरिमकु यांति[3] संख्यां
यः शून्यतायामभिरतु बोधिसत्त्वः ॥ ४२ ॥ 25
तं चो लभित्वा स हि नरु पुण्यवन्तो
दानं ददेति विपुलु जनेत्व श्रद्धाम् ।
पर्येषमाणो अतुलिय बुद्धबोधिं
औपम्यगेतं कृतु पुरुषोत्तमेन ॥ ४३ ॥
यश्चो समाधिमिमु वरु श्रेष्ठ गृह्णे 30
चतुष्पदां गाथ स तुष्टचित्तः । N 555
यः पुण्यस्कन्धो उपचितु तेन भोति
तत् सर्वदानं शतिमकला न भोति ॥ ४४ ॥

१ AB प्रभूताः for प्रधाना. २ AB अविच्छिन्तो for अविछि°. ३ C व्रस्य for यांति.

न ताव शीघ्रं प्रतिलभि बुद्धज्ञानं
दानं ददेत् सो हितकरु बोधिसत्त्वः।
अश्रुत्व एतं विरजु समाधि शान्तं
यथ श्रुत्व शीघ्रं लभति स बुद्धज्ञानम् ॥ ४५ ॥

5 यथो लभित्वा इमु वर शान्तभूमिं
श्रुतस्य गोत्रं इमु विरजं समाधिम्।
पर्यापुणेय्या प्रमुदितु बोधिसत्त्वः
स शीघ्रमेतं प्रतिलभि बुद्धज्ञानम् ॥ ४६ ॥
योऽपी निधानं प्रतिलभि एवरूपं

10 क्षेत्राननन्तान् यथरिव गङ्गवालिकाः।
ते चो भवेयुर्मणिरतनान पूर्णा
दिव्यान चो तथपि च मानुषाणाम् ॥ ४७ ॥
दुर्धर्षु सो[1] भोति प्रभूतकोशो
महाधनो धनरतनेनुपेतः।

15 यो बोधिसत्त्वो लभति इमं समाधिं
पर्यापुणन्तः सततमतृप्तु भोति ॥ ४८ ॥
राज्यं लभित्वा परमसमृद्ध स्फीतं
न तेन तुष्टो भवति कदाचि विज्ञः।
N 556 यथा लभित्वा इमु विरजं समाधिं

20 तुष्टो उदग्रो भवति स बोधिसत्त्वः ॥ ४९ ॥
ते ते धर्मधरा भवन्ति सततं बुद्धान सर्वेज्ञिनां
धारेन्ती वरधर्मनेत्रि विपुलां क्षीणान्तकाले तथा।
धर्मकोशधरा महामतिधराः सर्वज्ञगञ्जंधराः
ते ते सत्त्व सहस्रकोटिनियुतांस्तोषेन्ति धर्मस्वरैः ॥ ५० ॥

25 ते ते शीलधनेनुपेत मतिमान् शिक्षाधनाढ्या[2] नरा.
ते ते शीलव्रते स्थिता अभिरता धर्मद्रुमस्याङ्कुराः।
ते ते रक्तकाषायचीवरधरा नैष्कर्म्यतुष्टाः सदा
ते ते सत्त्वहिताय अप्रतिसमाः सर्वज्ञतां प्रस्थिताः ॥ ५१ ॥
ते ते दान्त सुदान्त सत्त्वदमका दमथेनुपेताः सदा

30 ते ते शान्त सुशान्ततामनुगताः शान्तप्रशान्तेन्द्रियाः[3]।
N 557 ते ते सुप्त प्रसुप्त सत्त्व सततं धर्मस्वनैर्बोधयी
बोधित्वा वरश्रेष्ठ धर्मरतनैः सत्त्वान् प्रतिष्ठापयी ॥ ५२ ॥

---

[1] Mss. भो for सो [2] B धर्मधनाढ्या for शिक्षा°. [3] B दान्त सुदान्त° for शान्त सुशान्त°.

ते ते दानपती भवन्ति सततं सद मुक्तत्यागी विदु
ते ते मत्सरियैर्न संत्रसि महात्यागे रमन्ते सदा ।
ते ते सत्त्व दरिद्र दृष्ट्व दुखितान् भोगेहि संतर्पयी
ते ते सत्त्वहितैं सुखाय सततं सर्वज्ञतां प्रस्थिताः ॥ ५३ ॥
ते ते आहनि धर्मभेरि विपुलां ज्ञाने सदा शिक्षिताः
छिन्दन्ती जन सर्व संशयलतां ज्ञाने सदा प्रस्थिताः ।
ते ते सुश्रुत धर्मधारि विरजा सूत्रान्तकोटीशतान्
पर्षायां स्थित आसने मतिधराः प्रव्याहरी पण्डिताः ॥ ५४ ॥
ते ते भोन्ति बहुश्रुताः श्रुतिधराः संबुद्धधर्मंधराः
कोशान् धर्ममयान् धरन्ति मुनिनां धर्माभिधाने रताः ।
ते ते भोन्ति विशालप्रज्ञ विपुलां प्रीतिं जनेन्ति सदा
देशेन्ता वरधर्म शान्त निपुणं नैर्याणिकं दुर्दृशम् ॥ ५५ ॥
ते ते धर्मकथर्मज्ञेय मतिमान् धर्मे स्थिताः सूरताः
धर्मराज्यि प्रशासि अप्रतिसमा वरधर्मचारी सदा ।
ते ते भोन्ति विशिष्टधर्मगुरुका गुप्मीरवे च स्थिताः
धर्मे नगरे[1] स्थिता मतिधरा धर्मध्वजोच्छ्रायिकाः ॥ ५६ ॥
ते ते मत्त प्रमत्त सत्त्व सततं दृष्ट्वा प्रमादे स्थितान्
दृष्ट्वा चैव प्रनष्ट उत्पथगतान् संसारमार्गे स्थितान् ।
तेषू मैत्र जनित्वुदार करुणा मुदिताप्युपेक्षा स्थिता
तेषां मार्गवरं प्रदर्शयि शिवमष्टाङ्गिकं दुर्दृशम् ॥ ५७ ॥
ते तु नाव करित्व धर्म सुदृढां[2] धारेन्ति सत्त्वान् बहून्
उह्यन्तान् महार्णवेषु पतितान् संसारस्रोतोगतान् ।
बोध्यङ्गा बलइन्द्रियैः कवचिताः सद्धर्मनावारुहाः
तीरे पारमि क्षेम नित्यमभये स्थापेन्ति सत्त्वान् सदा ॥ ५८ ॥
ते ते वैद्यवरा भवेषु चरिता वैद्योत्तमा वेदका
विद्याज्ञानविमुक्तिपारगमिता[3] सद्धर्मभैषज्यदाः ।
दृष्ट्वा सत्त्व गिलान नेकविविधे रोगैः समभ्याहतान्
तेषां धर्मविरेचनं ददति तद्धर्मैश्चिकित्सन्ति तान् ॥ ५९ ॥
ते ते वादिविपक्षवादिमथना लोकेन्द्र वागीश्वराः
सर्वतीर्थ्यप्रभञ्जका मतिधरा वरज्ञानभूमिस्थिताः ।
शूर ज्ञानबला बलप्रमथनाः संवर्णिता ज्ञानिभिः
ज्ञानेनो बहुसत्त्वकोटिनियुतांस्तोष्यन्ति धर्मे स्थिताः ॥ ६० ॥

1 BT नगवरे for नगरे. २ B सुदृढां तारेन्ति for सुदृढां धारेन्ति. ३ B °पारमिता for पारगमिता.

ते तेऽधिपति सार्थवाह विपद सत्वान त्राणार्थिका
दृष्ट्वा सत्त्व प्रमूढ मार्गरतने सद मारपाशे स्थिता ।
तेषा मार्गवर प्रकाशयि शिव क्षेम सदा निर्वृती
येन ज्ञानपथेन नेन्ति कुशलान् वहुसत्त्वकोटीशतान् ॥ ६१ ॥

ते ते लेनु भवन्ति त्राणु शरण चक्षु प्रदीपकरा
भीतानामभयप्रदाश्च सतत त्रस्तान चाश्वासका ।
तेऽतिदु खित सत्त्व ज्ञात्वे परमान् जात्यन्धभूतानिमान्
धर्मालोकु करोन्ति धर्मरतने भूतनये शिक्षिता ॥ ६२ ॥

N 560

ये ये शिल्पवरा जगे बहुकरा सत्त्वान अर्थावहा
येभि सत्त्व सदा भवन्ति सुखिता शिल्पेषु सशिक्षिता ।
शिक्षापारमिता गता सुकुशला आश्चर्यप्रासाद्भुता
ये बोधीनभिप्रस्थिता मतिधरा लोकस्य चक्षुर्ददा ॥ ६३ ॥

नो ते तृप्त कदाचिदप्रतिसमा वरबुद्धधर्मश्रुता
शीलक्षान्तिसमाधिपारगमिता गम्भीरधर्मश्रुता ।
नो तृप्ताश्च परेषु धर्मरतन ते देशयन्त शिव
मोक्षोपायु प्रवर्षमाणु वर्षे धर्मैनरास्तर्पयी ॥ ६४ ॥

यावन्तो बहु सत्त्व तेषुपगता धर्मार्थिका पण्डिता
श्रोष्यामो वरधर्मश्रेष्ठरतन मार्ग ऋजु अञ्जसम् ।
तेषा छिन्दिषु सशयान् मतिधरा धर्मेण सतोपयी
शीलक्षान्तिसमाधिपारमिगता जानन्त सत्त्वाशयान् ॥ ६५ ॥

ज्ञानी ज्ञानवराग्र पारमिगता सत्त्वाशये कोविदा
जानन्त परसत्त्वचित्तचरित येषा कथा यादृशी ।
ये ये ज्ञानकथाय सत्त्वनयुता वरधर्मचक्षुर्लभा
ते ते ज्ञानविशेषपारमिगता मार्गोपदेशनकरा ॥ ॥ ६६ ॥

मारा कोटिसहस्र तेष विदुषा चित्त पि नो जानिषु
आकाशे यथ पक्षिणा पदगर्ति ज्ञातु न शक्या कचित् ।

N 561

शान्ता दान्त प्रशान्त ज्ञानवशिनो आर्यस्मि ज्ञाने स्थिता
सर्वान् मार निहत्य शूर वृषभा बुध्यन्ति बोधि शिवाम् ॥ ६७ ॥

ऋद्धिपारमिप्राप्त भोन्ति सतत गच्छन्ति क्षेत्रान् शतान्
पश्यन्ति बहुबुद्धकोटिनियुतान् गङ्गा यथा वालिका ।

---

१ B विशुद्ध for प्रमूढ २ B ज्ञान for ज्ञात्व ३ B °पारमिगना for °पारमिता ४ Mss नोत्तृप्ताश्च for नो तृप्ताश्च ५ B °ज्ञानवशिनो for °वशिनो

चक्षुस्तेष न सज्जते दशदिशो पश्यन्ति रूपान् बहु
ये चो[1] सत्व दशदिशो भवस्थिताः सर्वेष ते नायकाः ॥ ६८ ॥

ते तस्यो भणि आनुशंस सकल्पं कल्पान कोटीशतान्
नो चो पूर्वचरीय वर्ण क्षपये प्रतिभानतो भाषतो। 5

बुद्धानां धनमक्षयं सुविपुलं ज्ञानस्य चो सागरं
यो एतं विरजं समाधिमतुलं धारेय कश्चिन्नरः ॥ ६९ ॥

इति श्रीसमाधिराजे शीलस्कन्धनिर्देशपरिवर्तः षट्त्रिंशतितमः ॥ ३६ ॥

---

१ C बोधिसत्त्व for चो सत्व.

## यशःप्रभपरिवर्तः ।

N 562 तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म – तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेनेमांश्चोपरिमाणानाश्चर्याद्भुतान् बोधिसत्त्वधर्मानाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेनायं सर्वधर्मस्वभावसमताविपञ्चितः समाधिः श्रोतव्य उद्ग्रहीतव्यः पर्यवाप्तव्यो धारयितव्यो वाचयितव्यः प्रवर्तयितव्य उद्देष्टव्यः स्वाध्यातव्योऽरणाभावनया भावयितव्यो बहुलीकर्तव्यः परेभ्यश्च 5 विस्तरेण संप्रकाशयितव्यः । क्षान्तिबलं चानेन भावयितव्यम् । क्षान्तिरासेवयितव्या भावयितव्या बहुलीकर्तव्या । धर्मार्थिकेन च भवितव्यं धर्मकामेन धर्मपरिग्राहकेन, धर्मानुधर्मप्रतिपन्नेन । बुद्धपूजाभियुक्तेन भवितव्यम् । तेन त्रिषु स्थानेष्वभियोगः करणीयः । कतमेषु त्रिषु ? यदुत क्लेशक्षयाय पुण्यबलाधिपतये बुद्धज्ञानमाकाङ्क्षता कुशलमूलान्यवरोपयितव्यानि नो तु खलु लोकसुखस्पर्शाभिकाङ्क्षिणा । एषु त्रिषु स्थानेष्वभियोगः करणीयः ॥

N 563 10 अथ खलु भगवांस्तस्यां वेलायां चन्द्रप्रभस्य कुमारभूतस्य तमेवार्थमुद्द्योतयमान इममेव पूर्वयोगकर्यानिर्देशं गाथाभिगीतेन संप्रकाशयति स्म –

हन्त शृणोथ ममेतु कुमारा
कल्पसहस्र यथा चरिता मे ।
पूजित बुद्धसहस्रशतानि
15 एषतु एतु समाधि प्रणीतम् ॥ १ ॥

कल्प अचिन्तिय एवमतीताः
क्षेत्रशतेषु ये वालिक अस्ति ।
एष निदर्शनु कीर्तितु भोतीं
यं जिनु आसि गणेश्वरनामा ॥ २ ॥

20 षष्टिरनूनक कोटिसहस्रा-
ण्यासि गणोत्तमु तस्य जिनस्य ।
सर्वि अनास्रवि क्षीणकिलेशा
अष्टविमोक्षप्रतिष्ठित ध्यायी ॥ ३ ॥

तत्र च कालि इयमपि सर्वा
25 क्षेम सुभिक्ष अनाकुल आसीत् ।
N 564 सौख्यसमर्पित सर्वमनुष्याः
प्रीणित मानुषकेभि सुखेभिः ॥ ४ ॥

१ B इमाश्चान्याश्च for इमांश्च. २ B om. विस्तरेण. ३ After धर्मकामेन, B adds धर्मरतेन. ४ B त्रिसाहस्रेषु for त्रिषु ५ B om. स्थानेषु. ६ After °निर्देशं, B adds भूयस्या मात्रया. ७ After °गीतेन, B adds विस्तरेण. ८ C मानसकेभि for मानुषकेभि.

पुण्यबलेन च सर्वे उपेता
　　दर्शनियास्तथ प्रेमणियाश्च ।
आढ्य महाधन सर्वे समृद्धा
　　दिव्यसुखेन समर्पितगात्राः ॥ ५ ॥
सूरतु सुव्रत मन्दकिलेशाः　　5
　　क्षान्तिबलाभिरता अभिरूपाः ।
देवपुरेषु यथा मरुपुत्राः
　　शीलगुणोपगता मतिमन्तः ॥ ६ ॥
तत्र च तस्मि महीपतिरासीद्
　　राजसुतो वरपुण्यसुनामा ।　　10
तस्य च पुत्र अनूनकमासन्
　　पञ्चशता स्मृतिमन्मतिमन्तः[1] ॥ ७ ॥
तेन च राजसुतेन जिनस्यो
　　षष्टि उद्यानसहस्रशतानि ।
पुष्पफलप्रतिमण्डित सर्वे　　15　N 665
　　तस्य निर्यातित कारुणिकस्य ॥ ८ ॥
विचित्र उद्यान सहस्रशता
　　चंक्रमशय्यनिषद्यसहस्रैः ।
चीवरकोटिसहस्रशतेभिः
　　संस्तृत चंक्रमणाश्च निषद्याः ॥ ९ ॥　　20
एवमनेकप्रकारसहस्रा
　　यात्तक श्रामणकाः परिभोगाः ।
राजसुतेन प्रसन्नमनेना
　　तस्य उपस्थापिताः सुगतस्य ॥ १० ॥
सो दशसु शुभकर्मपथेषु　　25
　　राज प्रतिष्ठित साधुजनेना[2] ।
प्राणसहस्रशतानयुतेभि-
　　र्गच्छि पुरस्कृतु नायकु द्रष्टुम् ॥ ११ ॥
पुष्पविलेपनधूप गृहीत्वा
　　छत्रपताकध्वजांस्तथ वाद्यान्[3] ।　　30

---

[1] B स्मृतिमन्तः for स्मृतिमन्. [2] C सार्ध for साधु°. [3] After वाद्यान्, A reads the last line of st. 13.

पूज करित्व स तस्य जिनस्य
प्राञ्जलिकः पुरत स्थित आसीत्[1] ॥ १२ ॥
N 566 तुष्ट अभूत्तद भिक्षुसहस्रा
देवमनुष्यथ यक्षसुराश्च ।
व्याकरु किं नु जिनो इमु पूजां
साधु किं वक्ष्यति धर्मु नरेन्द्रः[2] ॥ १३ ॥
तस्य च आशय ज्ञात्व स्वयंभू
राजसुतस्य निरुत्तरु चित्तम् ।
पारगतो अधिमुक्तिपदेषु
तस्यिम देशयि शान्त समाधिम् ॥ १४ ॥
याव प्रमुक्त गिरा सुगतेना
कम्पित मेदिनि सवनषण्डा ।
पुष्प प्रवर्षि तदा गगनातः
पद्मशतापि च उद्गत भूमौ ॥ १५ ॥
व्याकरि नायकु आशयु ज्ञात्वा
अर्थपदेषु सुशिक्षित शास्ता ।
देशयि शान्त समाधि नरेन्द्र-
स्तत्रिमि अर्थपदानि शृणोथ ॥ १६ ॥
सर्वि भवा अभवाः परिकल्पा-
स्तुच्छ मरीचिसमा यथ मायाः ।
N 567 विद्युतमेघसमाश्चल शून्याः
सर्वि निरात्म निसत्त्व निजीवाः ॥ १७ ॥
आदितु शून्य अनागत धर्मा
नागत[3] अस्थित स्थानविमुक्ताः ।
नित्यमसारक मायस्वभावाः
शुद्ध विशुद्ध नभोपम सर्वे ॥ १८ ॥
नैव च नील न पीत न श्वेता
नामतु रिक्तकु घोषस्वभावाः ।
चित्तविविक्त अचित्तस्वभावाः
सर्वरतापगताः क्षणिकत्वात् ॥ १९ ॥
भावतु अक्षरु संक्रमु नास्ति
नो पि अभावतु संक्रमु भोति ।

---

१ AB आसन् for आसीत्. २ B मुनिन्द्रः for नरेन्द्रः. ३ C नोगत प्रस्थित for नागत अस्थित.

नापि च अक्षर देश व्रजन्ती
　नो पुनरक्षर क्रान्ति कुतश्चित् ॥ २० ॥
अक्षर अक्षय क्षीण निरुद्धा
　भाषततो च अभाषततो वा ।
नित्यमिमक्षर अक्षय उक्ता
　यः परिजानति सोऽक्षयु भोति ॥ २१ ॥
बुद्धसहस्रशता य अतीता
　धर्मसहस्रशतानि भणित्वा ।
नैव च धर्मु न चाक्षर क्षीणा
　नास्ति समुत्पत्ति तेन अक्षीणा ॥ २२ ॥
येन प्रजानति अक्षयधर्मान्
　नित्यु प्रजानति अक्षयधर्मान् ।
सूत्रसहस्रशतानि भणित्वा
　सर्वि अनक्षर जानति धर्मान् ॥ २३ ॥
यं च प्रभाषति धर्म जिनस्यो
　तं च न मन्यति सोऽक्षयताये ।
आदि निरात्मनि ये त्रिमि धर्मा
　तांश्च प्रभाषति[1] नो च क्षपेति ॥ २४ ॥
सर्वगिरः स प्रभाषति विज्ञो
　नो च गिराय हरीयति चित्तम् ।
सर्वगिरो गिरिघोषनिकाशो
　तेन न सज्जति जातु गिराये ॥ २५ ॥
याय गिराय स कीर्तितु धर्मः
　सा गिर तत्क्षणि सर्व निरुद्धा ।
यादृशु लक्षणु तस्य गिराये
　सर्विमि धर्म तल्लक्षणप्राप्ताः ॥ २६ ॥
सर्विमि धर्म अलक्ष विलक्षा
　सर्वि अलक्षण लक्षणशुद्धाः ।
नित्य विविक्त विशुद्ध नभो वा
　संख्य समासतु ते न उपेन्ति ॥ २७ ॥
संस्कृतासंस्कृत सर्वि विविक्ता
　नास्ति विकल्पन तेषमृषीणाम् ।

---

1 A प्रजानति for प्रभाषति.

N 570 सर्वगतीषु असंस्कृत प्राप्ता
दृष्टिगतेहि सदैव विविक्ताः ॥ २८ ॥

नित्यमसक्त अदुष्ट अमूढा-
स्तस्य स्वभाव समाहितचित्ताः।
5 एष समाधिवली वदन्तो
यो इमु जानति ईदृश धर्मान् ॥ २९ ॥

शैलगुहागिरिदुर्गनदीषु
यद्व प्रतिश्रुत्क जायि प्रतीत्य।
एविमु संस्कृतु सर्वि विजाने
10 मायमरीचिसमं जगु सर्वम् ॥ ३० ॥

प्रव्रचलं गुण धर्मगतानां
ज्ञानबलेन अभिज्ञ ऋषीणाम्।
N 571 वाच उपायकुशल्य निरुक्त
यत्र प्रकाशितु शान्त समाधिः ॥ ३१ ॥

15 कल्पितु वुचति कल्पनमात्रं
अन्तु न लभ्यति संसरमाणे।
कोटि अलक्षण या पुरि आसी-
दपि अनागति प्रत्ययताये ॥ ३२ ॥

कर्म क्रियाय च वर्तति एवं
20 हीन उत्कृष्टतया समुदेन्ति।
विविक्त धर्म सदा प्रकृतीये
शून्य निरात्म विजानथ सर्वान् ॥ ३३ ॥

सवृति भाषितु धर्म जिनेना-
संस्कृतसंस्कृत पश्यथ एवम्।
25 नास्तिह भूततु आत्म नरो वा
एतकु लक्षण सर्वजगस्य ॥ ३४ ॥

N 572 कृष्णाशुभ च न नश्यति कर्म
आत्मन कृत्य च वेदयितव्यम्।
नो पुन संक्रम कर्मफलस्य
नो च अहेतुक प्रत्यनुभोन्ति ॥ ३५ ॥

---

१ B सत्वगतीषु for सर्व॰ २ A कल्पितु, B कल्पित, C कल्पन for कल्पन॰ ३ B सूत्रतु for भूततु ४ C नो चितु for नो पुन.

सर्वि भवा अलिका वशिकास्थो
रिक्तकु तुच्छ फेनसमाश्च ।
मायमरीचिसमा सद शून्या
देशितु शब्दितु ते च विविक्ता ॥ ३६ ॥ 5
एव विजानतु मन्यन नास्ती
शीलवु भोति अनिश्रितचित्त ।
क्षान्तिबलेन न कल्पयि किंचि
एव चरन्तु समाहितु भोति ॥ ३७ ॥
यावतक धर्म विजानि स राजा 10
तावतक देशित तेन जिनेन ।
श्रुत्व नृपो इमु धर्म जिनस्यो
सपरिवार समाददि शिक्षाम् ॥ ३८ ॥
राजसुतो इमु श्रुत्व समाधिं
आत्तमना मुदितो भणि वाचम् । 15 N 573
सुष्ठु सुभाषितु एष समाधी
एष तवा चरणेषु पतामि[1] ॥ ३९ ॥
तत्र च प्राणिसहस्र अशीति
श्रुत्विमु धर्मवरमार्य प्रणीतम् ।
भूतु अय परमार्थ निर्देशो 20
ते अनुत्पत्तिक क्षान्ति लभिंसु ॥ ४० ॥
नास्ति उपादु निरोधु नरस्यो
एविमि धर्म सदा विविक्ता ।
एव प्रजानतु नो परिहाणि
राज लभी अनुत्पत्तिक क्षान्तिम् ॥ ४१ ॥ 25
राज तदा विजहित्वन राज्य
प्रव्रजि शासनि तस्य जिनस्य ।
तेऽप्यनु प्रव्रजिता सुत राज्ञ
पञ्चशतानि अनूनक सर्वे ॥ ४२ ॥
प्रव्रजितो यद राज सपुत्रो
अन्य तदा बहुप्राणिसहस्रा ।
प्रव्रजिता सुगतस्य समीपे
धर्म गवेषिषु तस्य जिनस्य ॥ ४३ ॥

---

1 B प्रणामि for पतामि

N 574

विंशतिवर्षशतान् परिपूर्णान्
धर्म प्रकाशितु तेन जिनेना।
राज सपुत्रकु तेन जनेना
विंशतिवर्षशता चारे धर्मम् ॥ ४४ ॥

5 अथ अपरेण पुनः समयेन
सोऽपि जिनः परिनिर्वृतु आसीत्।
ये जिनश्रावक तेऽपि अतीताः
सोऽपि च धर्मु परित्तेकु आसीत् ॥ ४५ ॥

तस्य च राजिन पुत्र अभूषी
10 पुण्यमती सद श्राद्धु प्रसन्नः।
तस्य च भिक्षु कुलोपगु आसीत्
सो इमु देशयि शान्त समाधिम् ॥ ४६ ॥

सो अखिलो मधुरो च अभूषी
सत्कृतु प्राणिसहस्रशतेभिः।
N 575 15 देवत कोटिशतान्यनुबद्धा
वर्ण भणन्ति कुलान् प्रविशित्वा ॥ ४७ ॥

स स्मृतिमान् मतिमान् गतिमांश्चो
सुव्रतु सूरतु शीलरतश्च ।
सुस्वरु अप्सरु सो मधुरश्चो
20 धातुषु ज्ञानवशी वरप्राप्तः ॥ ४८ ॥

चीवरकोटिशतान च लाभी
आसि स भिक्षु यशःप्रभु नाम्ना।
तस्य च पुण्यबलं असहन्ता
भिक्षुसहस्र तदा जनि ईर्षाम् ॥ ४९ ॥

25 पुण्यबलेन च रूपबलेन
ज्ञानबलेन च ऋद्धिबलेन।
शीलबलेन समाधिबलेनो
धर्मबलेन समुद्गत भिक्षुः ॥ ५० ॥

हृष्टमनश्च प्रियश्च जनस्यो
30 भिक्षुउपासकभिक्षुणिकानाम्।

---

१ B परीत्यकु for परित्तकु २ B कुलापकु for कुलोपगु ३ A अप्यल्पो, B अप्सर्पं; C अप्सक for अप्सरु which is based on T.

ये जिनशासनि सत्त्व प्रसन्ना-
　　स्तेपमभीप्सित पूजनियाश्च ॥ ५१ ॥　　N 576

यश्च स राजिनु पुत्रु अभूषी
　　पुण्यमती सद श्राद्धु प्रसन्नः।　　5
शत्व प्रदुष्टमनान् बहुभिक्षून्
　　रक्ष स कारयि आचरियस्य ॥ ५२ ॥

पञ्चहि प्राणिसहस्रशतेही
　　वर्मित खड्गगदायुधकेहि।　　10
तेहि सदा परिवारित भिक्षु
　　भाषति भूतचरीमपर्यन्ताम् ॥ ५३ ॥

सो[1] परिपाच प्रभाषति धर्मं
　　शून्य निरात्म निर्जीविमि धर्माः।
ये उपलम्भिक आत्मनिविष्टा-
　　स्तेष न रोचति यं भणि भिक्षुः ॥ ५४ ॥　　15

उत्थितु भिक्षव शस्त्र गृहीत्वा
　　येष न रोचति शून्यत शान्ता।
एष अधर्म[2] प्रभाषति भिक्षुः
　　एतु हनित्व भविष्यति पुण्यम् ॥ ५५ ॥　　20

दृष्ट्व[3] च शस्त्र न भायति भिक्षुः
　　शून्यक धर्ममनुस्मरमाणः।　　N 577
नास्तिह सत्त्व नरो वपहत्यै
　　कुड्यसमा[4] इमि रिक्तक धर्माः ॥ ५६ ॥

भिक्षुं करोति स अञ्जलि मूर्ध्ना
　　भाषति वाच नमोऽस्तु जिनानाम्।　　25
येन सत्येनिमि शून्यक धर्मा
　　भोन्तिमि शस्त्र मान्दारवपुष्पाः ॥ ५७ ॥

शीलव्रतोपगतस्य मुनिस्यो
　　भोषितमात्र[5] अनन्ययवाक्ये।
कम्पित मेदिनि सवनखण्डा
　　शस्त्र ते जात मान्दारवपुष्पाः ॥ ५८ ॥

---

१ C सो परिभाषय भाषति धर्मं for the line. २ C सुधर्मुं for अधर्म. ३ AB च य हन्ये for वापहत्यै. ४ AB कुड्यसमा; C कुन्यसमा for कुड्यसमा. ५ AB भाषितमानि; C भाषितमान्य for भाषितमात्र.

मारमतेन च मोहित सत्वा
रागवशानुगताभिनिविष्टा ।
मोहवशेन तु मोहित बाला
येषं न रोचति शून्यत शान्ता ॥ ७४ ॥

5 भिक्षु च भिक्षुणिका गृहिणश्चो
ग्राहित मोहित पापमतीभि ।
तेष वशानुगता सद मूढ्वा
पश्चिमि कालि प्रतिक्षिपि बोधिम् ॥ ७५ ॥

श्रुत्व कुमार इमा मम वाच
10 भिक्षु अरण्यकुले वसि नित्यम् ।
येषिय रोचति शून्यत शान्ता
तैरयु धारितु धर्मु जिनानाम् ॥ ७६ ॥

प्रव्रजि ते मम शासनि चरित्व
भिक्षु उपसपदपोषधकर्मम् ।
N 582 15 भुञ्जिमु पिण्डमसक्ता अदुष्टा
ये इमु धारयिष्यन्ति समाधिम् ॥ ७७ ॥

जीवित काय अपेक्षि प्रहाया
शून्यत भावयथा सुप्रशान्ताम् ।
युक्तप्रयुक्तमना च भवित्वा
20 सेव अरण्य सदा मृगभूता ॥ ७८ ॥

नित्य करोथ च पूज जिनाना
छत्रध्वजर्द्धियमाल्यविहारै ।
चेतिय पूजयथा प्रतिमाना
क्षिप्र लभिष्यथ एतु समाधिम् ॥ ७९ ॥

25 स्तूप करापयथा सुगताना
हेमविभूषित रूपियलिप्तान् ।
प्रतिम सुनिष्ठित रत्नविचित्रा
बोधिनिधानु जनित्वन चित्तम् ॥ ८० ॥

N 583 यावति पूज जगेस्मि प्रणीता
30 दिव्यय मानुषिका रमणीया ।

---

१ C मारवशानुगता विनिविष्टा for the line २ C रागवशेन for मोह° ३ A येष न सप्रति शून्यत शान्ति B ये जन सेवति शून्यत शान्ता for the line ४ AB असक्तमगृद्धा for असक्ता अदुष्टा ५ Dutt सुगतानां against Mss ६ Dutt °लिप्तान् against Mss on the strength of T

सर्वे गवेषिय बुद्ध महेषा
बोधिनिधानु करित्व प्रतिज्ञाम् ॥ ८१ ॥

धर्मत पश्यथ सर्वि नरेन्द्रान्
यावत सन्ति दश दिशि लोके ।
दृश्यति निर्वृति सर्वजिनानां
धर्मतया स्थित संमुख बुद्धाः ॥ ८२ ॥

भोथ च सर्वि पु त्यागाधिमुक्ताः
शीलविशुद्धगता स्थिरचित्ताः ।
क्षान्तिरताः सद मैत्ररताश्चो
सर्वि प्रजानथ शून्यक धर्मान् ॥ ८३ ॥

वीर्यु जनेथ अलीन अदीनाः
ध्यानरताः प्रविवेकरताश्च ।
प्रज्ञ प्रजानथ प्रज्ञविशुद्धिं
भेष्यथ कारुणिका नचिरेण ॥ ८४ ॥

रागु शमेथ सदा अशुभा ये
दोषु निगृह्य क्षान्तिबलेन ।
मोहु निगृह्य प्रज्ञबलेना
प्राप्स्यथ बोधि जिनानु प्रशस्ताम् ॥ ८५ ॥

कायु विभावयथा यथ फेनं
दुःखमसारकु पूतिदुर्गन्धम् ।
स्कन्ध प्रजानथ रिक्तक सर्वां-
ल्लप्स्यथ ज्ञानमनुत्तरु क्षिप्रम् ॥ ८६ ॥

दृष्टि म गृह्णथ पापिक जातु
आत्म अयं पुरुषो अथ जीवः ।
सर्वि प्रजानथ शून्यक धर्मान्
क्षिप्र स्पृशिष्यथ उत्तमबोधिम् ॥ ८७ ॥

लाभ म कुर्वथ गृद्धो कदाचित्
मा परितप्यथ पिण्डमलब्ध्वा ।
निन्दित शंसित मा खु चलेथा
मेरुसमाश्च अकम्पिय भोथा ॥ ८८ ॥

१ Dutt °निरातु against Mss २ A करुणया चरथ for सर्वि प्रजानथ. ३ A निरयगत for पिण्डमलब्ध्वा.

भिक्षु अभूत्तद मंकुशरीरा
ये उपलम्भिक शाठगृहीताः ।
भूयु न शक्युपसंक्रमणाये
त्रस्त अभूत् सुमहाद्भुतजाताः ॥ ५९ ॥

N 578 5
ये पुन श्राद्ध प्रसन्न मुनीन्द्रे
येषिह रोचति शून्यत शान्ता ।
तेहि हुंकारसहस्र करित्वा
दूष्यशतैरभिछादित भिक्षुः ॥ ६० ॥

भिक्षु जनित्वन मैत्र तेषु
10 सर्वजनस्य पुरस्त भणाति ।
ये मयि सत्व प्रदोष करोन्ती
तेष कृते न हु बोधि चरामि ॥ ६१ ॥

तेन च वर्ष अशीतिरनूना
भाषित शून्यत क्षेत्रु जिनानाम् ।
15 भिक्षुसहस्र प्रत्यर्थिक आसन्
ये च निवारित राजसुतेन ॥ ६२ ॥

सोऽपि तदा परिभूत अभूषी
तस्य च भिक्षु परीत्तकु आसन् ।
वाचमनिष्ट तदा शृणमानः
20 क्षान्तिबला च्युत नो च कदाचित् ॥ ६३ ॥

N 579
सोऽपरेण च पुन. समयेन
प्राणिशतान करी महदर्थम् ।
शीलमखिलमनुस्मरमाण
पुण्यमतिस्य तदा भणि वाचम् ॥ ६४ ॥

25 तत्र स गौरवु कृत्व उदारं
पुण्यमती अवची तद भिक्षुम् ।
मा मम केनचिदाचरियस्यो
चेतसि किंचि कृतं अमनापम् ॥ ६५ ॥

सो अवची शृणु राजकुमारा
30 क्षान्तिबलेन समुद्गत बुद्धाः ।

१ A ये न च, B ये नर for ये पुन २ AB भिक्षुसहस्रालम्भक आसीत् for the line. ३ Mss. येन for ये च. ४ AB धर्ममचिन्त्य° for शीलमखिल° ५ ABT पुण्यमती जनयी मह प्रेमे.

येन नि भाषित वाचमनिष्टा-
स्तस्यिपि अन्तिकि मैत्र उदारा ॥ ६६ ॥

येन स कल्पसहस्रशतानि
क्षान्ति निषेवित पूर्वभवेषु ।
सो अहु भिक्षु यशःप्रभु आसं
शाक्यमुनिर्भगवान् भणि वाचम् ॥ ६७ ॥

येन यशःप्रभु रक्षितु भिक्षुः
पुण्यमती तद राजितु पुत्रः ।
जातिसहस्र ममासि सहायः
सो मय व्याकृतु मैत्रकु बुद्धः ॥ ६८ ॥

येन गणेश्वर पूजितु शास्ता
येन तु कारित श्रेष्ठ विहाराः ।
पूर्वमसौ वरपुण्यसुनामा
सो पदुमोत्तरु आसि मुनीन्द्रः[1] ॥ ६९ ॥

एव मया बहुकल्प अनन्ता
धारयितामिमु धर्म जिनानाम् ।
क्षान्तिबलं समुदानित पूर्वे
श्रुत्व कुमार ममा अनुशिक्षाः ॥ ७० ॥

निर्वृतिमप्यय मेष्यति एवं
पश्चिमि कालि सद्धर्मविलोपे ।
भिक्षु व तीर्थमतेष्वभियुक्ता
ते मम धर्म प्रतिक्षिपि शान्तम् ॥ ७१ ॥

उन्नत उद्धत दुष्ट प्रगल्भा
पापसहायक भोजनलुब्धा ।
चीवरपात्ररताः पटलुब्धा
लाभसंनिश्रित ते क्षिपि धर्मम् ॥ ७२ ॥

दुष्टप्रदुष्टमना अकृतज्ञा
हीनकुलेषु दरिद्रकुलेषु ।
प्रव्रजिता इह शासनि मह्यं
तेऽपि प्रतिक्षिपि शान्तमु धर्मम् ॥ ७३ ॥

[1] A नरेन्द्रा ; B नरेन्द्रः for मुनीन्द्रः.

धर्मं गवेषथ गौरवजाताः
श्रुत्व तदापि च तत्पर भोथ।
तिष्ठत गोचरि सर्वजिनानां
यास्यथ क्षिप्र सुखावतिक्षेत्रम्॥ ८९॥

5 सर्वजगे समचित्त भवित्वा
अप्रिय मा प्रिय चित्त करोथ।
N 585 मा च गवेषथ लाभु यशो वा
क्षिप्र भविष्यथ बुद्ध मुनीन्द्राः॥ ९०॥

बुद्धगुणांश्च प्रभापय नित्यं
10 भूतगुणेहि निरुक्तिपदेहि।
यान् गुण श्रुत्विह सत्त्व प्रसन्नाः
बुद्धगुणेषु स्पृहां जनयेयुः॥ ९१॥

नित्य सगौरव चाचरियेषु
मातु पितुस्तथ सर्वजगस्मिन्।
M मा पुन मानवशानुग भोथा
लप्स्यथ लक्षण त्रिंश द्वुवे च॥ ९२॥

संगणिकां विजहित्व अशेषां
नित्यु विवेकरतापि च भोथ।
सूरत नित्युपशोभन शान्ता
20 आत्महिताः परसत्त्वहिताश्च॥ ९३॥

मैत्रि निषेवि तथा करुणां चो
मुदितुपेक्षरताः सद भोथ।
शास्तुः प्रशासनु पश्यथ नित्यं
भेष्यथ क्षिप्र हितंकर लोके॥ ९४॥

M 286 25 पापक मित्र म जातु भजेथ
सेवथ मित्र ये भोन्ति उदाराः।
येषिह रोचति शून्यत शान्ता
ये अभिप्रस्थिता उत्तमबोधिम्॥ ९५॥

श्रावकभूमि म शिक्षथ जातु
30 मा च स्पृहेष्यथ तत्र चरीये।

१ AC प्रभावति for प्रभापय. २ AB स्पृहेषथ for स्पृहेष्यथ.

चित्तु म रिञ्चथ बुद्धगुणेषु
    क्षिप्र भविष्यथ बुद्ध जिनेन्द्राः ॥ ९६ ॥
सत्य गिरं सद भाषथ शुद्धां
    मा मृष भाषथ मा परुषं च ।
नित्य प्रियं मधुरं च भणेथा
    लप्स्यथ वाच ओभाचरियाणाम् ॥ ९७ ॥
कायि अनर्थिक जीवित भोथा
    मात्मउत्कर्षक मा परपंसी ।
आत्मगुणान् समुदानयमानाः
    परचरियासु उपेक्षक भोथ ॥ ९८ ॥
शून्यविमोक्षरताः सद भोथा
    मा प्रणिधान करोथ गतीषु ।
सर्वनिमित्त विवर्ज्य अशेषां
    भोथ सदा अनिमित्तविहारी ॥ ९९ ॥
अन्त विवर्जयथा सद कालं
    शाश्वतुच्छेदस्थिता म भवाथ ।
प्रत्ययता सद बुध्यत सर्वे
    एव भविष्यथ यादृश शास्ता ॥ १०० ॥
कामरतीषु रतिं विजहित्वा
    दोषखिलांश्च मलान् विजहित्वा ।
मोहतमो विजहित्वसि सर्वे
    शान्तरता नरसिंह भवाथ ॥ १०१ ॥
नित्यमनित्य च पश्यथ नित्यं
    सर्वभवा सुखदुःख विमुच्य ।
अशुभमनात्मत आत्मशुभेषु
    भावयमानु भवेथ नरेन्द्रः ॥ १०२ ॥
लोकप्रदीपकरेभि जिनेभि-
    र्यैरिह योनिशो धर्म श्रुणीत ।
तैरिह मारबलानि हनित्वा
    प्राप्तमनुत्तरबोधिवराग्रा ॥ १०३ ॥

१ A उपेक्ष करोथा for उपेक्षक भोथ. २ AB विजहित्व for °त्वसि. ३ A प्राप्त उदारा अनुत्तर बोधि. for the line.

यात्तक भाषित एति गुणा मे
ये च प्रकाशित दोषशता मे ।
दोष विवर्जिय शिक्ष गुणेषु
मेष्यसि बुद्ध तदेह कुमार ॥ १०४ ॥

इति श्रीसमाधिराजे यशःप्रभपरिवर्तः सप्तत्रिंशतितमः ॥ ३७ ॥

## कायवाङ्मनःसंवरपरिवर्तः* ।

N 589

तस्मात्तर्हि कुमार कायसंवरसंवृतो भविष्यामीत्येवं त्वया कुमार शिक्षितव्यम् । तत्र कुमार कतमः कायसंवरः ? येन कायसंवरेण समन्वागतो बोधिसत्त्वो महासत्त्वः सर्वधर्मेष्वसङ्गज्ञानं प्रतिलभते, अयमुच्यते कुमार कायसंवर इति । येन कायसंवरेण समन्वागतो बोधिसत्त्वो महासत्त्वो द्वात्रिंशन्महापुरुषलक्षणानि प्रतिलभते, अयमुच्यते....इति । येन....महासत्त्वो दश तथागतबलानि चत्वारि वैशारद्यानि अष्टादशावेणिकान् बुद्धधर्मान् प्रतिलभते, अयमुच्यते.... इति । येन...., 5 महासत्त्वस्त्रीणि विमोक्षमुखानि प्रतिलभते । कतमानि त्रीणि ? यदुत शून्यतामनिमित्तमप्रणिहितम् । इमानि त्रीणि विमोक्षमुखानि, अयमुच्यते....इति । येन....महासत्त्वश्चतुरो ब्राह्मान् विहारान् प्रतिलभते । कतमांश्चतुरः ? यदुत मैत्रीं करुणां मुदितामुपेक्षां इमांश्चतुरो ब्राह्मान् विहारान्, अयमुच्यते....इति । येन....महासत्त्वश्चतस्रः प्रतिसंविदः प्रतिलभते । कतमाश्चतस्रः ? यदुत अर्थप्रतिसंवित् धर्मप्रतिसंवित् निरुक्तिप्रतिसंवित् प्रतिभानप्रतिसंवित् । इमाश्चतस्रः प्रतिसंविदः, 10 N 590 अयमुच्यते....इति । येन महासत्त्वः सप्तत्रिंशद्बोधिपक्षान् धर्मान् प्रतिलभते । कतमान् सप्तत्रिंशत् ? यदुत चत्वारि स्मृत्युपस्थानानि । चत्वारि सम्यक्प्रहाणानि । चतुर ऋद्धिपादान् । पञ्चेन्द्रियाणि । पञ्च बलानि । सप्त बोध्यङ्गानि । आर्याष्टाङ्गिकं मार्गम् । इमान् सप्तत्रिंशद्बोधिपक्षान् धर्मान् प्रतिलभते । अयमुच्यते.... इति । येन....महासत्त्वो महाकरुणाविहारं प्रतिलभते । महोपेक्षाविहारं प्रतिलभते, क्षेमांश्च वितर्कान् प्रतिलभते । प्रविवेकांश्च धर्मान् प्रतिलभते । अयमुच्यते काय- 15 संवर इति ॥

पुनरपरं कुमार येन कायसंवरेण समन्वागतो बोधिसत्त्वो महासत्त्वः प्राणातिपातात् प्रतिविरतो भवति । अदत्तादानात् अब्रह्मचर्यान्मृषावादात् पिशुनवचनात् परुषवचनात् संभिन्नप्रला- N 591 पात् अभिध्यायाद् व्यापादान्मिथ्यादृष्टेः प्रतिविरतो भवति । तुलाकूटान्मानकूटात्कांस्यकूटात् कर्पण- वन्धनरोधनताडनच्छेदनभेदनविपरामोषालोपसाहसेभ्यः प्रतिविरतो भवति । न हस्तलोलः न 20 पादलोलो हस्तपादसंयतः । तस्य सर्वं कायवाङ्मनोदौष्ठुल्यं प्रहीणं भवत्युच्छिन्नमूलं तालमस्तक- वदायत्यामनुत्पादधर्मि । अयमुच्यते कुमार कायसंवर इति । तदनेनापि ते कुमार पर्यायेणैवं वेदितव्यम् ॥

N 592

भूतपूर्वं कुमार अतीतेऽध्वन्यसंख्येये कल्पे असंख्येयतरे विपुले अप्रमाणे अचिन्त्ये अपरिमाणे यदासीत् । तेन कालेन तेन समयेन ज्ञानप्रभासो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोक 25

---

* In B, this chapter is divided into three chapters, viz., कायसंवरः, वाक्संवरः and मनःसंवरः, while the other two Mss. put the matter into one chapter. १ Before तस्मात्, AB read : तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म. २ After कुमार, B adds सदा. ३ B reads महा before ब्रह्म. मैत्री, करुणा, मुदिता and उपेक्षा. ४ After 'विहारं AB add : महाकरुणाविहारं and महामुदिताविहारं. ५ Mss. वितर्कान् for धर्मान्. ६ A अभिध्यायाः for 'ध्यायात्. ७ AC 'वस्त्र'; B 'वस्तु' for कांस्य which is confirmed by T. ८ Mss. 'धर्षन' for 'बन्धन'. ९ A 'तर्जन' for 'छेदन'. १० After अचिन्त्ये, A adds अतुल्ये.

उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । तेन खलु पुनः कुमार कालेन तेन समयेन तस्य भगवतो ज्ञानप्रभासस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य षष्टिवर्षकोट्यः आयुष्प्रमाणमभूत् । षष्टिरर्हत्कोट्यः श्रावकसंघोऽभूत् । अप्रमेयाश्च बोधिसत्त्वा महासत्त्वाः सद्धर्मपरिग्राहका अभूवन् ॥

5 तेन च कुमार कालेन तेन समयेन राजाभूद्विशेषचिन्ती नाम । अथ खलु राजा विशेषचिन्ती अशीत्या प्राणिकोटिभिः सार्धं तथागतमुपसंक्रान्तः । उपसंक्रम्य तस्य तथागतस्य पादौ शिरसाभिवन्द्य भगवन्तं त्रिः प्रदक्षिणीकृत्यैकान्ते न्यषीदत् । एकान्तनिषण्णश्च राजा विशेषचिन्ती तं तथागतं पर्युपास्ते । अथ खलु कुमार ज्ञानप्रभासस्तथागतोऽर्हन् सम्यक्संबुद्धो राज्ञो विशेषचिन्तिनः सपरिवारस्याध्याशयं विदित्वा इतो धर्मपर्यायादिमं कायसंवरसमाधि-
10 मुखप्रवेशं गाथाभिगीतेन देशयति[1]–

यथान्तरीक्षं गगनं विशुद्ध-
मत्यन्तशुद्धं प्रकृतिप्रभास्वरम् ।
N 593 एमेव शुद्धो अयु कायसंवरो
न शक्यु घोषेण कदाचि देशितुम् ॥ १ ॥
15 विविक्तु शून्यो अयु कायसंवरो
एतादृशे ते लभि कायलक्षणे ।
अलक्षणास्ते यथ अन्तरीक्षं
तल्लक्षणो देशितु कायसंवरः ॥ २ ॥
यो जानती संवरमेवलक्षणं
20 न तस्य जातु भवती नसंवरः[2] ।
ये[3] चाप्रवृत्ताः कुतु तेष गोचरो
अनास्रवस्यो उपपत्ति नास्ति ॥ ३ ॥
न शक्यु[4] कामान् प्रतिसेवमानै
रूपेषु भोगेषु जहित्व[5] तृष्णाम् ।
25 भवेषु दोषानविजानमानै-
र्न शक्यु ज्ञातुमयु कायसंवरः ॥ ४ ॥
N 594 अनास्रवं संवर यः प्रजानते
न तस्य भोती उपपत्ति जातु ।
अर्हन्तधर्मा इम एवरूपाः
30 न सुकरं जानितु तीर्थिकेभिः ॥ ५ ॥

---

१ AB विस्तरेण संप्रकाशयति स्म for देशयति. २ Dutt असंवरः for नसंवरः against Mss. ३ AB ये चारि वृत्ताः कुतु तेषु संवरः the line. ४ AB चक्षु for शक्यु. ५ Dutt जनित्व for जहित्व against Mss.

ये सर्वत्रैधातुकि असक्तमानसा
    न कामभोगेषु स्पृहां जनेन्ति।
राज्येन भोगैश्च न जातु अर्थिका
    ज्ञास्यन्ति ते ईदृश कायसंवरः॥ ६॥

अर्थो अयं वुच्यति कायसंवरो
    अर्थश्च शब्देन न शक्यु देशितुम्।
यो जानती ईदृशु धर्मनेत्रीं[1]
    स संवरेऽस्मिन् भवति प्रतिष्ठितः॥ ७॥

अर्थे प्रयुक्तान मयार्थु देशितो
    ये अर्थनेत्रीपरता विचक्षणाः।
अनर्थु वर्जेन्ति य अर्थयुक्ता
    ते संवरेऽस्मिन् सततं प्रतिष्ठिताः॥ ८॥

अर्थो य उक्तो हि जिनान शासने
    कथं स अर्थो भवती विजानतो।
यो अर्थनेत्रीय स्वभावु जानति
    प्रतिष्ठितः सोच्यति कायसंवरे॥ ९॥

येनानिमित्तं भवती विजानितो
    नैरात्म्यतः शून्यतु तुच्छतो वा।
न तस्य जातु भवति नैसंवर-[2]
    स्तथाहि सो शिक्षितु भूतनिश्चये॥ १०॥

आकाशमात्रानिति यः प्रजानति
    स सर्वभावेषु न जातु सज्जते।
यः सर्वभावेषु न जातु सज्जते
    स आनिमित्तं स्पृशती समाधिम्॥ ११॥

विज्ञात येनेह निरात्मधर्माः[3]
    स्वभावशून्याः प्रकृतिप्रभास्वराः।
न तस्य जातु भवती असंवर-
    स्तथाहि सो शिक्षितु[4] भूतनिश्चये॥ १२॥

यो जानती शून्यत पञ्चस्कन्धान्[5]
    विदित्व नैरात्म्यस्वभावशून्यान्।

---

१ AB धर्मनेत्री° for अर्थ°. २ Dutt असंवरः against Mss. ३ A निरात्मभावो for °धर्मा°.
४ A शिक्षि; B शिक्षित for शिक्षितु. ५ AB शून्यकु for शून्यत.

न तस्य जातु भवती असंवरो
यत् कर्म कायेन समाचरेत ॥ १३ ॥
निमित्तग्राहिस्य असंवृतस्य
य आत्मसंज्ञाय सदा प्रतिष्ठित ।
5 रूपेषु आस्वादगतस्य जन्तुन
प्रकुप्यते राग असंवृतस्य ॥ १४ ॥
ये भूतकोटीय भवन्ति शिक्षिता
गतिंगता सूरत शून्यतायाम् ।
न तेष राग पुन जातु क्षुप्यते
10 असंवरो येन व्रजेत दुर्गतिम् ॥ १५ ॥
न शक्यु कम्पेतु यथा सुमेरु
अचालिय सर्षपिपीलिकैर्महान् ।
तथा विदू भूतनयेषु शिक्षितो
रूपेहि दिव्यैरपि सो न कम्पते ॥ १६ ॥
शक्येत रङ्गैर्गगन विचित्रितु
शक्येत चाकाश गृहीतु पाणिना ।
N 597 न त्वेव शक्य स विचालनाय
रागेण दोषेण न च मारकोटिभि ॥ १७ ॥
प्रतिश्रुका[1] शक्यु गृहीतु केनचि
20 छित्वा प्रवेदयुदकस्य मध्ये ।
द्रष्टु न शक्य विह तस्य आशया
य शिक्षितो ईदृशि कायसंवरे ॥ १८ ॥
यावन्त शब्दा पृथु सर्वलोके
गृह्वित्व पेडागत शक्य कर्तुम् ।
25 न तस्य शक्य स्थितिरस्थितिर्वा
विजानितु य स्थितु कायसंवरे ॥ १९ ॥
शक्य प्रभा गृह्वितु सूर्यमण्डलात्
प्रगर्जतो मेघतु विद्युतो वा ।
N 598 न तस्य कायस्य स्वभाव ज्ञातु
30 य शिक्षित स्यादिह कायसंवरे ॥ २० ॥
जालेन पाशेन च शक्यु बधितु
चतुर्दिश वायति वातमण्डली ।

[1] Dutt प्रतिश्रुत्का against Mss

न शक्यमाजानितु तस्य कायः
प्रतिष्ठितो यो इह कायसंवरे ॥ २१ ॥
अगोचरोऽसाविह सर्वप्राणिनां
यत्र स्थितो यो त्रिदु चित्तसंयमे[1] । 5
यत्र स्थितो गोचरि कायसंवरे
न लिप्यते खमिव स लोकधर्मैः ॥ २२ ॥
शक्यं पदं पश्यितु सर्वप्राणिनां
नभे चरन्तान पृथक् चतुर्दिशम् । 10
न तस्य कायस्य न चित्तगोचरो
प्रमाणु ज्ञातुमिह शक्य येनचित् ॥ २३ ॥
एवं स्थितस्यो इह कायसंवरे
सर्वे न भोन्ति त्रिविधाः क्लिेशाः ।
प्रहीण तस्येह उपक्लिेशा- 15 N 599
स्तथा ह्यसौ शिक्षितु कायसंवरे ॥ २४ ॥
न[2] तस्य अग्निः क्रमते न शस्त्रं
तथापि अग्राह्यु स तस्य कायः ।
शान्तप्रशान्ते स्थितु सो समाधौ
तथा ह्यसौ शिक्षितु कायसंवरे ॥ २५ ॥ 20
एवं स्थितस्यो न भयं न त्रासो
न क्षोभु चित्तस्यु न चेर्ष्यु जायते ।
मुक्तः स सर्वैभिरुपद्रवेभि-
र्यः शिक्षितो तादृश कायसंवरे ॥ २६ ॥
विरस्य शत्रस्य न जातु भायति
न चाग्निमध्ये न जलस्य मध्ये । 25
सर्वेहि मुक्तः स उपद्रवेहि
य शिक्षितो ईदृश कायसंवरे ॥ २७ ॥
चौराण धूर्तान च पापकारिणा-
माशीविषामध्यगतो न भायते । 30
तथा हि तस्यो विगतात्मसंज्ञा
संज्ञाविमुक्तस्य भयं न भोति ॥ २८ ॥
भयैर्विमुक्तस्य न त्रासु जायते
असंत्रसन्तस्य न भोति इञ्जना ।

1 AB कायसंवरे for चित्तसंयमे. 2 A om. st. 25.

N 600

अनिञ्जमानस्य कुतोऽस्ति त्रासो
न मारकोटीभि स शक्यु कम्पितुम् ॥ २९ ॥
आचक्षितो देशितु संप्रकाशितो
यो बोधिसत्त्वस्य हिताय संवरः ।
5
यः शिक्षते ईदृश कायसंवरे
सो भोति नो कम्पियु मारकोटिभिः ॥ ३० ॥
सर्वेषु धर्मेषु असंङ्गज्ञानं
पूर्णा अशीतिरनुव्यञ्जनानि ।
द्वात्रिंश चो लक्षण चित्तशुद्धा
10
न दुर्लभा भोन्ति स्थितस्य संवरे ॥ ३१ ॥
य इच्छते बुध्यितु बुद्धधर्मान्
अचिन्तियान् येष प्रमाणु नास्ति ।
स शिक्षितु ईदृशु कायसंवरे
भविष्यते चेतियु सर्वलोके ॥ ३२ ॥
15
इच्छते धर्ममिमं महर्षिणां
दशो बलान् बुद्धबलानचिन्तियान् ।
स शिक्षितु ईदृश कायसंवरे
यः शिक्षितस्तस्य बला न दुर्लभाः ॥ ३३ ॥

N 601

ये चापि अष्टादश बुद्धधर्मा
20
आवेणिका येषु जिना प्रतिष्ठिताः ।
ते चापि तस्यो न भवन्ति दुर्लभा
यः शिक्षते ईदृश कायसंवरे ॥ ३४ ॥
ये सप्त बोध्यङ्ग महामहर्षिणां
प्रतिसंविदश्चो तथ ऋद्धिपादाः ।
ते चापि तस्यो न भवन्ति दुर्लभा
यः शिक्षते ईदृश कायसंवरे ॥ ३५ ॥
महाविहाराश्चतुरथ ध्याना
विमोक्षद्वाराश्च संप्रकाशिताः ।
क्षेमा वितर्का अथ प्राविवेक्या
30
न दुर्लभा भोन्ति स्थितस्य संवरे ॥ ३६ ॥
करुणाविहारी तथुपेक्षलाभी
तथ ईर्यचर्यामिह मैत्रिवराम् ।

१ A रोषो for भ्रामो २ C जना for जिना ३ AB प्राविवेका for °वेक्या

हितचित्तु भोति च स सर्वजगे
य कायसंवरि स्थितो भवति ॥ ३७ ॥

स्मृती उपस्थान प्रहाण सम्यक्
पञ्चेन्द्रिया पञ्च बला महर्षिणाम् । N 602
आर्यश्च अष्टाङ्गिकु मार्गश्रेष्ठो
न दुर्लभो शिक्षितु कायसंवरे ॥ ३८ ॥

ये चापि अन्ये वर बुद्धधर्मा
अचिन्तिया येष प्रमाणु नास्ति ।
ते तस्य सर्वे न भवन्ति दुर्लभा
य शिक्षते ईदृश कायसंवरे ॥ ३९ ॥

श्रुत्वा ईहो ईदृश कायसंवरो
विशेषप्राप्तो अमु राजपुत्र ।
तुष्टो उदग्रो अतुलाय प्रीतिया
स प्रव्रजी तस्य जिनस्य शासने ॥ ४० ॥

स प्रव्रजित्वा दश वर्षकोटी
स्थोपि शुद्ध वर ब्रह्मचर्यम् ।
भावेत्व ध्यानान् चतुरो विहारा
नर्थाय लोकस्य सदेवकस्य ॥ ४१ ॥

सुभाविता ब्रह्मविहार कृत्वा N 603
अद्राक्षि बुद्धान अशीतिकोटिय ।
ततोत्तरे यात्तिक गङ्गवालिका
इद चर सो वर ब्रह्मचर्यम् ॥ ४२ ॥

सर्वेष चो शासनि प्रव्रजित्वा
अचार्षि शुद्ध वर ब्रह्मचर्यम् ।
भिक्षु अभूषी वर धर्मभाणको
बहुश्रुतश्चो प्रतिभानवांश्च ॥ ४३ ॥

अखण्डशीलश्च अच्छिद्रशीलो
विशुद्धशीलो अकल्माषशील ।
आर्ये च शीले स अनास्रवे स्थित
प्रजानमानो इमु कायसंवरम् ॥ ४४ ॥

१ Dutt आर्य against MSS २ AB श्रेष्ठमार्ग for मार्गश्रेष्ठो ३ AB इम for ईहो ४ AB राजकुमार for °पुत्र ५ AB आचार्षि for अचार्षि ६ B अभाविता for सु° ७ AB सहस्रकोटिय for अशीति°

सिया कुमारा तत्र अन्य सासीद्
विशेषचिन्ती तद राजकुञ्जर ।
न एव द्रष्टव्यमिहान्यु सोऽभू-
त्तदाहमास चरमाणु चारिकाम् ॥ ४५ ॥

5 तस्मात् कुमारा मम शिक्षमाणा
प्रतिष्ठिहेसी इह कायसंवरे ।
N 604 अन्येष चो देशय प्राणकोटिना
नचिरेण त्व मेष्यसि यादृशोऽहम् ॥ ४६ ॥

तस्मात्तर्हि[1] कुमार परिशुद्धकायसमाचारो[3] भविष्यामीत्येवं त्वया कुमार शिक्षितव्यम्। तत्
10 कस्य हेतो ? परिशुद्धकायसमाचारो हि कुमार बोधिसत्त्वो महासत्त्वो न निरयेभ्यो बिभेति। न तिर्यग्योनेर्न यमलोकान्न सर्वदुर्गतिभ्यो बिभेति। नोदकाद् बिभेति[4]। न शस्त्रतो न सिंहेभ्यो[5] न व्याघ्रेभ्यो न ऋक्षेभ्यो न हस्तिभ्यो नर्षभेभ्यो न मनुष्येभ्यो बिभेति। परिशुद्धकायसमाचार कुमार बोधिसत्त्वो महासत्त्व इममपि त्रिसाहस्र महासाहस्र लोकधातु करतले कृत्वा तालमात्र द्वितालमात्र त्रितालमात्रं चतुस्तालमात्र पञ्चतालमात्र षट्तालमात्र सप्ततालमात्रमुत्क्षिपेत्। यावन्त
15 वा पुनराकाङ्क्षेत्तावन्तमेवोत्क्षिपेत् ॥

N 605 पुनरपर परिशुद्धकायसमाचार कुमार बोधिसत्त्वो महासत्त्व ऋद्धिप्रातिहार्ये परमपारमिप्राप्तो भवति। स ऋद्धिपादविपाकविशुद्ध पुण्यपरिगृहीतो विवेकविविक्त सर्वत्रानुगत एतत्समाधिप्रतिलब्ध अनास्रवपुण्यपरिनिष्पन्न सर्वलोकधातावप्रतिहतचक्षु एवरूपै ऋद्धिप्रातिहार्यैः समन्वागतो भवति। तत्र कतमा ऋद्धि ? यया ऋद्ध्या प्रार्थनासमृद्धिपरिनिष्पत्ति। इयमुच्यते
20 ऋद्धिरिति। तत्र कतमद् ऋद्धिप्रातिहार्यम् ? यया ऋद्ध्या समन्वागतो बोधिसत्त्वो महासत्त्व अनेकविधामृद्धिविधियान् प्रत्यनुभवति। एकोऽपि भूत्वा बहुधा भवति, बहुधापि भूत्वैको भवति। आविर्भाव तिरोभावमपि प्रत्यनुभवति। तिर कुड्य तिर प्राकार तिर पर्वतमप्यसज्जमानो गच्छति। आकाशेऽपि क्रमते तद्यथापि नाम पक्षी शकुनि। पृथिव्यामप्युन्मज्जननिमज्जन करोति तद्यथापि नामोदके। उदकेऽप्यभिद्यमानो गच्छति तद्यथापि नाम पृथिव्याम्। धूमायत्यपि
N 606 25 प्रज्वलत्यपि तद्यथापि नाम महानग्निस्कन्ध[6]। इमावपि चन्द्रसूर्यावेवमहर्द्धिकावेवमहानुभावौ एवमहौजस्कौ पाणिना परामृशति परिमार्जति[7]। आकाङ्क्षमाणो यावद् ब्रह्मलोकादपि सत्त्वान् कायेन वशे वर्तयति ॥

---

[1] After st. 46, B adds श्रीसमाधिराजे कायसंवरे परिवर्तो अष्टत्रिंशतितम [2] Before तस्मात्, AB read तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म [3] AB °समुदाचारो for °समाचारो [4] After बिभेति AB add नाग्नितो बिभेति न विषतो [5] C हिंस्रेभ्यो for सिंहेभ्यो [6] After अग्निस्कन्ध, ABT add स्वकायादप्यनेकानि महावारिधारा उत्सृजति तद्यथापि नाम महामेघो याभिर्वारिधाराभिरयं त्रिसाहस्रमहासाहस्रलोकधातुरादीप्त सम्प्रज्वलित अग्निना प्रतिज्वालीभूतो निर्वाप्यते [7] A om परिमार्जति आकाङ्क्षमाणो

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत–

पृथिवीय उन्मज्ज निमज्ज गच्छती
अभिद्यमानो उदकेऽपि गच्छति ।
पक्षी यथा गगनतलेन गच्छती
धूमायते प्रज्वलते च ऋद्धिया ॥ ४७ ॥

यथान्तरीक्षस्मि न वायु सज्जते
गच्छन्ति चास्मिं बहवोऽभ्रकूटा ।
तथैव[१] योगी गगनेन गच्छती
असज्जमानो यथ वातमेवं ॥ ४८ ॥[२]

यथा निषण्णो[३] विदु योगि[४] मोती
परिमार्जते[५] पाणिन चन्द्रसूर्यौ ।
आसन्न सो जानति ब्रह्मलोक
ब्रह्माण कोटीन[६] स धर्म देशयी ॥ ४९ ॥

यदा च आकाङ्क्षति धर्म भाषितु
महात्रिसाहस्र स विज्ञपेति ।
आकाङ्क्षमाणो बहुक्षेत्रकोटिषु
देशेति धर्म बहुसत्त्वकोटिनाम् ॥ ५० ॥

तस्मात्तर्हि[७] कुमार परिशुद्धकायसमुदाचारो भविष्यामीत्येवं त्वया कुमार शिक्षितव्यम् । तत् कस्य हेतोः ? परिशुद्धकायसमुदाचारो हि कुमार बोधिसत्त्वो महासत्त्वो दिव्येन श्रोत्रधातुना अतिक्रान्तमानुषकेण शब्दान् शृणोति दिव्यान् मानुष्यकांश्च । नैरयिकानामपि तिर्यग्योनिगतानामपि यामलौकिकानामपि । ये दूरे अन्तिके वा देवानां च मनुष्याणां वा दूरावचराणां वा अन्तिकावचराणां वा ॥[८]

तस्मात्तर्हि कुमार परिशुद्धकायसमुदाचारो भविष्यामीत्येवं त्वया कुमार शिक्षितव्यम् । तत् कस्य हेतोः ? परिशुद्धकायसमुदाचारो हि कुमार बोधिसत्त्वो महासत्त्वः परसत्त्वानां परपुद्गलानां चेतसैव चेतःपरिवितर्कितविचरितानि[९] यथाभूतं प्रजानाति । सरागं चित्तं सरागं चित्तमिति यथाभूतं प्रजानाति । वीतरागं चित्तं वीतरागं चित्तमिति यथाभूतं प्रजानाति । पेयालं । सदोषं

---

१ C तत्रैव for तथैव   २ After st 48 A adds
अभीन सप्रज्वलितान् प्रदीप्तान् इमि लोकधातून् विदु बोधिसत्त्व ।
प्रमुचि सो वारि स्वकातु कायान्निर्वापयी येन स क्षेत्रकोटी ॥
३ C विपण्णो for निषण्णो   ४ AB बोधिसत्त्वो for योगि मोति   ५ C परिवर्जते for परिमार्जते
६ A सर्वप लोकान for ब्रह्माण कोटीन   ७ Before तस्मात् A adds तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म ।   ८ AB om from देवानां up to अन्तिकावचराणां वा, and add a passage given in App I No (37)   ९ AB °परिवितर्कणि for °वितर्कचरितानि

वाक्संवर । परिशुद्धवाक्संवरो हि कुमार बोधिसत्त्वो महासत्त्वः सर्वापायेभ्यो न बिभेति। सर्वबुद्ध धर्मान् प्रतिलभते । सर्वबुद्धर्द्धि सर्वाभिज्ञा प्रतिलभते ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत–

येनेह वाक्संवरणेनुपेतो
लभन्ति यश स हि बोधिसत्त्व ।
सर्वेषु धर्मेषु असङ्गज्ञान
अय हि सो उच्यति वाचसवरं ॥ ५७ ॥

येनेह वाक्संवरणेन धीरा
लभन्ति द्वात्रिंशति लक्षणानि ।
दशो बलान्यावेणिकबुद्धधर्मा
नय हि सो उच्यति वाचसवर ॥ ५८ ॥

येनेह वाक्संवरणेन धीमान्
प्राप्नोति सर्वानिम बुद्धधर्मान् ।
ये पूर्वमस्मिन् परिकीर्तिता मे
अय हि सो उच्यति वाचसवर ॥ ५९ ॥

येनेह वाचासवरणेन धीमान्
लभेद्विहारान् प्रतिसंविदश्च ।
अत्यद्भुतान् धर्म अचिन्तियाश्च
अयं हि सो उच्यति वाचसवर ॥ ६० ॥

येनेह वाचासवरणेन धीमान्
स्मृत्युपस्थानानि सम्यक्प्रहाणा ।
तथर्द्धिपादान् बलेन्द्रियाणि
लभत्यय सोच्यति वाचसवर ॥ ६१ ॥

येनेह वाक्संवरणेन धीमान्
महाउपेक्षा लभते विशारद ।
महाकृपा शुद्धविहारता च
अय हि सो उच्यति वाचसवर ॥ ६२ ॥

येनेह वाक्संवरणेन धीमान्
क्षेमान् वितर्कांल्लभते विशुद्धान् ।

1 A om from प्रतिलभते upto धर्मान् in line 3 of st 58 २ After st 57, ABT add
येनेह वाक्संवरणेन धीमाल्लभते पञ्चाङ्गसमानसुरूपम् ।
असङ्गस्वरमावन्त्ययोपमम हि सो उच्यति वाचसवर ॥
३ AB सर्वजिद्द for सर्वानिम ४ ABT वाक्संवरणेन for वाचासवरणेन ५ A प्रविवेकशान्तं for लभते विशुद्धान्

तथा वितर्कान् प्रविवेकशान्ता-
    नयं हि सो उच्यति वाचसंवरः ॥ ६३ ॥
येनेह वाक्संवरणेन धीमान्
    मृषा न भाषी पिशुनांश्च[1] वाचः ।
संभिन्नप्रलापं परुषां[2] च वाचं
    अयं खु सो उच्यति वाचसंवरः ॥ ६४ ॥
येनेह वाक्संवरणेन धीमान्
    सद्धर्मक्षेपं न करोति जातु ।
न बुद्धसंघं च अभ्याचक्षेत[3]
    अयं खु सो उच्यति वाचसंवरः ॥ ६५ ॥
येनेह वाक्संवरणेन धीमान्
    मातापितॄणाचरियानमन्तिके ।
असत्यवाचं पुरतो न भाषी
    अयं खु सो उच्यति वाचसंवरः ॥ ६६ ॥
येनेह वाक्संवरणेन धीमान्
    या[4] अन्यवाचो इह दोषसंहिताः ।
ताभ्योऽप्यशेषं विरतः स भोति
    अयं खु सो उच्यति वाचसंवरः ॥ ६७ ॥
येनेह वाक्संवरणेन धीमान्
    प्रतिश्रुत्कासंनिभतां पि वाचम् ।
सुपिनोपमामोतरते[5] विशारदो
    अयं खु सो उच्यति वाचसंवरः ॥ ६८ ॥
निरात्मनिर्जीवनिरीहतां वा
    प्रतीत्युत्पन्नां सुपिनोपमां मृषा ।
यदेव वाचोत्तरि बोधिसत्त्वो
    अयं खु सो उच्यति वाचसंवरः ॥ ६९ ॥
निरोधसत्यं[6] सुपिनं यथैव
    स्वप्नसमाना अथ निर्वृतिं च ।
यदेव वाचोत्तरि बोधिसत्त्वो
    अयं खु सो उच्यति वाचसंवरः ॥ ७० ॥

---

१ A परुषां for पिशुनां. २ A पिशुनां for परुषां. ३ AB प्रतिक्षिपेत for अभ्याचक्षेत. ४ A om. from या अन्यवाचो upto धीमान् in 1st line of st. 68. ५ AB सो भवती for ओतरते. ६ A नित्य for °सत्यं.

वीतदोषं समोहं वीतमोहं[1] सोपादानमनुपादानं[2] संक्षिप्तं विक्षिप्तं विपरीतमविपरीतं सक्लेशं निष्क्लेशं महद्गतममहद्गतं प्रभास्वरमप्रभास्वरं सप्रमाणमप्रमाणं सोत्तरमनुत्तरं समाहितमसमाहितं विमुक्तमविमुक्तं साङ्गणं चित्तं साङ्गणं चित्तमिति यथाभूतं प्रजानाति । अनङ्गणं चित्तमनङ्गणं चित्तमिति यथाभूतं प्रजानाति । इति हि सर्वसत्त्वानां परपुद्गलानां चेतसैव चेतःपरिवितर्कं[3] यथाभूतं
5 प्रजानाति ॥

परिशुद्धकायसमुदाचारः कुमार बोधिसत्त्वो महासत्त्वः साकारं सोद्देशमनेकविधं पूर्वेनिवासमनुस्मरति । एकामपि जातिमनुस्मरति । द्वे तिस्रः पञ्च दश विंशतिं त्रिंशत् चत्वारिंशत् पञ्चाशत् जातिशतमप्यनुस्मरति । जातिसहस्रमप्यनुस्मरति । जातिशतसहस्रमपि यावदनेकान्यपि कल्पकोटिनियुतशतसहस्राण्यनुस्मरति । संवर्तकल्पमप्यनुस्मरति विवर्तकल्पमपि ।
10 यावदनेकानपि संवर्तविवर्तकल्पाननुस्मरति । कल्पमप्यनुस्मरति कल्पशतमपि कल्पसहस्रमपि कल्पशतसहस्रमपि, यावदनेकान्यपि कल्पकोटीनियुतशतसहस्राण्यनुस्मरति । यावत् पूर्वान्तकोटीमप्यनुस्मरति । अमुत्राहमासमेवंनामा एवंगोत्र एवंजात्य एवंवर्ण एवमाहार एवमाजीव एवमायुःप्रमाण एवंचिरस्थितिक एवंसुखदुःखप्रतिसंवेदी । ततश्च्युतः अमुत्रोपपन्नः । सोऽहं ततश्च्युत इहास्म्युपपन्न इति । साकारं सनिमित्तं सोद्देशमनेकविधं पूर्वेनिवासमनुस्मरति ॥

15 परिशुद्धकायसमुदाचारः कुमार बोधिसत्त्वो महासत्त्वो दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेण सत्त्वान् पश्यति च्यवमानानुपपद्यमानान् सुवर्णान् दुर्वर्णान् सुगतान् दुर्गतान् हीनान् प्रणीतान् सुगतिमपि गच्छतो दुर्गतिमपि गच्छतो यथाकर्मोपगान् सत्त्वान् यथाभूतं प्रजानाति—इमे बत[4] सत्त्वाः कायदुश्चरितेन समन्वागता वाग्दुश्चरितेन समन्वागता मनोदुश्चरितेन समन्वागता आर्याणामपवादका मिथ्यादृष्टिका मिथ्यादृष्टिकर्मसमादानहेतोः कायस्य भेदात् परं मरणादपाय
20 दुर्गतिं विनिपातं निरयेषु उपपन्नाः । इमे पुनर्बत सत्त्वाः कायसुचरितेन समन्वागता वाक्सुचरितेन समन्वागता मनःसुचरितेन समन्वागता आर्याणामनपवादकाः सम्यग्दृष्टिकर्मसमादानहेतोः कायस्य भेदात् परं मरणात् सुगतौ स्वर्गलोके देवेषूपपन्ना । इति[5] हि दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेण सत्त्वान् पश्यति च्यवमानानुपपद्यमानान् सुवर्णान् दुर्वर्णान् हीनान् प्रणीतान् सुगतिमपि गच्छतो दुर्गतिमपि गच्छतो यथाकर्मोपगान् सत्त्वान् यथाभूतं प्रजानाति ॥

25 परिशुद्धकायसमुदाचारः कुमार बोधिसत्त्वो महासत्त्व एकक्षणसमायुक्तया प्रज्ञया यत् किंचिज्ज्ञातव्यमधिमोक्तव्यं[6] विकुर्वितव्यं तत्सर्वं यथाभूतं प्रजानाति शृणोति पश्यते बुध्यते ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत—

अभिज्ञाक्रमनिर्दिष्टो बोधिसत्त्वान तायिनाम् ।
समाधीय स्थिहित्वान बोधिसत्त्वोऽधिगच्छति ॥ ५१ ॥

N 609 N 610 N 611 N 612 N 613

---

१ After वीतमोहं, AB add सतृष्णं वीततृष्णं २ AB वीतोपादान for अनुपा°. ३ AB om from इति up to प्रजानाति ४ Mss भवन्त for बत ५ In A the portion from इति हि upto st 56 below is substituted by a passage given in App I (No 38) ६ After ज्ञातव्यं ABT add द्रष्टव्यं श्रोतव्यं बोधिमभिसंबोद्धव्यं

श्रोत्रं च ते विशोधेन्ति दिव्यं श्रोत्रमचिन्तियम् ।
येन शृण्वन्ति ते धर्मान् सर्वबुद्धेहि भाषितान् ॥ ५२ ॥
सरागमसरागं वा सदोषं वीतदोषकम् ।
समोहं वीतमोहं वा चित्तं जानन्ति प्राणिनाम् ॥ ५३ ॥[1]
पूर्वेनिवासं जानन्ति यत्र ते उषिताः पुरा ।
कल्पकोटीसहस्राणि सङ्गस्तेषां न विद्यते ॥ ५४ ॥
चक्षुश्च ते विशोधेन्ति दिव्यं चक्षुरनुत्तरम् ।
अनुपश्यन्ति ते सत्त्वांश्च्यवतोऽप्युपपद्यतः ॥ ५५ ॥
एकक्षणसमायुक्तप्रज्ञया सर्वजातिषु ।
यत् किंचिदिह ज्ञातव्यं धर्माणां भूतलक्षणम् ॥ ५६ ॥

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म — तस्मात्तर्हि कुमार वाक्संवरसंवृतो भविष्यामीत्येवं बोधिसत्त्वेन महासत्त्वेन शिक्षितव्यम् । तत्र कुमार कतमो वाक्संवरः ? येन वाक्संवरेण समन्वागतो बोधिसत्त्वो महासत्त्वः षष्ट्याकारसमन्वागत- (N 614) मसङ्गबुद्धस्वरघोषमचिन्त्यं प्रतिलभते । अयमुच्यते कुमार वाक्संवरः । येन वाक्संवरेण समन्वागतो बोधिसत्त्वो महासत्त्वः आदेयवाक्यतां प्रतिलभते । अयमुच्यते कुमार वाक्संवरः । येन वाक्संवरेण समन्वागतो बोधिसत्त्वो महासत्त्वः द्वात्रिंशन्महापुरुषलक्षणानि प्रतिलभते । दश तथागतबलानि, चत्वारि तथागतवैशारद्यानि, अष्टादशावेणिकान् बुद्धधर्मान् प्रतिलभते । अयमुच्यते कुमार वाक्संवरः । येन वाक्संवरेण समन्वागतो बोधिसत्त्वो महासत्त्वस्त्रीणि विमोक्षमुखानि प्रतिलभते, चतुरो ब्रह्मविहारान् प्रतिलभते । अयमुच्यते कुमार वाक्संवरः । येन वाक्संवरेण समन्वागतो बोधिसत्त्वो महासत्त्वश्चत्वारि स्मृत्युपस्थानानि प्रतिलभते । चत्वारि सम्यक्प्रहाणानि, चतुर ऋद्धिपादान्, पञ्चेन्द्रियाणि, पञ्च बलानि, सप्त बोध्यङ्गानि, आर्याष्टाङ्गं मार्गं प्रतिलभते । अयमुच्यते कुमार वाक्संवरः । येन वाक्संवरेण समन्वागतो बोधिसत्त्वो महासत्त्वो महाकरुणा- विहारं प्रतिलभते, महोपेक्षाविहारं प्रतिलभते, क्षेमांश्च वितर्कान् प्रतिलभते, प्रविवेकांश्च वितर्कान् प्रतिलभते । अयमुच्यते कुमार वाक्संवर इति ॥

पुनरपरं कुमार वाक्संवर उच्यते — येन वाक्संवरेण समन्वागतो बोधिसत्त्वो महासत्त्वो मृषावादात् प्रतिविरतो भवति । पैशुन्यात् पारुष्यात् संभिन्नप्रलापात् प्रतिविरतो भवति । (N 615) मातापितॄणामाचार्याणां चान्तिके असभ्यां[2] वाचं न निश्चारयति । या अपि तदन्या दोषोपसंहिता वाचस्ताभ्यो बोधिसत्त्वः प्रतिविरतो भवति । तांश्च वाचः प्रतिश्रुत्कोपमा अवतरति । स्वप्नोपमा निर्मितोपमा मरीच्युपमाः प्रतिश्रुत्कोपमाः प्रतिभासोपमा मायोपमा अवतरति । स तामेवंभूतां वाचं नोपलभते, न कल्पयति, न मन्यते, नावलम्बते, नाभिनिविशते । अयमुच्यते कुमार

१ After st. 53, B adds:
महात्रिसाहस्रिय लोकधातौ ये गन्ध दिव्या धर्म सन्ति सर्वे ।
दिव्येन घ्राणेन यथा निषण्णो तां घ्रायते सो विदु बोधिसत्त्वो ॥

२ Dutt असत्यां for असभ्यां.

वाक्संवर.। परिशुद्धवाक्संवरो हि कुमार बोधिसत्त्वो महासत्त्व· सर्वापायेभ्यो न बिभेति। सर्वबुद्ध-
धर्मान् प्रतिलभते। सर्वबुद्धर्द्धिं सर्वाभिज्ञा प्रतिलभते॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत–

येनेह वाक्संवरणेनुपेतो
लभत्ययशं स हि बोधिसत्त्वः।
5 सर्वेषु धर्मेषु असङ्गज्ञान-
मयं हि सो उच्यति वाचसंवरः॥ ५७॥

येनेह वाक्संवरणेन धीरा
लभन्ति द्वात्रिंशति लक्षणानि।
10 दशो बलावेणिकबुद्धधर्मा-
नयं हि सो उच्यति वाचसंवर.॥ ५८॥

N 616 येनेह वाक्संवरणेन् धीमान्
प्राप्नोति सर्वानिम बुद्धधर्मान्।
ये पूर्वमस्मिन् परिकीर्तिता मे
15 अयं हि सो उच्यति वाचसंवर.॥ ५९॥

येनेह वाचावरणेन धीमान्
लभेद्विहारान् प्रतिसंविदश्च।
अत्यद्भुतान् धर्म अचिन्तियाश्च
अयं हि सो उच्यति वाचसंवरः॥ ६०॥

20 येनेह वाचावरणेन धीमान्
स्मृत्युपस्थानानि सम्यक्प्रहाणा।
तथर्द्धिपादान् बलइन्द्रियाणि
लभत्ययं सोच्यति वाचसंवर.॥ ६१॥

येनेह वाक्संवरणेन धीमान्
25 महाउपेक्षां लभते विशारद·।
महाकृपा शुद्धविहारता च
अयं हि सो उच्यति वाचसंवरः॥ ६२॥

N 617 येनेह वाक्संवरणेन धीमान्
क्षेमान् क्षितिर्ांल्लभते विशुद्धान्।

1 A om. from प्रतिलभते upto धर्मान् in line 3 of st. 58. २ After st. 57, ABT add:
येनेह वाक्संवरणेन धीमांल्लभते पञ्चदशमानयुक्तम्।
अमत्स्वरमचिन्त्यघोषमयं हि सो उच्यति वाचसंवरः॥
३ AB सर्वानिह for सर्वानिम ४ ABT वाक्संवरणेन for वाचावरणेन. ५ A प्रविवेकशान्तं for लभते विशुद्धान्.

तथा वितर्कान् प्रविवेकशान्ता-
　　नयं हि सो उच्यति वाचसंवरः ॥ ६३ ॥
येनेह वाक्संवरणेन धीमान्
　　मृषा न भाषी पिशु[1]नाश्च वाचः ।
संभिन्नप्रलापं परु[2]षां च वाचं
　　अयं खु सो उच्यति वाचसंवरः ॥ ६४ ॥
येनेह वाक्संवरणेन धीमान्
　　सद्धर्मक्षेपं न करोति जातु ।
न बुद्धसंघं च अ[3]भ्याचक्षेत
　　अयं खु सो उच्यति वाचसंवरः ॥ ६५ ॥
येनेह वाक्संवरणेन धीमान्
　　मातापितृष्वाचरियानमन्तिके ।
असत्यवाचं पुरतो न भाषी
　　अयं खु सो उच्यति वाचसंवरः ॥ ६६ ॥
येनेह वाक्संवरणेन धीमान्
　　या[4] अन्यवाचो इह दोषसंहिताः ।
ताभ्योऽप्यशेषं विरतः स भोति
　　अयं खु सो उच्यति वाचसंवरः ॥ ६७ ॥
येनेह वाक्संवरणेन धीमान्
　　प्रतिश्रुत्कासंनिभतां पि वाचम् ।
सुपिनोपमामो[5]तरते विशारदो
　　अयं खु सो उच्यति वाचसंवरः ॥ ६८ ॥
निरात्मनिर्जीवनिरीहतां वा
　　प्रतीत्युत्पन्नां सुपिनोपमां मृषा ।
यदेव वाचोत्तरि बोधिसत्त्वो
　　अयं खु सो उच्यति वाचसंवरः ॥ ६९ ॥
निरोध[6]सत्यं सुपिनं यथैव
　　स्वभावमात्रा अथ निर्वृतिं च ।
यदेव वाचोत्तरि बोधिसत्त्वो
　　अयं खु सो उच्यति वाचसंवरः ॥ ७० ॥

---

१ A पशुनां for पिशुनां. २ A विपुलां for परुषां. ३ AB प्रतिक्षिपेत for अभ्याचक्षेत. ४ A om. from या अन्यवाचो upto धीमान् in 1st line of st. 68. ५ AB सो भवती for ओतरते. ६ A निरु for 'सत्यं.

N 619 नो चापि वाच लभते स काचि
न कल्पयी नापि च मन्यते स ।
नालम्बते नाभिनिवेश जातु
अय खु सो उच्यति वाचसंवरे ॥ ७१ ॥[1]

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म — तस्मात्तर्हि कुमार मनःसंवरसंवृतो भविष्यामीत्येवं बोधिसत्त्वेन महासत्त्वेन शिक्षितव्यम् । तत्र कुमार कतमो मनःसंवरः ? येन मनःसंवरेण समन्वागतो बोधिसत्त्वो महासत्त्वो वज्रोपमं समाधिं प्रतिलभते । अयमुच्यते कुमार मनःसंवरः । येन मनःसंवरेण समन्वागतो बोधिसत्त्वो महासत्त्वो ज्वलनान्तराभां[2] नाम रश्मिं प्रतिलभते । अयमुच्यते मनःसंवरः । येन मनःसंवरेण समन्वागतो बोधिसत्त्वो महासत्त्वोऽष्टाङ्गोपेतस्वरघोषसंपदं प्रतिलभते । अयमुच्यते मनःसंवरः । येन मनःसंवरेण समन्वागतो बोधिसत्त्वो महासत्त्वो द्वात्रिंशन्महापुरुषलक्षणानि प्रतिलभते । दश तथागतबलानि, चत्वारि वैशारद्यानि, चतस्रः प्रतिसंविदः, अष्टादशावेणिकांश्च बुद्धधर्मान् प्रतिलभते । अयमुच्यते मनःसंवरः । येन मनःसंवरेण समन्वागतो बोधिसत्त्वो महासत्त्वस्त्रीणि विमोक्षमुखानि प्रतिलभते । शून्यतामनिमित्तमप्रणिहितं विमोक्षमुखं प्रतिलभते । अयमुच्यते मनःसंवरः । येन मनःसंवरेण समन्वागतो N 620 बोधिसत्त्वो महासत्त्वश्चतुरो ब्रह्मविहारान् प्रतिलभते । महामैत्रीं महाकरुणां महामुदितां महोपेक्षां प्रतिलभते । अयमुच्यते मनःसंवरः । येन मनःसंवरेण समन्वागतो बोधिसत्त्वो महासत्त्वश्चत्वारि स्मृत्युपस्थानानि प्रतिलभते । चत्वारि सम्यक्प्रहाणानि, चतुर ऋद्धिपादान्, पञ्चेन्द्रियाणि, पञ्च बलानि, सप्त बोध्यङ्गानि, आर्याष्टाङ्गं मार्गं प्रतिलभते । अयमुच्यते मनःसंवरः । येन मनःसंवरेण समन्वागतो बोधिसत्त्वो महासत्त्वो महाकरुणाविहारं प्रतिलभते । महोपेक्षाविहारं प्रतिलभते[3] । क्षेमांश्च वितर्कान् प्रतिलभते । प्रविवेकांश्च वितर्कान् प्रतिलभते । हितैषिता च ईर्या च चर्या च प्रतिलभते । अयमुच्यते मनःसंवरः ॥

पुनरपरं कुमार मनःसंवर उच्यते—येन मनःसंवरेण समन्वागतो बोधिसत्त्वो महासत्त्वो मिथ्यादृष्टिप्रहाणाय मिथ्यादृष्ट्या सार्धं न संवसति । अभिध्याप्रहाणाय अनभिध्यालुर्भवति । व्यापादप्रहाणाय व्यापादेन सार्धं न संवसति । कौसीद्यप्रहाणाय कुसीदेन सार्धं न संवसति । गुरूणामन्तिके मातापित्रोराचार्याणामन्तिके शाठ्यचित्तं नोत्पादयति । N 621 रागद्वेषमोहचित्तं नोत्पादयति । न च तैः सार्धं संवसति । बोधिचित्तं नोत्सृजति । अध्याशयचित्तं च नोत्सृजति । ये चान्ये दोषोपसंहिता मनःसंकल्पास्तेभ्यः सर्वेभ्यः प्रतिविरतो भवति । न च तैः सार्धं संवसति । अयमुच्यते मनःसंवरः । तच्च मनो मायोपममित्यवतरति । स्वप्नोपममपि मरीच्युपममपि । निर्मितोपममिति प्रतिभासोपममित्यवतरति । न कुतश्चिदागमनतोऽवतरति । स्वप्नोपमं सुखमवतरति । स्वप्नोपममनित्यतोऽवतरति । स्वप्नोपमं निर्जीवतोऽवतरति ।

---

1 After st 71 AB add इति श्रीसमाधिराजे वाक्संवरपरिवर्तो नामोनचत्वारिंशतितमः 2 A ज्वलनोत्तरां for ज्वलनान्तराभां 3 After प्रतिलभते B adds महामुदिताविहारं and महोपेक्षाविहारं.

स्वप्नोपमं शून्यतोऽनुसरति । तच्च नोपलभते न कल्पयति न मन्यते नावलम्बते नाभिनिविशते । अयमुच्यते कुमार मन संवरः ॥

परिशुद्धमन.समुदाचारो हि कुमार बोधिसत्त्वो महासत्त्वः सेर्वाक्षणांश्च[1] वर्जयति । अचिन्त्यांश्च सर्वबुद्धधर्मान् प्रतिलभते । सर्वबुद्धेभ्यश्च सर्वबुद्धाभिज्ञां अक्षोभ्यां च चेतोविमुक्तिं प्रतिलभते । अयमुच्यते मन.संवरः ॥

अथ[2] खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत--

शृणोथ सर्वि अविक्षिप्तमना
　　मम भाषतो मन.संवरणम् ।
श्रुत्वा च तत्र प्रतिपद्यथा मे
　　यदीच्छथा लघु विशोधनताम्[3] ॥ ७२ ॥

मन.संवरेण लभि[4] येन विदु
　　परम प्रशान्त विपुलानचलान् ।
जिनधर्मचिन्तिय तथाद्भुततां
　　मन.संवरुच्यति विशुद्ध अयम् ॥ ७३ ॥

मन.संवरेण लभि येन विदु
　　चेतोविमुक्तिमचलां सततम् ।
वज्रोपमं तथ समाधिवरं
　　मन संवरुच्यति हि श्रेष्ठ अयम् ॥ ७४ ॥

मिथ्यादृत्यपि च येन विदु
　　उपचाररश्मि विपुलार्थकरीम् ।
आर्यार्थयुक्तस्वर येन लभी
　　मन संवरुच्यति विशुद्ध अयम् ॥ ७५ ॥

मन संवरेण विदु येन वरा
　　द्वात्रिंशलक्षण लघू लभते ।
यश चो बलान्यखिलबुद्धगुणान्
　　मन संवर कथितु श्रेष्ठ अयम् ॥ ७६ ॥

मनसंवरेण लभि येन विदु
　　प्रतिभानविद्स्तय विशारदताम् ।
परमाद्भुतान् गुण अचिन्त्य तथा
　　मन संवरः कथितु श्रेष्ठ अयम् ॥ ७७ ॥

N 622
N 623

---

१ Dutt सर्वक्षणांश्च, AB सर्वालक्षणान् for सर्वाक्षणांश्च. २ B तत्र for अथ. ३ A विरोधनतां for विशोध°. ४ A लघु for लभि.

मन सवरेण लभि येन विदु
स्मृत्युपस्थान चतु ऋद्धिपादान्।
सम्यक्प्रहाण बल इद्रिय चो
मन सवर कथितु श्रेष्ठ अयम् ॥ ७८ ॥

N 624 5

मने सवरेण लधु येन विदु
बोध्यङ्ग सप्त लभते विमलान्।
अष्टाङ्गिकं च तथ मार्गवर
मन सवर कथितु श्रेष्ठ अयम् ॥ ७९ ॥
मन सवरेण लभि येन विदु
10
मुदुपेक्षताविहरण प्रवरम्।
करुणाविहारिमल च पर
मन सवर कथितु श्रेष्ठ अयम् ॥ ८० ॥
मन सवरेण लभि येन शिवान्
क्षेमान् वितर्क विदु शुद्ध सदा।
15
लभते गुणाढ्यु प्रविवेककथा
मन सवर कथितु श्रेष्ठ अयम् ॥ ८१ ॥
मनसवरेण विदु येन युतो
मिथ्याकुदृष्ट्या सह न वसति।
व्यापादभिध्या न च सजनयी
20
मन सवर कथितु श्रेष्ठ अयम् ॥ ८२ ॥
मन सवरेण विदु येन युत
कुहना करोति न मुहूर्तमपि।
N 625
गुरुणा च शाठ्यु न सजनयी
मन सवर कथितु श्रेष्ठ अयम् ॥ ८३ ॥
मन सवरेण विदु येन युतो
रागाय द्वेष न जनेति मन।
तथ मोहचित्तु न जनेति कचित्
मन सवर कथितु श्रेष्ठ अयम् ॥ ८४ ॥
मन सवरेण विदु येन युतो
30
लोभाय चित्त न जिनि सृजती।
अध्याशय च न विलोपयती
मन सवर कथितु श्रेष्ठ अयम् ॥ ८५ ॥

१ After st 78 ABT add a passage given in App 1 (No 39) २ B om sts 79–82 ३ A शुद्धमना for शुद्ध सदा

मनःसंवरेण विदु येन युतो
ये चान्य दोष विविधा मनसः।
सर्वेभि सार्ध न च संवसती
मनःसंवरः कथितु श्रेष्ठु अयम् ॥ ८६ ॥

मायोपमं च मन ओतरती
सुपिनोपमं तथ मरीचिसमम्।[1]
प्रतिभासलक्षणमयो सततं
मनःसंवरः कथितु श्रेष्ठु अयम् ॥ ८७ ॥

सुपिमोपमं च सुखमोतरती
तथनित्य शून्यत अशाश्वततः।
मन एव ओतरति येन विदु
मनसंवरः कथितु श्रेष्ठु अयम् ॥ ८८ ॥

निर्जीवमोतरति निःसत्त्व मनो
उत्पन्नु प्रत्ययतै चक्रसमम्।[2]
न कुतश्चिदागतु न चापि गतं
मनसंवरः कथितु श्रेष्ठु अयम् ॥ ८९ ॥

न च तन्मन्ये उपलभाति क्वचि
न च कल्पयत्यथ न मन्यत्यसी।
नालम्बते विनिविशति नै चो[3]
मनसंवरः कथितु श्रेष्ठु अयम् ॥ ९० ॥

परमार्थसत्य सुपिनेन समं
निर्वाण स्वप्नसममोतरति।
मन एवमोतरति येन विदु
मनसंवरः कथितु श्रेष्ठु अयम् ॥ ९१ ॥

इति श्रीसमाधिराजे कायवाङ्मनःसंवरपरिवर्तः अष्टत्रिंशतितमः[5] ॥ ३८ ॥

---

१ After मरीचिसमं, B adds: अथ खलु भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म. २ AB नक्षत्रचक्रसमम् for प्रत्ययत चक्रसमम्. ३ AB नालम्बते निविशति न चो for the line. ४ C मनो for न चो. ५ AB चत्वारिंशतितमः for अष्टत्रिंशतितमः.

## [ पदत्रिंशतनिर्देशपरिवर्तः । ]

तत्र कुमार कतमा कर्मविशुद्धि ? यदिद स्वप्नोपम त्रिभव दृष्ट्वा तत्र विरागतामुत्पादयति। इयमुच्यते कर्मविशुद्धि ॥ तत्र कतम आलम्बनसमतिक्रम ? यदिद मायोपमता स्कन्धधात्वायतनाना बुद्ध्वा तेषा व्यवसर्ग । अयमुच्यते आलम्बनसमतिक्रम ॥ तत्र कतमा स्कन्धपरिज्ञा ? यदिद मरीच्युपमता स्कन्धानामवतरति ॥ तत्र कतमा धातुसमता ? यदिद निर्मितोपमाना धातूना प्रतिनिसर्ग ॥ तत्र कतम आयतनापकर्ष ? यदिद प्रतिभासोपमानामायतनाना प्रतिनिसर्ग ॥ तृष्णाप्रहाणम् ? यदिद सर्वधर्माणामनालम्बनता ॥ अनुत्पादसाक्षात्क्रिया ? यदिद सर्वधर्माणामनुपलब्धि ॥ क्रियावतार ? यदिद वीर्यसमुत्थितस्य दु खस्य विप्रणाश ॥ हेतुदीपना ? यदिद प्रतिश्रुत्कोपमाना स्कन्धानामभिनिर्वृत्ति ॥ फलाविप्रणाश ? यदिद स्वप्नोपमस्य कर्मफलस्याविप्रणाश ॥ धर्मदर्शनम् ? यदिद सर्वधर्माणामपश्यनता ॥ मार्गभावना ? यदिद सर्वधर्माणामनुपलब्धिभावना ॥ तथागतसमवधानम् ? यदिद सर्वबुद्धाना शिक्षाप्रतिपत्ति ॥ तीक्ष्णप्रज्ञता ? यदिद सर्वधर्माणामनुत्पत्तिक्षान्ति ॥ सत्त्वानुप्रवेशज्ञानम् ? यदिद इन्द्रियपरापरज्ञताज्ञानम् ॥

तत्र कतमद् धर्मज्ञानम् ? यदिद सर्वधर्माणामनुपलब्धि ॥ प्रतिसंविदावतारज्ञानम् ? यदिद यथाभूतधर्मनयप्रवेश ॥ अक्षरप्रभेदज्ञानम् ? यदिद त्रिमन्त्रप्रयोगज्ञानम्, आकारानानारज्ञानम् ॥ वस्तुसमतिक्रम ? यदिद अवस्तुबुध्यना ॥ घोषपरिज्ञा ? यदिद प्रतिश्रुत्कोपमानताज्ञानम् ॥ प्रामोद्यप्रतिलम्भ ? यदिद सर्वधर्माणामनुपलब्धि, ससारात् दु खस्य उत्सर्गो भारानहरणम् । धर्मप्रीत्यनुभवनता ? यदिद अप्रवादसतोषणानुत्सर्ग स्वयानानुशसापश्यना ॥ आर्जवता ? यदिद आर्यसत्यप्रतिवेध ॥ रिजुकता ? यदिद ईर्यापथस्याकल्पनता ॥ अपगतभ्रूकुटिता ? यदिद द्वेषप्रहाणम् ॥ सौशील्यता ? यदिद सुखसवासता ॥ माधुर्यता ? यदिद परेषु हितवस्तुता ॥ पूर्वालापिता ? यदिद एहिस्वागतवचनता लघूत्थानता ॥ गुरुगौरवता ? यदिद गुरूणामन्तिके भय च कल्याणमित्रता च ॥ गुरुशुश्रूषा ? यदिद गुरूणामुपस्थानास्थानपरिचर्या ॥ उपपत्तिसतुष्टि ? यदिद सर्वोपपत्तिष्वनास्वादनता । शुक्लधर्मातृप्तता ? यदिद शुक्लधर्माणा पर्येषि किंकुशलमार्गणता च ॥

तत्र कतमा आजीवपरिशुद्धि ? यदिद इतरेतरसतुष्टिता अकूहणता अनैपिकता, लाभेन लाभाचिकीर्षणता च ॥ अरण्यवासानुसर्गो ? यदिद अनिक्षिप्तधुरता कुशलेषु धर्मेषु

[1] Before तत्र, A reads तत्र भगवान् पुनरपि चन्द्रप्रभ कुमारभूतमेतदवोचत् [2] A यदुतेद for यदिद [3] A विराग for विरागता [4] A हेतुपरिदीपना for हेतुदीपना [5] A अपश्यना for °नता [6] A प्रज्ञा for °प्रज्ञता [7] A यथाभूतविशुद्धिज्ञान for अनुपलब्धि [8] A सर्वनरनययथाशयावबोधनं ज्ञान for यथाभूतधर्मनयप्रवेश [9] B °प्रतिवेध for °प्रवेश [10] AB अकारककारज्ञानं च for आकारानानार° [11] B °भ्रुकुटिमूल्ता for °भ्रुकुटिता [12] AB साखिल्यता for सौशील्यता [13] AB वादिता for °वचनता [14] A सर्वापरिप्रसादता for सर्वोपपत्तिष्वनास्वादनता [15] In the Gilgit Ms which ends here, the subsequent portion of the Sutra is missing It is given here from AB [16] After अकूहणता B adds अल्पनना

प्रान्तशय्यासनाभिरतिर्वनगहनगिरिदुर्गगुहाकन्दरेष्वभिरतिः धर्मप्रीत्यनुभवनता च । असंसर्गः
गृहिप्रव्रजितैरभिसत्कारलोकेनानध्यवसानता तृष्णाप्रहाणध्यानप्रीत्यनुभवनता च । अयमुच्यतेऽ-
रण्यवासानुत्सर्गः ॥ तत्र.... भूम्यवस्थानज्ञानम् ? यदिदं श्रावकभूमिफलव्यवस्थानज्ञानं प्रत्येकबुद्ध-
भूमिव्यवस्थानज्ञानं बोधिसत्त्वभूमिव्यवस्थानज्ञानं च । तत्र .... स्मृत्यविप्रणाशः ? यदिदं अनित्य- N 631
दुःखशून्यानात्ममनसिकारः ॥ तत्र.... स्कन्धकौशल्यज्ञानम् ? यदिदं स्कन्धधात्वायतनप्रभेदज्ञानं 5
च तत्र चानुपलब्धिः ॥ तत्र .... अभिज्ञासाक्षात्क्रिया ? यदिदं चतुर्णामृद्धिपादानां प्रतिलम्भः
ऋद्धिविकुर्वणता च ॥ तत्र.... क्लेशापकर्षः ? यदिदं रागद्वेषमोहप्रहाणम् ॥ तत्र .... वासनानु-
संधिसमुद्घातज्ञानम् ? यदिदं पूर्वबालचरिविजुगुप्सनता श्रावकप्रत्येकबुद्धभूम्यस्पृहणता च ॥
तत्र.... विशेषगामिता ? यदिदं बुद्धवैशारद्यप्रतिसंविद्धर्निष्पादनता ॥ तत्र .... भावनाभि-
निष्यन्दः ? यदिदं अनुनयप्रतिघप्रहाणम् ॥ तत्र .... आपत्तिकौशल्यम् ? यदिदं 10
प्रातिमोक्षविनयसंवरः ॥ .... पर्युत्थानविष्कम्भणम्[1] ? यदिदं अत्ययदेशना[2] आयतिसंवरश्चाकुशलानां
धर्माणाम् ॥ ... अनुनयप्रहाणम् ? यदिदं त्रैधातुकभवतृष्णालतासमुद्घातोऽसमुत्पन्नानां
चाकुशलानां धर्माणामनुत्पादनता, उत्पन्नानां च कुशलमूलानां धर्माणामविप्रणाशः ॥ ....
भवसमतिक्रमः ? यदिदं त्रैधातुकानुपलब्धिः, अमनसिकारता च ॥ .... जातिस्मरता ? यदिदं
पूर्वेनिवासज्ञानम् ॥ .... कर्मविपाकनिष्काङ्क्षणता ? यदिदं उच्छेदशाश्वतविवर्जनता ॥ तत्र .... 15
धर्मचिन्ता ? यदिदं यथाभूतचिन्ता ॥ तत्र .... श्रुतपर्येष्टिः ? यदिदं श्रावकप्रत्येकबुद्धपिटकस्य
बोधिसत्त्वपिटकस्य च आधारणता भावनता च ॥.... ज्ञानतीक्ष्णता ? यदिदं स्वप्नोपममनुत्पाद- N 632
ज्ञानम् ॥ .... ज्ञानतृष्णा ? यदिदं ज्ञानपर्येष्टिः ॥.... ज्ञानावबोधः ? यदिदं अनुत्तरसम्यक्संबोध्य-
भिनिष्पादनता च ॥ ....आजानेयभूमिः ? यदिदं बोधिसत्त्वशिक्षास्थानम् ॥ .... शैलोपमता ?
यदिदं बोधिचित्तस्यानुत्सर्गः ? .... अकम्पनता ? यदिदं क्लेशैरसंहार्यता ॥.... अचलनता ? यदिदं 20
सर्वनिमित्तानाममनसिकारः । .... अवैवर्त्यलक्षणम् ? यदिदं षट्पारमितानामखण्डनता,
अन्यलोकधातुस्थितानां बुद्धानामभीक्ष्णदर्शनता च ॥ .... कुशलधर्माभिसंपत् ? यदिदं
आसन्नीभावोऽनुत्तरायाः सम्यक्संबोधेः ॥ .... पापकर्मजुगुप्सनता ? यदिदं आयतिसंवरता
चानुत्पादश्च पापस्य ॥ ... क्लेशानामसमुदाचारः ? यदिदं अविद्याया भवतृष्णायाश्च क्रोधस्य
चानुत्पादनता ॥ .... शिक्षाया अपरित्यागः ? यदिदं कर्मविपाकप्रतीपनता बुद्धगौरवता च ॥ 25
... समाधिव्यवस्थानम् ? यदिदं चित्तचैतसिकानां धर्माणामनुत्पादाव्ययकौशल्यं चित्तैकाग्रता
च ॥ .... सत्त्वाशयज्ञानम् ? यदिदं इन्द्रियपरापरज्ञताज्ञानम् ॥ .... उपपत्तिविशेषज्ञानम् ?
यदिदं पञ्चानां गतीनां व्यवस्थानज्ञानम्[3] ॥ .... ज्ञानानन्तता ? यदिदं लौकिकलोकोत्तरेषु N 633
शिल्पेष्वनाभोगज्ञानम् ॥ .... वचनप्रतिसंधिज्ञानम् ? यदिदं तथागतसंधाभाष्यानुबुध्यनता ॥
.... गृहावासपरित्यागः ? यदिदं कायचित्तविवेकाभिनिष्क्रमः ॥ .... त्रैधातुकेऽनभिरतिः ? 30
यदिदं त्रैधातुकयथाभूतदर्शनता ॥ .... चित्तस्यानवलीनता ? यदिदं चित्तस्यापरित्यागः समा-

---

[1] B पर्यवस्थान° for पर्युत्थान°. [2] A सत्यदेशना for अत्यय°. [3] B adds पञ्चानां गतीनां व्यवस्थानज्ञानम्.

पद्यमानापरित्यागश्च ॥ .... धर्मेष्वभिनिवेशः ? यदिदं सर्वस्नेहप्रहाणम् ॥ ... धर्मपरिग्रहः ? यदिदं
बुद्धबोध्यारक्षा, एषां चैव सूत्रान्तानां प्रतीच्छनता ॥ .... धर्मगुप्तिः ? यदिदं सद्धर्मप्रतिक्षेपकाणां
सहधर्मेण निग्रहः ॥ .... कर्मविपाकपत्तीयनता ? यदिदं लज्जया पापकात् कर्मणो विरतिः,
कुशलधर्मपर्येष्टौ चाभियोगः ॥ .... विनयकौशल्यम् ? यदिदं प्रकृत्यापत्त्यनापत्तिबुध्यनता ॥ ....
5 अधिकरणव्युपशमः ? यदिदं गणविवर्जनता ॥ .... अविग्रहोऽविवादः ? यदिदं
लौकिककथा[1]निरर्थिकता ॥ .... क्षान्तिभूमिः ? यदिदं कायचित्तपीडाधिवासनता ॥ .... क्षान्ति-
समादानम् ? यदिदं परतो दुरुक्तानां[2] वचनपथानामभ्युपेक्षा क्षान्त्यखण्डनता च ॥ .... धर्मप्रविचयः ?
यदिदं स्कन्धधात्वायतनानां प्रभेदः, संक्लेशव्यवदानपक्षस्य च प्रभेदस्तेषां चानुपलब्धिः ॥ .... धर्म-
N 634 विनिश्चयकौशल्यम् ? यदिदं सर्वधर्माणामनभिलापः ॥ .... धर्मपदप्रभेदज्ञानम् ? यदिदं सर्वधर्माणां
10 व्यवस्थाननिस्तीरणता ॥ .... धर्मपदनिर्हारकौशल्यम् ? यदिदं यथाभूतानां धर्माणां निर्देशः ॥
....अर्थानर्थसंभेदनिर्हारकौशल्यज्ञानम् ? यदिदं धर्मप्रकृत्यनुत्क्षेपाप्रक्षेपः ॥ .... पूर्वान्तज्ञानम् ?
यदिदं हेतुज्ञानम् ॥ .... अपरान्तज्ञानम ? यदिदं प्रत्ययज्ञानम् ॥ .... त्रिमण्डलपरिशुद्धिज्ञानम ?
यदिदं अतीतानागतप्रत्युत्पन्नानां धर्माणामनुपलब्धिः, अमनसिकारिता च ॥ .... चित्तावस्थानम् ?
यदिदं चित्तानुपलब्धिः ॥ .... कायव्यवस्थानम् ? यदिदं कायगतानुस्मृतिः ॥ .... ईर्यापथलक्षणम् ?
15 येयमार्यधर्मासंभ्रान्तता ॥ .... ईर्यापथस्याविकोपनता ? यदिदं प्र[3]च्छन्नकल्याणता ॥
....ईर्यापथस्याविकल्पनता ? यदिदं विगतपापेच्छता ॥ .... इन्द्रियप्रासादिकता ? यदिदं धर्म-
गतमनसिकारता युक्तभाणिता कालज्ञता यथाभूतानां धर्माणां भूतप्रकाशनता ॥ .... लोकज्ञता ?
यदिदं अतिक्रममसंप्रजानता ॥ .... मुक्तत्यागिता ? यदिदं सतां वस्तूनामग्रहणता, अमात्सर्यता
N 635 च ॥ .... प्रततपाणिता ? यदिदं संविभागशीलता ॥ .... अगृहीतचित्तता ? यदिदं श्रद्धा-
20 नाविलता ॥ .... व्यपत्रापिता ? यदिदं अमुखरता ॥ .... ह्रि[4]यापणता। यदिदं अनभि-
मुखता ॥ .... अकुशलचित्तजुगुप्सनता ? यदिदं बालधर्मबुध्यनता तैश्चासमवधानम् ॥
.... धूतानवसृजनता ? यदिदं दृढसमादानता ॥ .... चारित्रसमवधानता ? यदिदं चर्यापथक्रम-
संजाननता ॥ .... प्रीतिसमुदाचारः ? यदिदं कुशलानां धर्माणामनुशंसाचित्तता ॥ .... गुरूणा-
मासनप्रत्युत्थानम् ? यदिदं निहतमानता, अनालस्यता च ॥ .... मानस्य निग्रहः ? यदिदं
25 आत्मनोऽनुपलब्धिरनालम्बनता च ॥ .... चित्तस्य सं[5]ग्रहः ? यदिदं शुक्लधर्माणामविप्रणाशज्ञानम् ॥
.... चित्तोत्साहनता ? यदिदं वीर्यफलाविप्रणाशज्ञानम् ॥ .... अर्थप्रतिसंविज्ज्ञानम् ? यदिदं
यथाभूतसत्यप्रतिवेधज्ञानम् ॥ .... ज्ञानानुबोधः ? यदिदं लौकिकलोकोत्तराणां धर्माणामनुबुध्यनता ॥
.... अज्ञानविगमः ? यदिदं यथाभूतानां धर्माणामध्यारोपविगमः ॥ .... चित्तप्रवेशज्ञानम् ?
यदिदं उत्पादव्ययज्ञानम् ॥ .... आहारनिर्हारकौशल्यज्ञानम् ? यदिदं तीक्ष्णप्रज्ञता ॥ .... रुत-
30 रवितज्ञानम् ? यदिदं यथाभूतधर्मप्रकाशनता ॥ .... व्यवस्थानज्ञानम् ? यदिदं यथाभूत-
N 636 स्यावतारज्ञानम्। ....अर्थविनिश्चयः ? यदिदं संस्कारस्कन्धोच्छेदः ॥ .... अर्थानर्थविवर्जनता ?

---

१ B °कथानर्थिकता for °कथानिर°. २ After दुरुक्तानां, AB add दुरागतानां which is wanting in T. ३ °B प्रतिच्छन्न °for पच्छन्न°. ४ A ह्रीव्यप° for ह्रियापण.° ५ B संप्रग्रहः for संग्रह.

यदिद भवसमतिक्रम, परेषा च भवसमतिक्रमणावतारणता च ॥ सत्पुरुषाश्रयः यदिद
बुद्धाविरहितता ॥ सत्पुरुषसमवधानम्ः यदिद बुद्धबोधिसत्त्वप्रत्येकबुद्धश्रावकसेवनता ॥
असत्पुरुषवर्जनताः यदिद उपलम्भिकानां कुसीदाना च विवर्जनता ॥ ध्यानाभिरतिः
यदिद कामकण्टकविवर्जनता, ध्यानानामनुत्सर्जनता, प्रीत्यविजहता च ॥ ध्यानेष्वन-
ध्यवसानम्ः यदिद त्रैधातुकसमतिक्रमणच्छन्द सत्त्वपरिपाचनाच्छन्द उत्तरिप्रज्ञारम्भ-
च्छन्दश्च ॥ अभिज्ञाविकुर्वणताः यदिद पञ्चस्वभिज्ञासु स्थित्वा दुर्विज्ञेयाना बुद्धधर्माणा
परेभ्य सम्प्रकाशनता ॥ नामसंकेतः यदिद अपरिनिष्पन्नाना नाम्नामनुबुध्यनता ॥
प्रज्ञप्तिव्यवहारः यदिद लोकव्यवहार ॥ प्रज्ञप्तिसमुद्घातः यदिद प्रत्याहारज्ञानम् ॥
संसारनिवृत्तिः यदिद संसारदोषप्रत्यवेक्षा ॥ लाभानर्थिकताः यदिद भूताल्पेच्छता ॥
लाभसत्कारानादेयताः यदिद अनुत्कण्ठता च विगतपारेच्छता च ॥ अवर्णैरमङ्कुभावताः 10
यदिद स्कन्धधातुपरीक्षाज्ञानम् ॥ भूताना वर्णानामनधिवासनताः यदिद प्रतिच्छन्नकल्याणता
च लाभसत्कारस्य चान्तरायबुध्यनता ॥ सत्कारेषूपेक्षाः यदिद कर्मविपाकबुध्यनता ॥ N 637
असत्कारेष्वमङ्कुभावताः यदिद योगस्यानुत्सर्जनता ॥ निन्दायामबुध्यनताः यदिद
लौकिकधर्मप्रत्यवेक्षा ॥ प्रशंसायामुपेक्षाः यदिद कल्याणधर्मपर्येष्टिनिष्क्रमणम् ॥...
अलाभेऽलीनताः यदिद स्वयकृताना धर्माणा प्रत्यवेक्षणता ॥ .. गृहिभिः 15
सार्धमसंस्तवः यदिद आमिषकिंचिद्विवर्जनता ॥ प्रव्रजितैः सार्धमसंस्तवः यदिद
अयुक्तविवर्जनता च युक्तपर्येषणता च ॥ अगोचरविवर्जनताः यदिद पञ्चाना निवरणाना
प्रहाणम् ॥ गोचरप्रचारः यदिद स्मृत्युपस्थानाना भावना ॥ आचारसंपद्ः
यदिद परानुरक्षा ॥ आचारविवर्जनताः यदिद आत्मन कल्याणधर्मानुरक्षणता ॥
कुज्ञानानामदूषणताः यदिद ज्ञात्रविवर्जनता ॥ शासनरक्षाः यदिद धर्मपर्येष्टिसमादानता 20
धर्मानुधर्मप्रतिपत्तिश्च ॥ अल्पभाष्यताः यदिद शमथप्रतिलम्भ ॥ मार्दवताः
यदिद विपश्यनाप्रतिलम्भ ॥ प्रतिवचनकौशल्यम्ः यदिद उत्तरप्रत्युत्तरज्ञानम् ॥
प्रत्यर्थिकनिग्रहः यदिद यथाभूताना धर्माणा प्रकाशनता व्यवस्थापनता च, उपालम्भानि N 638
ग्रहश्च ॥ कालप्रतिक्रमः यदिद कालज्ञता ॥ पृथग्जनेष्वविश्वासः यदिद बालधर्म
दोषदर्शिता ॥ दुःखितानामपरिभवः यदिद सर्वसत्त्वेषु समचित्तता ॥ दुःखिताना 25
धनानुप्रयच्छनताः यदिद लोकामिषदानम् ॥ दरिद्राणामनवसादनम्ः यदिद परेषामन्तिके
कृपाबुद्धिता ॥ दुःशीलानामनुकम्पनाः यदिद परेषामापत्तेरुद्धरणता च शीलप्रतिष्ठा-
पनता च ॥ हितवस्तुताः यदिद परेषामुपकारकरणता ॥ कृपाबुद्धिताः यदिद सत्त्वाना
मनागतदुःखपश्यनता ॥ धर्मानुग्रहः यदिद परेषा यथाभूतधर्मावतरणता ॥ आमिष-
परित्यागः यदिद स्कन्धपरित्याग, परेषा चामिषानुग्रह ॥ असंनिचयस्थानम्ः यदिद 30
आमिषजुगुप्सनता आस्वादोपदर्शनता च ॥ शीलप्रशंसाः यदिद शीलफलानुबोध ॥

---

१ B om कण्टक॰ २ B अवर्णे for अवर्णै ३ A ज्ञात्र॰ for ज्ञात्र॰ ४ A प्रभावता B प्रभावनता for प्रकाशनता which T confirms

.... दौःशील्यजुगुप्सनता ? यदिदं दौःशील्यदोषबुद्धचनता ॥ .... शीलवतामकम्प्यसेवनता ? यदिदं शीलवस्तु दुर्लभसंज्ञाज्ञानम् ॥ .... सर्वास्तिपरित्यागिता ? यदिदं कल्याणाशयता ॥

N 639 .... अध्याशयनिमन्त्रणता ? यदिदं परेषां सुखार्थिकता ॥ .... यथोक्तकारिता ? यदिदं कल्याणाशयसंपत् ॥ .... अभीक्ष्णपर्युपासनता ? यदिदं कुशलगवेषणपरिपृच्छनता ॥ .... प्रीत्यनुभवनता ? यदिदं

5 अधिगमज्ञानं चागमज्ञानं च ॥ .... दृष्टान्तज्ञानम् ? यदिदं उपमाज्ञानमववादज्ञानं च ॥ .... पूर्वयोगकौशल्यम् ? यदिदं जात्यनुस्मरणता श्रुतबहुलता च ॥ .... कुशलमूलपूर्वंगमता ? यदिदं बोधौ तीव्रच्छन्दता च परेषां समुत्साहनता च ॥ .... उपायकौशल्यम् ? यदिदं प्रतिदेशनानुमोदनाध्येषणा कुशलानां च परिणामनाकौशल्यम् ॥ .... निमित्तप्रहाणम् ? यदिदं स्वप्नोपमानां धर्माणां बुध्यनता च वस्तुविभावनता च ॥ .... संज्ञाविवर्तः ? यदिदं विपर्यासोत्सर्गः ॥ .... वस्तुलक्षणता ? यदिदं

10 अलक्षणज्ञानम् ॥ .... सूत्रान्ताभिनिर्हारकौशल्यम् ? यदिदं यथाभूतानां धर्माणां कुशलाकुशलानां उपमावदानैः संप्रकाशनता ॥ .... सत्यविनिश्चयः ? यदिदं विज्ञाननिरोधो नामरूपानुत्पत्तिश्च ॥ .... विमुक्तिसाक्षात्क्रिया ? यदिदं वज्रोपमसमाधेरचलनता अप्रकुप्यनता च ॥ .... एकप्रव्याहारः ? यदिदं तीर्थ्यायतनविजुगुप्सनता चानुत्पत्तिकज्ञानता च ॥ .... वैशारद्यप्रतिलम्भः ? यदिदं

N 640 बुद्धधर्मावबुध्यनता[१] ॥ .... शीलाधिष्ठानता ? यदिदं कायसंवरः प्रातिमोक्षसंवरश्च ॥ .... समा-

15 पत्त्यवतारः ? यदिदं त्रैधातुकवैराग्यता ॥ .... प्रज्ञाप्रतिलाभः ? यदिदं सामर्थ्यज्ञानं चानुपलब्धिश्च ॥ .... एकारामता ? यदिदं संगणिकादोषविवर्जनता च शुक्लधर्मानुत्सृजनता ॥ ... अल्पज्ञात्रसंतुष्टिः[२] ? यदिदं इतरेतरसंतुष्टिः ॥ ... चित्तस्यानाविलता ? यदिदं निवरणानां विष्कम्भणता ॥ .... दृष्टिकृतानां विवर्जनता ? यदिदं उपलम्भदृष्टिविवर्जनता ॥ .... धारणीप्रतिलम्भः ? यदिदं यथादृष्टानां धर्माणां यथाभूतासक्तसंप्रकाशनता ॥ .... ज्ञानावतारः ? यदिदं प्रकृतिप्रवेशः ॥ ....

20 स्थानम् ? यदिदं शीलस्थानम् ॥ .... अवस्थानम् ? यदिदं चित्तावस्थानम्[३] ॥ ... प्रतिष्ठानम् ? यदिदं श्रद्धाप्रतिष्ठानम् ॥ .... प्रतिपत्तिः ? यदिदं मार्गप्रतिपत्तिः ॥ .... हेतुः ? यदिदं अविद्या हेतुः संसारस्य ॥ .... युक्तिः ? यदिदं विद्या युक्तिर्मोक्षस्य ॥ .... नयः ? यदिदं तृष्णाप्रहाणम्[४] ॥ .... द्वारम् ? यदिदं दोषप्रहाणम् ? .... मार्गः ? यदिदं अनित्यदुःखशून्यानात्मज्ञानम् ॥ .... भूमिः ? यदिदं दशाप्रणिहितभूमिः ॥ .... जातिविगमः ? यदिदं जात्युपच्छेदः ॥ .... ज्ञानभूमिः ? यदिदं असंमोहः ॥ ....

25 अज्ञानप्रहाणम् ? यदिदं मोहप्रहाणम् ॥ .... ज्ञानप्रतिष्ठानम् ? यदिदं अप्रतिष्ठानम् ॥ .... योगाचारभूमिः ? यदिदं सप्तत्रिंशतां बोधिपक्षिकाणां धर्माणां भावना ॥ .... बोधिसत्त्वगोचरः ? यदिदं षट्पारमिता ॥ .... सत्पुरुषसंसेवना ? यदिदं बुद्धाभिनिर्वेविता ॥ .... असत्पुरुषविवर्जनता ?

N 641 यदिदं तीर्थिकानां उपलम्भदृष्टिकानां विवर्जनता ॥ .... तथागतैराख्यातः ? यदिदं बुद्धबलेषु स्थित्वा प्रकृतिज्ञानेन मोक्षः ॥ .... बुद्धभूमिः ? यदिदं सर्वेषां कुशलानां धर्माणां प्रतिलाभिता ॥ .... पण्डितै-

30 रनुमोदिता ? यदिदं अतीतानागतप्रत्युत्पन्नैर्बुद्धैर्भगवद्भिः श्रावकैश्चानुमोदिता ॥ .... बालैः प्रतिक्षिप्तम् ? यदिदं सर्वबालैर्दुर्विज्ञेयम् ॥ .... श्रावकप्रत्येकबुद्धैर्दुर्विज्ञेयम् ? यदिदं बुद्धधर्माचिन्त्यता ॥ .... अभूमि-

---

१ B ध्यानबलाधानता for बुद्धधर्मावबुध्यनता. २ After संतुष्टिः A adds उपालम्भदृष्टिविवर्जनता. ३ A विमानस्थानं for चित्ताव°. ४ A om. from मार्ग upto तृष्णाप्रहाणम्.

स्तीर्थिकानाम् ! यदिदं खिद्यमानो योगिनाम् ॥ .... बोधिसत्त्वैः परिगृहीताः ! यदिदं दुर्लभता
च महाभैषज्यता च ॥ .... दशबलैरनुबद्धम् ! यदिदं कृच्छ्रयोगेन ॥ .... देवैः पूजनीयम् ! यदिदं
सर्वसुखाहारकमुपादाय ॥ .... ब्रह्मणा वन्दनीयम् ! यदिदं सर्वमोक्षाहारकयोगेन ॥ .... नागै-
र्नमस्यनीयम् ! यदिदं सर्ववासनासमुत्यागतामुपादाय ॥ .... यक्षैरनुमोदनीयम् ! यदिदं सर्वदुर्गतीनां
मार्गच्छेदनतामुपादाय ॥ .... किन्नरैः स्तवनीयम् ! यदिदं सर्वमोक्षप्रामोद्याहरणतामुपादाय ! महोरगैः 5
प्रशंसनीयम् ! यदिदं संसारोच्छेदनतामुपादाय ॥ .... बोधिसत्त्वैर्मात्रयितव्यम् ! यदिदं सर्वज्ञाना-
हारिकमुपादाय ॥ .... पण्डितैः पर्यवाप्तव्यम् ! यदिदं अवैवर्त्यभूम्याहारित्रकमुपादाय ॥ .... धन-
मनुत्तरम् ! यदिदं देवमानुषिकायाः प्रजायाः संपत्तेराहारित्रकं चोपादाय मोक्षाहारित्रकमुपादाय ॥....
दानं निरामिषम् ! यदिदं सर्वक्लेशच्छेदित्रकतामुपादाय ॥ .... भैषज्यं ग्लानानाम् ! यदिदं रागद्वेष-
मोहप्रशमनतामुपादाय ॥ .... कोशो ज्ञानस्य ! यदिदं भावनामुपादाय ॥.... अक्षयता प्रतिभानस्य ! 10
यदिदं यथाभूतज्ञानदर्शनतामुपादाय ॥ .... विगमः शोकस्य ! यदिदं निर्यवकः व्याधिदुःखबुध्यना-
वतरणतामुपादाय नैरात्म्यदुःखप्रजाननतामुपादाय ॥ .... परिज्ञा त्रैधातुकस्य ! यदिदं
स्वप्नमायाबुध्यनतामुपादाय ॥.... नावः पारमितानाम् ! यदिदं अध्याशयेन परिनिर्वातुकामानामनित्य-
दुःखशून्यताभावनतामुपादाय ॥ .... नौरोधमध्यगतानाम् ! यदिदं निर्वाणस्याहारकतामुपादाय ॥
.... कीर्तिर्यशस्कामानाम् ! यदिदं विपुलधर्माहारकतामुपादाय ॥ .... वर्णो बुद्धानाम् ! यदिदं अनन्त- 15
गुणभैषज्यदानपतिमुपादाय ॥ .... यशस्तथागतानाम् ! यदिदं सर्वगुणसुखमोक्षदानपतिमुपादाय ॥
... स्तवो दशबलानाम् ! यदिदं दुर्लभधर्मरत्नदानपतिमुपादाय ॥ .... गुणा बोधिसत्त्वानाम् ! यदिदं
धर्मशिक्षिततामुपादाय ॥ .... उपेक्षा कारुणिकानाम् ! यदिदं कृतबुद्धकृत्यकरणीयतामुपादाय ॥
.... मैत्र्या दोषप्रशमनम् ! यदिदं प्रतिघप्रतिपक्षतामुपादाय ॥ .... श्वासो महायानिकानाम् ! यदिदं
सर्वबुद्धधर्माभिप्रायपरिपूरित्रकमुपादाय ॥ .... प्रतिपत्तिः सिंहनादनादिनाम् ! यदिदं अग्रधर्म- 20
श्रेष्ठधर्माहारित्रकमुपादाय ॥ .... मार्गो बुद्धज्ञानस्य ! यदिदं सर्वकुशलधर्माहारित्रकमुपादाय ॥
.... मुद्रा सर्वधर्माणाम् ! यदिदं पारादपारमवबुध्यनतामुपादाय ॥
... असंहार्यता सर्वज्ञानस्य ! यदिदं सर्वाकुशलधर्मप्रहाणाय च संवर्तते सर्वकुशलधर्माहरणतायै
च सर्वसत्त्वमोक्षाहरणतायै संवर्तते ॥ .... उद्यानं बोधिसत्त्वानाम् ! यदिदं सर्वप्रीतिप्रामोद्यात्म-
सुखेन सर्वसत्त्वसुखाहरणतामुपादाय ॥ .... विद्रापणं मारसैन्यानाम् ! यदिदं सर्वबलाहारित्रक- 25
मुपादाय सर्वक्लेशशमनं चोपादाय ॥ .... विद्या क्षेमगामिनाम् ! यदिदं सर्वोपद्रवक्षमाय
संवर्तते ॥ .... अर्थः सिद्धानाम् ! यदिदं सर्वधर्मसंपत्त्याहारित्रकमुपादाय ॥....परित्राणममित्र-
मध्यगतानाम् ! यदिदं सर्वोपलम्भिकानां मिथ्यादृष्टिकानां पराजयतायै संवर्तते ॥ ....सहधर्मेण
तीर्थिकानां निग्रहः ! यदिदं सहधर्मेण तीर्थिकानां निग्रहमुपादाय ॥....सत्याकारो वैशारद्यानाम् !
यदिदं सर्वधर्मकोटितप्रत्याकोटितक्षेमतामुपादाय ॥ .... भूतपर्येष्टिकेलानाम् ! यदिदं अविपरीत- 30
योगेन ॥ .... पूर्वनिमित्तमष्टादशानामावेणिकानां बुद्धधर्माणाम् ! यदिदं सर्वशुक्लधर्माहरणता-

N 642

N 643

---

१ B °समुच्छेदता° for °समुत्यागता°. २ A om. from किन्नरैः upto संसारोच्छेदनताम्°.
३ B om. मोक्षाहारित्रकं.

मुपादाय ॥ .... अलंकारः ? यदिदं द्वात्रिंशतां महापुरुषलक्षणानामाहारकमुपादाय ॥ .... रति-
मोक्षकामानाम् ?[1] यदिदं आदिमध्यपर्यवसानकल्याणतामुपादाय ॥ .... प्रीतिर्ज्येष्ठपुत्राणाम् ?
N 644 यदिदं पैतृकं धनं बुद्धधनानुभावाहारकमुपादाय ॥ ....पारिपूरिर्बुद्धज्ञानस्य ? यदिदं सर्वशुक्लधर्मा-
नुरक्षणतामुपादाय सर्वशुक्लधर्मानन्यपोषणाहरणतामुपादाय। ...अभूमिः सर्वश्रावकप्रत्येकबुद्धानाम्?
5 यदिदं उदाराप्रमेयबुद्धधर्माहारकमुपादाय। ...संविशुद्धिश्चित्तस्य? यदिदं सर्वमलप्रहाणाय संवर्तते ॥
....परिशुद्धिः कायस्य ? यदिदं सर्वग्लानिप्रशमनतामुपादाय ॥....परिनिष्पत्तिः विमोक्षमुखानाम्?
यदिदं अनित्यदुःखशून्यानात्मशान्तप्रत्यवेक्षणतामुपादाय ॥....असंक्लिष्टता रागेण ? यदिदं अमृत-
पदाहारिकमुपादाय ॥....विगमो दोषस्य ? यदिदं महामैत्र्याहारिकमुपादाय ॥....अभूमिर्मोहस्य?
यदिदं भूतधर्मालोकाहारकमुपादाय ॥....आगमः संज्ञानस्य ? यदिदं सर्वलौकिकलोकोत्तरकाय-
10 ज्ञानस्योत्पादमुपादाय ॥ .... उत्पादो विद्यायाः ? यदिदं सर्वयोनिशोमनसिकाराहरणतामुपादाय ॥....
प्रहाणमविद्यायाः ? यदिदं सर्वयोनिशोमनसिकारविगमाय संवर्तते ॥ .... तृप्तिर्विमुक्तिसाराणाम् ?
यदिदं आर्यमाहात्म्याहरणतामुपादाय ॥....तुष्टिः समाधिसाराणाम् ? यदिदं सर्वसुखचित्तैकाग्राहरण-
तामुपादाय ॥ .... चक्षुर्द्रष्टुकामानाम् ? यदिदं अहंपश्यितामुपादाय ॥ .... अभिज्ञा
विकुर्वितुकामानाम्? यदिदं अनावरणतामुपादाय कामनीयधर्मतां चोपादाय ॥ .... ऋद्धिरभि-
15 भवितुकामानाम् ? यदिदं सर्वधर्माविकल्पितज्ञानानावरणतामुपादाय ॥....धारणी श्रुतार्थिकानाम् ?
यदिदं सर्वधर्मनिर्वाणसमतामुपादाय ॥ .... स्मृतेरसंप्रमोषः ? यदिदं निर्वाणा-
N 645 लम्बनप्रकृतिव्युपशमतामुपादाय ॥ .... अधिष्ठानं बुद्धानाम् ? यदिदं अनन्ताहरणतामुपादाय ॥
.... उपायकौशल्यं नाथानाम् ? यदिदं सर्वसुखक्षेमगमनतामुपादाय ॥ .... सूक्ष्मम् ? यदिदं
निर्वाणालम्बनव्युपशमतामुपादाय ॥ .... दुर्विज्ञेयम् ? यदिदं दुःखप्रतिज्ञानतामुपादाय ॥
20 .... दुराजानतानभियुक्तैः ? यदिदं अप्रतिलब्धपूर्वतामुपादाय ॥ .... विवर्तोऽक्षराणाम् ? यदिदं
सर्ववाक्यकथानुपलब्धितामुपादाय ॥ .... दुर्विज्ञेयो घोषेण ? यदिदं सर्वधर्माचिन्त्यतामुपादाय ॥
.... अज्ञातं विज्ञैः ? यदिदं रत्नमहार्घिकतामुपादाय ॥ .... ज्ञानं सुरतैः ? यदिदं सत्काराजानता-
मुपादाय ॥ .... विबुद्धमल्पेच्छैः ? यदिदं सत्काराजानतामुपादाय ॥ .... उद्गृहीतमारब्धवीर्यैः ?
यदिदं अनिक्षिप्तधुरतामुपादाय ॥.... धारितं स्मृतिमद्भिः ? यदिदं कृताविप्रणाशतामुपादाय ॥
25 .... क्षयो दुःखस्य ? यदिदं रागद्वेषमोहसंवर्तनतामुपादाय ॥ ... अनुत्पादः सर्वधर्माणाम् ?
यदिदं सर्वविज्ञाननिरोधतामुपादाय ॥....एकनयनिर्देशः ॥ यदिदं सर्वभवगतिच्युत्युपपत्त्यायतनानां
सर्वधर्माः स्वप्नोपमा इति सर्वधर्मानुत्पादतामुपादाय ? अयमेषां त्रयाणां पदशतानां निर्देशो
द्रष्टव्यः। अयं स उच्यते कुमार सर्वधर्मस्वभावसमताविपञ्चितो नाम समाधिः ॥

इति श्रीसमाधिराजे एकोनचत्वारिंशतितमः परिवर्तः ॥ ३९ ॥

[1] B प्रेतिप्रमेयं for प्रीतिः.

## परीन्दनापरिवर्तः ।

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत —

N 646

विपुला बुद्धधर्मा हि विपुलो देशितो नयः ।
विपुलं धर्मं देशित्वा विपुलांल्लभते गुणान् ॥ १ ॥
यथा विपुलमाकाशमेवं धर्माण लक्षणम् ।
रत्नानि विपुलान्यत्र तस्माद्वैपुल्यमुच्यते ॥ २ ॥ 5
विपुला चरि सत्त्वानां विपुला तेषु देशिता ।
विपुलो आगमो यस्य तस्माद्वैपुल्यमुच्यते ॥ ३ ॥

अस्मिन् खलु पुनः सर्वधर्मस्वभावसमताविपञ्चितसमाधिनिर्देशे धर्मपर्याये भाष्यमाणे अप्रमेयैः सत्त्वैरनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पादितानि, अप्रमेयाश्च सत्त्वा अवै- वर्तिका अभूवन्ननुत्तरायां सम्यक्संबोधौ । अप्रमेयाणां च सत्त्वानां प्रत्येकबोधौ चित्तमुत्पन्नम् । 10 अप्रमेयाणां च सत्त्वानामर्हत्त्वफलसाक्षात्क्रियायां चित्तान्युत्पन्नानि । अयं च त्रिसाहस्रमहासाहस्रलोक- धातुः षड्विकारं कम्पितः प्रकम्पितः संप्रकम्पितः । चलितः प्रचलितः संप्रचलितः । वेधितः प्रवेधितः संप्रवेधितः । क्षुभितः प्रक्षुभितः संप्रक्षुभितः । रणितः प्ररणितः संप्ररणितः । गर्जितः प्रगर्जितः संप्रगर्जितः । पूर्वा दिगवनमति पश्चिमा दिगुन्नमति । पश्चिमा दिगवनमति पूर्वा दिगुन्नमति । उत्तरा दिगवनमति दक्षिणा दिगुन्नमति । दक्षिणा दिगवनमति उत्तरा 15 दिगुन्नमति । अन्तादवनमति मध्यादुन्नमति । मध्यादवनमति अन्तादुन्नमति । अप्रमेयस्य चावभासस्य लोके प्रादुर्भावोऽभूत् । महच्च दिव्यगन्धवर्षमभिप्रावर्षत् । देवताश्च महान्तं दिव्यं पुष्पवर्षमुत्सृजन्ति स्म । दिव्यानि च तूर्यशतसहस्राण्युपर्यन्तरीक्षे भ्रामयन्ति । एवं च वाचमभाषन्त —

N 647

सुलब्धा लाभास्तेषां सत्त्वानां य इमं महाकरुणावतारधर्मपर्यायं श्रोष्यन्ति । बहुबुद्धपर्यु- पासितास्ते सत्त्वा भविष्यन्ति य इमं सर्वधर्मस्वभावसमताविपञ्चितसमाधिं पुनः पुनः श्रोष्यन्ति, 20 श्रुत्वा च लिखिष्यन्ति उद्ग्रहीष्यन्ति धारयिष्यन्ति पर्यवाप्स्यन्ति अरणाभावनया भावयिष्यन्ति, बहुलीकरिष्यन्ति, परेभ्यश्च विस्तरेण संप्रकाशयिष्यन्ति । सर्वसत्त्वानां ते दक्षिणीया भविष्यन्ति ॥

अथ खलु भगवानायुष्मन्तमानन्दमामन्त्रयते स्म — उद्गृह्णीष्व त्वमानन्द इमं धर्मपर्यायं धारय वाचय पर्यवाप्नुहि, परेषां च विस्तरेण संप्रकाशय । अथ खल्वायुष्मानानन्दो भगवन्त- मेतदवोचत् — को नामायं भगवन् धर्मपर्यायः, कथं चैनं धारयामि ? भगवानाह — महाकरुणाव- 25 तारो नामानन्द इदं सूत्रं धारय । सर्वधर्मसमताविपञ्चितो नाम समाधिरिति धारय । आनन्द आह — उद्गृहीतो मे भगवन्नयं धर्मपर्याय इति ॥

1 B देशना for देशिता.

इदमवोचद् भगवान् । आत्तमनाश्चन्द्रप्रभः कुमारभूत आयुष्मांश्चानन्दः ताश्चतस्रः पर्षदो भिक्षुभिक्षुण्युपासकोपासिकाः अनेके च शुद्धावासकायिका देवपुत्राः सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्निति ॥

इत्यार्यसर्वधर्मस्वभावसमताविपञ्चितात् समाधेर्यथालब्धं समाधिराजं नाम महायानसूत्रं ( परिवर्तो नाम चत्वारिंशतितमं ) समाप्तम् ॥ ४० ॥

* * * * *

ये धर्मा हेतुप्रभवा हेतुस्तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवं वादी महाश्रमणः ॥

१ B यथालब्धपरिवर्तो for परि°. २ A एकचत्वा°, B द्वाचत्वा° for चत्वा°.

प्रथमं परिशिष्टम् ।

# APPENDIX I

## No. 1

Before एवं मया श्रुतम् , AB read the following ; T om. this ( See page 1 ):

ॐ नमः सर्वबुद्धबोधिसत्त्वेभ्यः ॥

अनिरोधमनुत्पन्नमनाविलमनक्षरम् ।
महायानमहं स्तोष्ये बुद्धज्ञानाभिकाङ्क्षया ॥ १ ॥

प्रापकं सर्वसत्त्वानां घोरात् संसारसागरात् ।
संस्थापकं च निर्वाणे शान्ते क्षेमे[३] निरुत्तरे ॥ २ ॥

आकाशकल्पमचलं गम्भीरं शान्तमव्ययम् ।
तद् बुद्धयानमसमं भक्त्या वन्दे सदादरात् ॥ ३ ॥

अरूपमनिमित्तं च लक्ष्यलक्षणवर्जितम् ।
प्रापकं बोधिमार्गस्य अग्रयानमहं नतः ॥ ४ ॥

गम्भीरोदारविपुलो धर्मो यत्र प्रभाव्यते ।
तद् बोधिमण्डफलदं महायानं नमाम्यहम् ॥ ५ ॥

शाश्वतोच्छेदरहितमन्तद्वयविवर्जितम् ।
शून्यताप्रभवं शान्तं तं वन्दे बुद्धवर्णितम् ॥ ६ ॥

अप्रपञ्चं निरालम्बं बोधिसत्त्वैर्नमस्कृतम् ।
नमामि शिरसाजस्रं महायानमसंस्कृतम् ॥ ७ ॥

स्तुत्वा यानमनुत्तरं निरुपमं संसारसंतारकं
यत् पुण्यं प्रचितं विसारि विमलं तुङ्गं मया निश्चलम् ।
सर्वस्तेन जनः प्रयातु चपलं संप्राप्य यानाधिपं
निर्वाणं विरजः पुरोत्तमवरं बुद्धो यथा सर्ववित् ॥ ८ ॥

आर्यं चन्द्रप्रदीपं दशबलवृषभैर्यैरिदं सूत्रराजं
संख्यातीतैः प्रगीतं श्रुतिहृदयपरिप्रीणनं जन्मभाजाम् ।
संपद्भिः संनिगूढं बहुभिरुपमश्लाघिनीभिः सदैव
ह्यग्निस्तान्भावः प्रणतिमुपगतस्तानहं भक्तिनम्रः ॥ ९ ॥

वर्णौघं यस्य वक्तुं मुनिवरवृषभा अभ्युपायान्ति सार्धं
सर्वज्ञेयावबोधप्रशमिततमसोऽप्यप्रमेयं सदैव ।

१. B begins : ओं नमो रत्नत्रयाय। नमश्चन्द्रप्रभाय महाबोधिसत्त्वाय. २. B तारकं for प्रापकं. ३. A क्षमे for क्षेमे. ४. A यद् for तद्. ५. B बुद्धज्ञानम् for °यानम्. ६. A अनुपममनित्यं for अरूपमनिमित्तं. ७. B वन्दे संबुद्धवर्णितम् for तं वन्दे बुद्ध°. ८. A महायाने नमस्कृतम् for महायानमसंस्कृतम्. ९. B ध्यानभाजाम् for जन्मभाजाम्. १०. A बहुनिरुपश्लाघनीभिः for °भिरुपमश्लाघिनीभिः. ११. A भक्तिहृष्टम् for भक्तिनम्रः. १२. A सर्वक्लेशावबोधप्रशमिततमसोऽप्यप्रमेयः सदैव for the line.

आर्य-चन्द्रप्रदीपं दशबलगदिताशेषसूत्राधिराजं
तं भक्त्यम्भोमरात्मा क्षितिनिहितशिराः सर्वकालं नमामि ॥ १० ॥

येनानन्तसहस्रकल्पनयुतानाराधिता नायका
-यश्च ज्ञानविशेषधर्म उदितश्चन्द्रो यथा निर्मलः ।
तं चन्द्रप्रभ निष्प्रपञ्चमतुलं संवर्णितं नायकै-
र्वन्दे सर्वसमाधिधर्मकुशलमार्यं सदा भक्तितः ॥ ११ ॥

स्तुत्वा धर्मस्वभावां दशबलजननीं सर्वबुद्धांश्च वीरान्
आर्यं चन्द्रप्रभं च जिनवरतनयं सर्वदेवाभिवन्द्यम् ।
पुण्यं प्राप्तं मया यत् स्थिरगगनसमं तेन लोकस्त्वशेषो
लाभी भूयात् समाधेः सततमखिलपः शाक्यसिंहो यथैव ॥ १२ ॥

No. 2

After App. I, No. 1, A adds the following, ( see page 1 ). The passage is very corrupt ; T om. :

विधूय निद्रां तु भवि प्रभूता
श्रद्धां समुत्पाद्य तपोपधर्मे ।
निर्वाणनिम्नैर्विशदैर्मनोभि-
र्विज्ञापना मे प्रयता श्रुणोध्वम् ॥ १३ ॥

यद् दुर्लभं कल्पशतैरनेकै-
र्मनुष्यसत्क्षणदोषैर्विहितम् ।
तत् सांप्रतं प्राप्तमतो भवद्भिः
कार्यो हि धर्मश्रवणोपपश्च ॥ १४ ॥

यस्माच्च लोके करुणात्मिकाना
निर्वाणमार्गोत्तमदेशिकानाम् ।
सुदुर्लभं जन्म तथागतानां
अतोऽपि धर्मश्रवणं निषेव्य[ म् ] ॥ १५ ॥

यस्माच्च नैरात्म्यसनोधनेऽथ्या -
नभाजनं धर्मकथाश्रुतस्य ।
भवन्ति श्राद्धा नरकेषु तस्मा-
दयं स धर्मश्रवणस्य कालः ॥ १६ ॥

तीर्थश्रुश्रान्यान्यभयात्तु ( ! ) गम्या -
म्यंभरः श्रोतुमिहार्यधर्मम् ।

---

१. A om भक्त्यम्भो° up to मतुलं in 11c. २. A देवाधिवन्द्यम् for °भिवन्द्यम्, ३. A लोकस्य दोषो for लोकस्त्वशेषो. ४. AB °मखिल्या for °मखिलपः

तथैव लोकान्तरिकासु तस्मा-
दय स धर्मश्रवणस्य काल ॥ १७ ॥

क्षुत्तर्षदु खाकुलचेतसश्च
यस्मान्नरा प्रेतगती च मग्ना ।
श्रोतुं सम्या सुगतस्य वाक्य-
मय सद् ( स ) धर्मश्रवणस्य काल ॥ १८ ॥

नित्योन् ( ? ) स धर्म प्राप्य सदेन्द्रलोक
प्रमाददोषा इ( ग ? )ल्तिाश्च यस्मात् ।
न कुर्वते धर्मविधौ प्रयत्न-
मय स धर्मश्रवणस्य काल ॥ १९ ॥

प्राप्त च यावत् सकलेन्द्रियत्व-
मिद् च चित्त कुशलानुकूलम् ।
यावच्च धर्म सुरत पृथिव्या-
मय स धर्मश्रवणस्य काल ॥ २० ॥

जरातुपार प्रकारणा ( ? ) याव-
न्न दह्यते यावत् पद्मपण्डो ।
कार्यक्षम यावदिद च गात्र-
मय स धर्मश्रवणस्य काल ॥ २१ ॥

आरोग्यमपाभ्युदयश्च ( ? ) याव-
न्न क्षोभ्यते व्याधिमहादमवृष्ट्या ।
यावच्च कार्येष्वनुयातबुद्धि-
रय स धर्मश्रवणस्य काल ॥ २२ ॥

यावत् प्रियो जीवितपूर्णचन्द्रो
न पीयते मृत्युमहाग्रहेण ।
तावद्धि कार्ये कुरुताप्रमाद-
मय स धर्मश्रवणस्य काल ॥ २३ ॥

सर्वानुकम्पा प्रतिजातयश्च
यावच्च लोके सुगतस्य शिष्या ।
तिष्ठन्ति धर्माभ्युदयाय ताव-
दय स धर्मश्रवणस्य काल ॥ २४ ॥

यावच्च निर्वाणपुरानुयायी
मार्गो ( स्थित ) पूर्वजिनानुयात ।

प्रकाश्यते लोकहिताय ताव-
दयं स धर्मश्रवणस्य कालः ॥ २५ ॥

यावच्च सर्वज्ञदिवाकरस्य
वागंशवो मोहतमोसिमिर्धा ।
धर्मावभासं जनयन्ति लोके-
ष्वयं स धर्मश्रवणस्य कालः ॥ २६ ॥

तस्मात् कुकार्यं क्षपयाय[च] सर्वे
मत्वा स्वकार्यं परमार्थधर्मम् ।
श्रोतव्य एव प्रयतेन धर्मो
यस्मादतः सर्वत्या (?) भवन्ति ॥ २७ ॥

अष्टाक्षणक्षोभविमुक्तदोष-
मिमं क्षणं प्राप्य नरेण तस्मात् ।
सत्कृत्य धर्मश्रवणं निषेव्यं
पथ्यं सुभैषज्यमिवातुरेण ॥ २८ ॥

तस्मादुदारगुणरत्ननिधानभूता-
मेतत् महार्घकरुणादरगौरवाभ्याम् ।
श्रव्यं मुनीन्द्रवचनं निसृतेन्द्रियश्च
ततोऽधिकं श्रवणतोवनीयमस्मिन् ॥ २९ ॥

वियदिव विपुलोत्तमावकाशं
यदनुपमैः स्वगुणोदयैः प्रकाशम् ।
शृणुत तदखिलं विहाय मान
दशबल्यानमिदं निगद्यमानम् ॥ ३० ॥

स्वाङ्गान्युत्कृत्य जन्मप्रमुदितहृदयो यश्चकारां सृजां (?)
स्वाङ्गादेव प्रदीप्तं रुधिरमधिमपि तत् वज्रजीवप्रकाशम् ।
संविग्नास्थिश्च देहासितरजतनिभां लेखनी यश्च चक्रे
प्राग्वच्चसूक्ष्महेतोः ■ किल मुनिबल. सूत्रमेतज्जगाद ॥ ३१ ॥

महाकृपाद्वारमनह्वत (?) सर्वकृत्
स्वरत्नसां कामलवातहासित ।
नूनं मुखान्निपतितं रजा वाक्
सकृच्छ्णोच वचनामृतं वरम् ॥ ३२ ॥

महायानस्य यो मार्गः संबुद्धैर्यत्र देशितः ।
हेतुप्रथा तु संयुक्तं तत्सूत्रं श्रूयतामिह ॥ ३३ ॥

आयान्तु देवमनुजाः सद्धर्मजातगौरवाः।
दुर्लभं श्रवणं ह्यस्य कल्पकोटिशतैरपि ॥ ३४ ॥

आयान्तु देवभुजगासुरकिंनरेन्द्रा
यक्षादयः प्रवरधर्मकृताधिकाराः।
बौद्धं वचः प्रशमसौख्यनिमित्तमेतत्
प्रकाशयत इह श्रवणाय तस्य ॥ ३५ ॥

गगनतलगताश्च ये च दिग्भ्यो
धरणितले सलिले च ये वसन्ति।
असुरसुरमहोरगाश्च दैत्ययक्षा-
स्त्वरितमुपेत्य निशामयन्तु सूत्रम् ॥ ३६ ॥

यदसुलभमेतत् कल्पकोटि-
प्रसरशतैरपि हेतुवर्जितानाम्।
भवतु हि जिनात् करसिम भूत
तदिदमहं प्रविनक्षुरमयानम् ॥ ३७ ॥

भक्त तदवधूय चालतां जिनवचनश्रवणोत्सुकाः सदा।
उभयमिदमतीव दुर्लभं जिनवचनं च मनुष्यजन्म च ॥ ३८ ॥

गम्भीरं च न चाप्यस्तं दुर्लभं च मुनेर्वचः।
न च तेन विना मोक्षस्तस्माच्छ्रोतव्य[व्य]मादरात् ॥ ३९ ॥

अवितथवचन मुनौ प्रकाशं
भगवति शास्तरि संनिवेश्य भक्तिम्।
शृणोत सुगतसूत्रमादरेण
व्यसनविनाशकरं तदेव तस्मात् ॥ ४० ॥

अथ पादपस्रोपमागिरिनदीवेगोपमा यौवनं
आरण्यं जलबिन्दुलोलचपलं फेनोपमं जीवितम्।
धर्मयान करोति निश्चितं अभिसद्ध्यघाटेना
पश्चात्तापहता जरापरिणता शोकाग्निना दह्यते ॥ ४१ ॥

चलापि भूतिः क्षणभङ्ग यौवनं
कृताद्दन्तान्तर तदन्ति जीवितम्।
................................
अहो नृणां विस्मयकारि चेष्टितम् ॥ ४२ ॥

## No. 3

After st. 12 of App. I (No. 1) B reads: T om. (see page 1):

समस्तसुगतोद्गीर्णसर्वसूत्राधिराजतः ।
आर्यचन्द्रप्रदीपाद्धि यथालब्धं ब्रवीम्यहम् ॥ ४३ ॥
आर्यान्तु देवमनुजाः सद्धर्मजातगौरवाः ।
दुर्लभं श्रवणं ह्यस्य कल्पकोटिशतैरपि ॥ ४४ ॥[1]

## No. 4

Before अथ, ABT read the following passage ( see page 8 ):

तत्र खलु भगवांश्चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—अप्रमेयासंख्येयाः कुमार तथागता अर्हन्तः सम्यक्संबुद्धाः पूर्वं बोधिसत्त्वचर्यां चरता चक्रवर्तिराजभूतेन इमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन इहैव गृध्रकूटे पर्वते—ये स्मराम्यहमनेकानि कल्पकोटिनियुतशतसहस्राणि—ये मया सत्कृता गुरुकृता मानिताः पूजिता अर्चिता अपचायिताः सर्वरत्नपुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाभिस्तूर्यतालावचरवैजयन्तीभिरनेकैश्च चित्रविचित्रैर्नानारत्नमयविहारकोटीनियुतशतसहस्रव्यूहैः । तेषां च कुमार सर्वेषां तथागतानामन्तिकादयं सर्वधर्मस्वभावसमताविपञ्चितसमाधिर्विस्तरेण श्रुत्वा उद्गृहीतः पृष्टो धारितो वाचितः प्रवर्तितः अरणभावनया भावितो बहुलीकृतः परेभ्यश्च विस्तरेण संप्रकाशितः । तेषां च कुमार तथागतानां सर्वपश्चिमकः शालेन्द्रराजो नाम तथागतोऽर्हन् सम्यक्संबुद्धोऽभूत् । तस्य च कुमार शालेन्द्रराजस्य तथागतस्य अशीतिनियुतशतसहस्राणि श्रावकाणां बोधिसत्त्वानां च संघोऽभूत् । षट्सप्ततिश्चास्य वर्षकोटीसहस्राण्यायुःप्रमाणमासीत् । तस्य च शालेन्द्रराजस्य मे कुमार तथागतस्यार्हतः सम्यक्संबुद्धस्य अष्टादशवर्षकोटीसहस्राणि महापूजोपस्थानं कृतम । दिव्यचन्दनमयानां रत्नमयानां च विहाराणां कोटी कारिता । तस्य च भगवतः शालेन्द्रराजस्य कुमार तथागतस्यार्हतः सम्यक्संबुद्धस्य षट्सप्ततिवर्षकोटीसहस्राण्यायुःप्रमाणमभूत् । तस्यैव च भगवतः शालेन्द्रराजस्यान्तिकादयं मया प्रव्रजता सर्वधर्मस्वभावसमताविपञ्चितः समाधिर्विस्तरेण चतुर्दशवर्षकोटीसहस्राणि श्रुत्वोद्गृहीतः पृष्टोधारितो वाचितः प्रवर्तितः, अरणभावनया भावितो बहुलीकृतः, परेभ्यश्च विस्तरेण संप्रकाशितः ॥

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मात्तर्हि कुमार इमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन त्वया मयेव सर्वतथागतपूजोपस्थानपरिचर्यास्वभियुक्तेन भवितव्यम् । तत्कस्य हेतोः ? सर्वतथागतपूजोपस्थानपरिचर्यानिष्यन्दा हि कुमार बोधिसत्त्वानां महासत्त्वानां न दुर्लभा भवत्यनुत्तरा सम्यक्संबोधिः, किमङ्ग पुनरयं समाधिः । तस्मात्तर्हि कुमार सर्वतथागतपूजोपस्थानपरिचर्यास्वपरिखिन्नमानसेन ते सदा भवितव्यम् ॥

---

१. st. 44 = st. 34 in App. I. No. 2.

## No. 5

For अथ खलु...वोचत्, AB read the following passage (see page 19):

अथ खलु चन्द्रप्रभः कुमारभूत उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—पृच्छेयमहं भगवन्तं तथागतमर्हन्तं सम्यक्संबुद्धं कंचिदेव प्रदेशम्, सचेन्मे भगवानवकाशं कुर्यात् पृष्टप्रश्नव्याकरणाय । एवमुक्ते भगवांश्चन्द्रप्रभं कुमारभूतमेतदवोचत्—पृच्छ त्वं कुमार तथागतमर्हन्तं सम्यक्संबुद्धं यद्यदेवाकाङ्क्षसि। नित्यकृतस्ते कुमार तथागतेनावकाशः। एवमुक्ते चन्द्रप्रभः कुमारभूतो भगवता कृतावकाशो भगवन्तमेतदवोचत् ॥

## No. 6

After आमन्त्रयते स्म, ABT read the following passage (See page 23, foot-note 2):

तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन इमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन आदीप्तशिरश्चैलोपमचित्तेन मातापितृपुत्रदुहितृज्ञातिसालोहितसंबन्धिबान्धवान् भार्यादींश्च अभिन्नदपहाय सर्वराज्यैश्वर्यसुखांश्च खेटपिण्डकवदुत्सृज्य अभिनिष्क्रान्तान्तगृहावासेन भवितव्यम्, अरण्याभिमुखेन च । तत्कस्य हेतोः? अभिनिष्क्रान्तगृहावासस्य हि कुमार अरण्याभिमुखस्य च बोधिसत्त्वस्य महासत्त्वस्य न दुर्लभा भवत्यनुत्तरा सम्यक्संबोधिः। तस्मात्तर्हि कुमार पुत्रमित्रज्ञातिसालोहितसंबन्धिबान्धवान् भार्यादींश्च पावकवदुत्सृज्य सर्वराज्यैश्वर्यसुखांश्च खेटपिण्डकवदपहाय अभिनिष्क्रान्तगृहावासोऽरण्याभिमुखश्च भविष्यामीत्येवं त्वया कुमार सदा शिक्षितव्यम्। तदनेनापि ते कुमार पर्यायेण एवं वेदितव्यम् ॥

## No. 7

After आमन्त्रयते स्म, ABT add the following passage (See page 41, foot-note 2):

तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन इमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन सर्वधर्माणामभावस्वभावज्ञानकुशलेन भवितव्यम्। कथं च कुमार बोधिसत्त्वो महासत्त्वः सर्वधर्माणामभावस्वभावज्ञानकुशलो भवति? इह कुमार बोधिसत्त्वेन महासत्त्वेन अभावस्वभावा अनिमित्ता अलक्षणा अनुत्पन्ना अनिरुद्धा अनक्षराः शून्या आदिशान्ताः प्रकृतिविशुद्धाः सर्वधर्माः प्रज्ञातव्याः। यदा च कुमार बोधिसत्त्वेन महासत्त्वेन अभावस्वभावा अनिमित्ता अलक्षणा अनुत्पन्ना अनिरुद्धा अनक्षराः शून्या आदिशान्ताः प्रकृतिविशुद्धाः सर्वधर्माः परिज्ञाता भवन्ति यथाभूततः, तदायं कुमार बोधिसत्त्वो महासत्त्वः सर्वधर्माणामभावस्वभावज्ञानकुशल इत्युच्यते। सर्वधर्माणामभावस्वभावज्ञानकुशलो हि कुमार बोधिसत्त्वो महासत्त्वो रूपशब्दगन्धरसस्प्रष्टव्यधर्मेभ्यो न रज्यते न दुष्यते न मुह्यते। तत्कस्य हेतोः? तथा हि स तं धर्मं न समनुपश्यति। तं धर्मं नोपलभते। यो रज्येत यत्र वा रज्येत येन वा रज्येत, यो दुष्येत यत्र वा दुष्येत येन वा दुष्येत, यो मुह्येत यत्र वा मुह्येत येन वा मुह्येत, स तं धर्मं न समनुपश्यति नोपलभते। तं

धर्ममसमनुपश्यन् अनुपलभमानः सर्वत्रधातुकेऽनव्यवस्तितो भवति, क्षिप्रमिमं समाधिं प्रतिलभते, क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते । तत्रेदमुच्यते –

अभावाः सर्वधर्मा अनिमित्ता अलक्षणाः ।
अनुत्पन्नानिरुद्धाश्च एवं धर्मान् विजानथ ॥ ४५ ॥
अभावानक्षराः सर्वशून्या शान्तादिनिर्मिताः ।
य एवं जानाति धर्मान् कुमार बुद्धः स उच्यते ॥ ४६ ॥
तस्माद्धि यो इच्छि विपश्चितामिमां
स्वभावसमतां सुगतान माताम् ।
स भावयातु सर्वे अभावधर्मा
प्रतिलभ्स्यतीमां जननीं जिनानाम् ॥ ४७ ॥

तदनेनापि ते कुमार पर्यायेणैवं वेदितव्यम् ॥

No. 8

After आरागयामास, ABT add the following passage (See page 42, foot-note 2):

सर्वेषां च तेषां तथागतानामन्तिकादिमं समाधिमश्रौषीत् । श्रुत्वा च तेभ्यो बुद्धेभ्यस्तेनोद्गृहीतः पर्यवाप्तो धारितो वाचितः प्रवर्तितः, अरणाभावनया भावितो बहुलीकृतः । भावनायोगमनुयुक्तश्च व्यहार्षीत् । स तेनैव पूर्वकेण कुशलमूलेन विंशतीनां कल्पकोटीनामत्ययेन अनुत्तरां सम्यक्संबोधिमभिसंबुद्धोऽभूत् । अचिन्तितार्थो[1] नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोक उदपादि । सोऽप्रमेयानसंख्येयान् सत्वान् प्रतिपाद्य[2] अपरिमाणानां च सत्त्वानां चार्थं कृत्वा ततः पश्चा[3]ज्ज्योतिरिवेन्धनक्षयात् परिनिर्वृतोऽभूत् । तदनेनापि कुमार पर्यायेणैवं वेदितव्यं यथा अयं समाधिः....॥

No. 9

After कुमार, AB read the following passage (See page 44, foot-note 1): T does not translate it:

॥ इच्छेद् बोधिसत्त्वो महासत्त्वः किमित्यहं क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं सर्वसत्त्वांश्चोत्तारयेयं भवार्णवादिति, तेन कुमार बोधिसत्त्वेन महासत्त्वेन अयं सर्वबुद्धसंवर्णितः सर्वधर्मस्वभावसमताविपश्चितः समाधिराजो धारयितव्यः, परेभ्यश्च विस्तरेण संप्रकाशयितव्यः । तत्कस्य हेतोः? जनको ह्ययं कुमार सर्वधर्मसमताविपश्चितः समाधिराजस्तथागतानामर्हतां सम्यक्संबुद्धानाम् । अतोनिर्जाताः सर्वतथागताः सर्वश्रावकप्रत्येकबुद्धाश्च । तस्मात्तर्हि कुमार त्वया सर्वतथागतवर्णितः सर्वतथागतजनकः सर्वधर्मस्वभावसमताविपश्चितः समाधिराजो धारयितव्यो वाचयितव्यः, परेभ्यश्च विस्तरेण संप्रकाशयितव्य इति ॥

तस्माद्धि यो इतीच्छेद् बोधि बुद्धितुं
सत्त्वांश्च संतारयितुं भवार्णवात् ।

१. B सुविचिन्तितार्थो for अचिन्ति°. २. B परिपाच्य for प्रतिपाद्य. ३. B यद् for पश्चात्

धारेतु सूत्रमिमु बुद्धवर्णितं
न दुर्लभा बोधि वरा भविष्यति ॥ ४८ ॥ इति ॥

No. 10

After सर्वदुःखेभ्य', AB add the following passage (see page 54, foot-note 8):

ददातु मे भगवान् मूर्ध्नि दक्षिणं पाणिम् । तत्रेदमुच्यते–

स्वसमा विरजा वररूपधरा
अशरीर अलक्षण प्रशेशून्या[1] ।
स्वशरीर[2] गुणोदधि कारुणिका
दद मूर्ध्नि पाणि अप्रतिमा ॥ ४९ ॥

एवमुक्ते भगवाननेककुशलमूलनिर्गतं विचित्रलक्षणालंकृतं दिव्यं सुवर्णवर्णं दक्षिणं पाणिं चन्द्रप्रभस्य कुमारभूतस्य मूर्ध्नि स्थापयामास । समन्तरेण[3] स्थापिते च भगवता चन्द्रप्रभस्य कुमारभूतस्य मूर्ध्नि दक्षिणे पाणौ, अथ तत्क्षणमेव चन्द्रप्रभस्य कुमारभूतस्य सर्वरूपसंदर्शनमनोजव-गगनगञ्जवज्रोपमशूरंगमानावरणकोटीसर्वतथागतसंदर्शनसर्वशून्यताभिनेकप्राप्तिप्रमुखानि अनेकानि प्रज्ञापारमितानिर्जातानि[4] समाधिकोटिनियुतशतसहस्राणि अनभिलाप्यान्यभिमुखीभूतान्यभूवन् । अनेकानि च धारणीविमोक्षमुखान्यभिमुखीभूतान्यभूवन् । दिव्यं च अनौपम्यमुदारमचिन्त्यं सर्वबुद्धबोधिसत्त्वगोचरविदितं यत्तदार्या आचक्षते प्रीतिसुखं तत् प्रतिलब्धवान् ॥

तत्रेदमुच्यते –

जालाँवनद्धरुचिरं[5] कलशाङ्कुशाङ्क
श्रीवत्सचक्रध्वजमीनपताकचित्रम् ।
बहुकल्पकोटीरतनान विसर्गशौण्डं[6]
चन्द्रप्रभस्य भगवान् ददि[7] मूर्ध्नि पाणिम् ॥ ५० ॥

अथ खलु चन्द्रप्रभः कुमारभूतो दिव्येन अनौपम्येन[8] अचिन्त्येन उदारेण सर्वबुद्धबोधि-सत्त्वगोचरविदितेन प्रीतिसुखेन समन्वागत उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तं सारूप्याभिर्गाथाभिरभ्यभाषीत्–

नमोऽस्तु ते अभयददा अनुत्तरा
नमोऽस्तु ते परहितसत्त्वबान्धवा ।
नमोऽस्तु ते दशबल सत्यविक्रमा
नमोऽस्तु ते असमसमा तथागता ॥ ५१ ॥

---

१ B प्रशसूता for °शून्या २ B सुगम्भीरगुणोदधि for स्वशरीरगुणोदधि ३ B समनन्तरस्थापिनि for समन्तरेण स्थापिते. ४ After °निर्जातानि B adds अनेकानि ५ B माल्यवनद्ध° for जाला ६ B निर्गमपस्के for शौण्डे ७ B स्थपि for ददि. ८ B om. अनौपम्येन.

वन्दे नाथं अतिकारुणिकं वन्दे शूरं चतुरारिजितम् ।
वन्दे वीरं परमार्थविदं वन्दे देवं वरधर्मतनुम् ॥ ५२ ॥

सुविशालप्रज्ञ नभमण्डलोदितं
कृपमैत्ररश्मिजिनसूर्यमूदनम् ।
सुगम्भीरधर्मपरमार्थदेशकं
शरणं गतोऽस्मि तव देव नित्याहम् ॥ ५३ ॥

अथ खलु चन्द्रप्रभः कुमारभूतो भगवन्तं सारूप्याभिर्गाथाभिरभिष्टुत्य भगवन्तमेतदवोचत्—अधिवासयतु etc.

No. 11

After प्राक्रमत्, AB read the following passage (see page 54, foot-note 13):

अथ खलु चन्द्रप्रभः कुमारभूतो गृध्रकूटात् पर्वतादवतीर्य तस्यां वेलायां यावच्च राजगृहं महानगरं यावच्च गृध्रकूटः पर्वतराजोऽत्रान्तरे सर्वं मार्गं समं कारयति स्म विपुलं विस्तीर्णमपगततृणस्थाणुकण्टकपाषाणशर्करकठल्लं शुचिवालुकासंस्तीर्णं रमणीयं मृदुकाचिलिन्दिकसुखसंस्पर्शं दिव्योत्पलकुमुदसौगन्धिकातिमुक्तकमल्लिकाचम्पकपाटलकुन्दतिलकेशराशोकादिभिः सर्वैः सर्वर्तुकैः पुष्पवरैः संछन्नमवसक्तपट्टदामकलापं माल्यदामालंकृतं नानारत्नधूपघटिकावलम्बितपार्श्वम् । सर्वाश्च ता रत्नधूपघटिकाः कालागुरुपरिपूर्णा धूमायन्ते स्म । समुच्छ्रितं छत्रध्वजपताकावैजयन्तीदिव्यरत्नतोरणवितानम् । देशे देशे च नटनर्तकान् दिव्यनृत्यगीतवाद्यसुनिबद्धान् सुशिक्षितान् निवेशयति स्म । अनेकाश्च तुणवपणववीणावेणुमृदङ्गमुकुन्दमुरजोपेताः स्त्रीपुरुषदारकदारिकाः स्वलंकृताः स्थापयति स्म । मार्गस्य चोभयपार्श्वयोर्दिव्यान् जाम्बूनदसुवर्णमयान् नानारत्नकिङ्किणीजालावनद्धमुखरालंकृतान् तुङ्गतालान् नानारत्नमयान् अनेकानि च व्योमकोटीनियुतशतसहस्राणि सप्तरत्नमयांश्च नानावृक्षान् नानारोहपरिणाहसंपन्नान्, सर्वर्तुकसत्रपुष्पफलोपेतान् स्थापयति स्म यदुत भगवतः पूजाकर्मणे । तत्रेदमुच्यते—

सुप्रतिमण्डितमार्गविचित्रमुच्छ्रितच्छत्रपताकवितानम् ।
सुप्रतिनादित तूर्यरवेण तथपि च गीतरवेण मनोज्ञम् ॥ ५४ ॥
नटनर्तकनारिगणैर्बहुभिः सुविचित्रवस्त्रनियुतैर्विविधैः ।
सद्गन्धिचित्रकुसुमैश्च वरैः प्रतिमण्डितो विपुल मार्गवरः ॥ ५५ ॥
मण्डित मार्ग उदार विशाल चन्द्रप्रभेण प्रसाद जनित्वा ।
बुद्ध प्रवेक्ष्यति पुरवर इह शुचि कारुणिको मुनिचन्द्रः ॥ ५६ ॥
शुचिवालिकसंस्तृता दिव्यं छादितो पुष्पवरैः सुमनोज्ञैः ।
सुसमुच्छ्रितो तोरण रत्नवरैर्भासति मार्ग पुरेव अमराणाम् ॥ ५७ ॥

१ B °धर्मतनुम् for °धर्म तनुम्. २ B °दानम् for °सूदनम्. ३ B °नारिगणे for °नारिगणै.

सथलंकृतो मार्ग विचित्रं चन्द्रप्रभेण प्रह्वेणमनेन ।
ये दृष्ट्वा सुरासुरनागा विस्मयजाता अहो [illegible] भणन्ति ॥ ५८ ॥
ताला स्थापित पार्श्वयोर्वरवरास्तुङ्गा सजाम्बूनदा
नद्धा किङ्किणिजालरत्नमुखरा वृक्षा बहु नैकशः ।
तथ स्थापित रत्नवृक्षनियुता सर्वर्तुका पुष्पिता
स्तेहि मार्गवरो विभाति विपुल. स्वर्गे यथा नन्दनम् ॥ ५९ ॥
व्योमापि रतनामया. सुरुचिरा ज्वालावलीभास्वरा
मार्गे स्थापित पार्श्वयोर्निरुपमास्तुङ्गा पृथु संहता ।
येहि शोभितु मार्ग मण्डित महान् विभ्राजते सर्वतो
येनो राजगृह प्रवेक्ष्यति पुरे बुद्धस्त्रिलोकाधिप ॥ ६० ॥
रत्नघटावलम्बितपार्श्वास्ते च पूरित कालगुरुणाम् ।
उच्छ्रति धूप घने व घटेषु दिव्यविकार सुगन्धि विचित्र ॥ ६१ ॥
पृथु भूषित निरुपम दिव्यं चन्द्रप्रभेण जिनस्य कृतेन ।
यावत नगरितो य दुवारं यावत गृध्रकूटो गिरिराजा ॥ ६२ ॥

No 12

After °भिकीर्णं, AB read the following passage (see page 54, foot note 18) धूपनधूपित वितानविततमवसक्तपट्टदामकलाप समुच्छ्रितच्छत्रध्वजपताकमेव राजगृह महानगर सर्वथ्यान्तरापणमपगतपाषाणशर्करकठल्ल विचित्रपुष्पाभिकीर्णं चन्दनचूर्णाभिकीर्णं चन्दनानुलिप्तमकार्षीत् । इत्येवमपरिमाणया व्यूहया गवाक्षतोरणनिर्यूहपञ्जरजालार्धचन्द्रसमलङ्कृत राजगृह महानगरं समलङ्कृत्य स्व च गृहमनेकालङ्कारविचित्रप्रकारविभूषितमनेकरत्नहारविकार-प्रलम्बित दिव्यपट्टवस्त्रप्रतिमण्डितोपशोभितोपचारविविधविचित्रमाल्यदामालङ्कृत च कारयति स्म। मध्ये च भगवतो अनेकानि च रत्नमयान्यासनकोटीनियुतशतसहस्राणि प्रज्ञापयति स्म। नानारत्नमयाश्च धूपवटिकाश्चतुर्दिशमव-लम्बिता । तासु च शुद्धमगुरु धूमायते स्म यदुत भगवत पूजाकर्मणे । दिव्यनृत्यगीतावाद्य-निनादित समुच्छ्रितच्छत्रध्वजपताकमनेकदेवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्य-शतसहस्रसमूहावलोकित विविधविचित्ररत्नपुष्पाभिकीर्णं चन्द्रप्रभ कुमारभूतस्तद् गृहमकार्षीद् दिव्यं सिंहासन प्रज्ञापयति स्म। ... देवमनुष्यातिक्रान्तं दिव्य सिंहासन प्रज्ञापयति स्म। यदुत भगवत परिभोगाय । तत्रेदमुच्यते —

सुप्रतिमण्डित गृहवर सर्वं चन्द्रप्रभेण उदार विशालम् ।
दिव्यसिंहासनमध्यनिविष्ट यत्र निषेत्स्यति लोकप्रदीप ॥ ६३ ॥
आसनकोटीसहस्रमनन्ता स्थापित रत्नमया सुविचित्रा ।
येषु निषेत्स्यति सघ गुरुस्य लोकप्रदीपकरस्य जिनस्य ॥ ६४ ॥

१ B प्रह्वमनेन for प्रह्वेणमनेन २ B यचे for य ३ B 'रत्नजाल' for 'जालरत्न', ४ B मण्डितु मार्गे शोभितु ५ B विभ्राजसि . ६ B उत्थित धूप घटेषु ७ B सुगन्धिचित्र

अवलम्बित सर्वदिशासु अगुरुप्रपूरित धूपघटाश्च ।
रत्नमयास्ते सर्व विचित्रास्तेषु च उच्छ्रुति धूप मनोज्ञा ॥ ६५ ॥

बहुरत्नपुष्परचितैर्विविधै
सुसुगन्धिचित्रकुसुमैश्च वरैः ।
आकीर्ण वेश्मवर धरणीतल च
चन्द्रप्रभेण दशबलागमने ॥ ६६ ॥

नर्तनगायनवाद्यरवेण नादितु गृहवर सर्व समन्तात् ।
सूच्छ्रितछत्रपताक भासति मन्दिरु मेरु यथैव ॥ ६७ ॥

आकीर्ण पूर्ण नरनारिगणैस्तथ नागयक्षप्रमुखैर्बहुभि ।
अवलोकित च बहुदेवशतैश्चन्द्रप्रभस्य महाभवनवरम् ॥ ६८ ॥

अथ खलु चन्द्रप्रभ कुमारभूत इत्येवमपरिमाणया व्यूहया राजगृह महानगर समलकृत्य स्व च निवेशन समलकृत कृत्वा च तस्या एव रात्र्या अत्ययेन प्रत्यूषकालसमये नानातूर्यशतै प्रवाद्यमानैश्छत्रध्वजपताकाकोटीभिरभ्युच्छ्रिताभिरशीत्या च बोधिसत्त्वकोटीनियुतशत सहस्रै सार्ध सर्वैर्दिव्यमान्दारवपुष्परचिताञ्जलिपुटै येचित्तत्र एकजातिप्रतिबद्धा बोधिसत्त्वा यदुत अवलोकितेश्वरमहास्थामप्राप्तगन्धहस्तिरत्नकेतुदुन्दुभिस्वरदुरभिभवमञ्जुश्रीकुमारभूतवीरसेनसुबाहु-रत्नकुसुमामोघदर्शिमैत्रेयप्रभृतय । एतत्पूर्वंगमेन राजगृह महानगर समलङ्कृत्य स्व च गृहमनेकालकारविचित्रप्रकारविभूषितमनेकरत्नहारविकारप्रलम्बित दिव्यवस्त्रप्रतिमण्डित महता बोधिसत्त्वगणेन परिवृत पुरस्कृत अनारोहस्थलकृतानेकहस्त्यश्वरथसमूहसमिश्रया इतरयापि अपरिमाणया जनपदव्यूहया स्वय च दिव्यमान्दारवपुष्पभरिताञ्जलि महता बोधिसत्त्वानुभावेन महत्या बोधिसत्त्वद्धर्या महता बोधिसत्त्वविकुर्विन दिव्यमनोज्ञैर्मनोहरैर्बोधिसत्त्वहाहाकारकिलि किलाप्रक्ष्वेडितशब्दै श्रूयद्भि राजगृहान्महानगरात् तथा तद्द्वारेण निष्क्रम्य येन गृध्रकूट पर्वतराजो येन भगवास्तेनोपसक्रामत् । उपसक्रम्य भगवत पादौ शिरसाभिवन्द्य भगवन्त त्रि प्रदक्षिणीकृत्य दिव्यमान्दारवपुष्पाञ्जलिना भगवन्तमवकीर्य एकान्तेऽस्थात् । तेऽपि मैत्रेयप्रभृतयो बोधिसत्त्वा महासत्त्वा भगवत पादौ शिरसाभिवन्द्य भगवन्त त्रि प्रदक्षिणीकृत्य स्वाभि स्वाभिर्दिव्यमान्दारवपुष्पाञ्जलिभिर्भगवन्तमवकीर्य एकान्ते तस्थु । एकान्तस्थितश्चन्द्रप्रभ कुमारभूत उत्थायासनादेकासमुत्तरासङ्ग कृत्वा दक्षिण जानुमण्डल पृथिव्या प्रतिष्ठाप्य येन भगवास्तेनाञ्जलि प्रणम्य भगवत कालमारोचयति स्म – कालोऽय भगवन्, समय सुगत, सज्ज भक्त यस्येदानीं भगवन् काल मन्यसे । सार्ध च बोधिसत्त्वगणेन भिक्षुसघेन च अन्यैश्च महेशा ख्यमहेशाख्यैरुदारोदारदेवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगकुम्भाण्डप्रेतपूतनै मनुष्यामनुष्यैरपि सार्ध राजगृह महानगर प्रवेष्टुम्, मम च गृहे भक्त भोक्तुम् । तत्रेदमुच्यते–

सुअलकृतमपि पुरवर सर्वं
तथपि च मन्दिरु मण्डितु नाथा ।

सज्जितु शतरसु भोजनु दिव्यं
कालु तथपि तु उत्थिहि सुगता ॥ ६९ ॥
दशबल गुणधर ऋषिवरनमिता
सुतगणपरिवृतु प्रविशहि नगरम्।
उत्थितु दिनकरु तमनिमतहरा
समयु त भगवन् मम गृहि भोक्तुम् ॥ ७० ॥
सुसहितो देव गच्छिहि गेहं
मेष्यति अर्थं महन्तु जनस्य।
यथ तुह व्याकृतु दीपंकरेणो
तथ मम व्याकरि लोकसमक्षम् ॥ ७१ ॥
व्याकरणं मम श्रुत्विह लोको
चित्तु जनेष्यति अत्र उदारम्।
बुद्ध भविष्यति सर्वजनोऽयं
नास्तिह कश्चिदभाजन सत्वो ॥ ७२ ॥
उत्थिहि उत्थिहि दशबल देवा
पुरु भमनुमह्यु गच्छिहि गेहम्।
यथ तुहु गच्छसि मन्दिर मह्यं
तथ अहु यास्यमि बोधिद्रुमेन्द्रम् ॥ ७३ ॥
तत्र च गत्वहु बोधिद्रुमेन्द्रे
बध्वा आसन अचल अकम्पम्।
भञ्जिय मार ससैन्य कुमैत्रा
प्राप्स्यमि बोधि यथा त्वयि प्राप्तम् ॥ ७४ ॥

अथ खलु भगवांश्चन्द्रप्रभस्य कुमारभूतस्यारोचनां विदित्वा चन्द्रप्रभं कुमारभूतं गाथया प्रत्यभाषत—

उत्थिहि चन्द्रप्रभा जिनपुत्रा
उत्थिहि दानरता वरसत्वा।
उत्थिहि कारुणिका दृढशीला
यामि तस्य भोक्तु निवेशनमद्य ॥ ७५ ॥

अथ खलु भगवानिमां गाथां भाषित्वा उत्थायासनात् कल्यमेव निवास्य पात्रचीवरमादाय महता भिक्षुसंघेन सार्धं परिपूर्णेन भिक्षुशतसहस्रेण संबहुलैश्च बोधिसत्त्वैर्महासत्त्वैः परिवृतः पुरस्कृतोऽनेकैश्च देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगकुम्भाण्डप्रेतपूतनमनुष्यामनुष्यशतसहस्रैः पूज्यमानोऽभिष्टूयमानो महता बुद्धानुभावेन महता बुद्धप्रातिहार्येण महता बुद्धेर्यापथेन रश्मिकोटीनियुतशतसहस्रैर्निश्चरद्भिर्नानातूर्यकोटीनियुतशतसहस्रैः प्रवाद्यमानैश्छत्रध्वजपताकाकोटी-

भिरनेकाभिरयुच्छ्रिताभिर्नानाचित्ररूपवर्णोदारैरनेकैर्हंसक्रौञ्चचक्रवाकसारसचकोरमयूरचापशुकशारिकाकोकिलकलविङ्ककुणालप्रभृतिभिः सर्वैः शकुनिगणवृन्दैरनेकप्रकारप्रियमधुरमनोज्ञभाविभिः रुतैरिवान्तरीक्षे वाद्यविशेषान् स्वरवैः कुर्वद्भिर्दिव्यविचित्ररुचिररत्नमयैश्चोदारोदारैरनेकैर्धूपघटिकानियुतशतसहस्रैः सर्वैर्वैदूर्येन्द्रनीलस्फटिकमुसारगल्वदण्डैरिन्द्रकेतुसुरूपविकटनकुल्याश्विकशाक्यवर्धनप्रभृतिभिरनेकैर्यक्षेन्द्रकोटीनियुतशतसहस्रैरुभयहस्तमुसलप्रगृहीतैरुरगसारगोशीर्षमृणालतमालहरिमलयलोहितचन्दनागुरुपरिपूर्णैर्धूमायद्भिर्नानादिग्देशागतैश्च महेशाख्यैर्महेशाख्यैर्भूपालैरनारोहस्वलंकृतानेकहस्त्यश्वरथपदातिकसमूहपरिवृतैर्महामाल्यदामरत्नमालपाणिपरिगृहीतैः पुरतः पद्भ्या गच्छद्भिरनारोहैश्च तैः स्वलंकृतैर्हस्त्यश्वैः सलीलमन्दिरवेलगमनाभिप्रायैः सुमनोज्ञमनोहरं कूजद्भिः ब्रह्मा च दक्षिणेन भगवतः पूजोपस्थानपरिचर्यां कुर्वन् गच्छति स्म । वामेन च शक्रो देवानामिन्द्रो [illegible] मुकुटकटककेयूरकुण्डला- [illegible] दिव्यमान्दारवरोचकोविदारस्थालकक्कुबकेकचम्पककर्णिकाराशोकपाटलातिमुक्तकोत्पलतिलकबकुलमल्लिका कुन्दकेसरपद्मकुमुदपुण्डरीकसौगन्धिकरत्नदामकरत्नागाररत्नफलव्यग्रहस्ता नानातूर्यशतसहस्राणि नादयन्तोऽम्बरकोटीर्भ्रामयन्तो हाहाकारकिलिकिलाप्रक्ष्वेडितकशब्दं प्रमुञ्चन्तो महापुष्पवर्षं प्रवर्षन्तः सर्वगगनतलं निरन्तरमापूर्य स्थिता भगवतः पूजाकर्मणे । पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवररत्नवर्षैश्च प्रवर्षद्भिर्भगवांस्तेनोदद्वारेण राजगृहं महानगरं भोक्तुं प्रविशति स्म । इयमत्र धर्मता ॥

तत्रेदमुच्यते—

कालु विदित्व तथागतु बुद्धः प्रक्रमते भगवान्नरसिंहः ।
सर्वगुणैः समलंकृतु वीरो भासयमान अचिन्तिय क्षेत्रान् ॥ ७६ ॥
तत्र वगेकितु स्थामु अमोघो गन्धहस्ती पि च रत्नयष्टिः ।
रत्नकेतु दुरभिभवु वीर एत चान्य जिनपादानुबद्धा ॥ ७७ ॥
दक्षिणतो अजितः स्थितु तस्य मैत्रकु नाम अनन्तगुणाढ्य ।
योऽस्य अनन्तरु भेष्यति बुद्धः पुण्यज्ञानपरिपूरितभारः ॥ ७८ ॥
मैत्र्युपेक्षमुदभावितकायो करुणया च जनितः स महात्मा ।
धर्ममयापर्यन्तगुणेभिश्चिन्तयमानु मुनीन्द्रगुणानि ॥ ७९ ॥
कारुणिकः सुगतमनुवन्धि तस्य अनन्तरु यत्तकु केचित् ।
भद्रकल्पि महामतिमन्तो ये चतुरूनु बुद्धसहस्रा ॥ ८० ॥
तेभि पुरस्कृतु मैत्रकु तत्र येन पूर्वि पुरि राजगृहेऽस्मिन् ।
कल्पि कल्पि जिन पूजितवन्ता चन्द्रकान्तप्रमदिव्यशरीरा ॥ ८१ ॥
चन्द्रप्रभ पुरतः स्थितु वीर वामस्थितो वरकारुणिकस्य तत्र ।
मञ्जुशिरी बहुकोटीशतेभिः ऋद्धिगुणेभि निष्पन्नशरीरा ॥ ८२ ॥
क्षेत्रशतान्यनन्त व्रजन्तो तस्य अनन्तरु श्रावकसंघा ।
शारिसुतो तथ मौद्गल काश्यप कप्फिण नन्दु सुभूती ॥ ८३ ॥

भद्रिकराजु तथपि कौण्डिन्यो आनन्द तथ राहुल स्थविरो।
स्वागत कौष्ठिलु पूर्ण उदायी रेवत कोष्ठिलुपालिअनिरुद्धो ॥ ८४ ॥
तज्जटिला नव पूर्ण सहस्रं श्रावकसंघ अनन्तरि सर्वे।
उग्रतपा व्रतवेदविधिज्ञा शापअनुग्रहदानसमर्थाः ॥ ८५ ॥
प्राञ्जलि प्रहृकृता रिषि दान्ता शान्तमना अथ दान्तमनोभिः।
बुद्ध पुरस्कृतु लोकप्रदीपो प्रविशति कारुणिको वरसिंहः ॥ ८६ ॥
प्राणिसहस्र प्रमोचयमानो कार्तिकपूर्णिमचन्द्र यथैव।
तारागणाधिपतिः परिशुद्धो ग्रहसहस्रशतेभिर्बहुभिः ॥ ८७ ॥
अप्रतिमो परिवारितु शास्ता यच्चरणौ पुरद्वारि निक्षिप्तौ।
कम्पित मेदिनि सद्भवनषण्डा देवमहोरगदानवसंघाः ॥ ८८ ॥
पुष्प क्षिपन्ति शुभाम्बरगन्धान् चन्दनचूर्ण उदार विचित्रान्।
कृत्य प्रदक्षिणु कारुणिकस्य बोधयि ते प्रणिधि करोन्ति ॥ ८९ ॥

समनन्तरप्रक्षिप्तश्च भगवता दक्षिणश्चक्ररत्नालंकृतापरिमितकुशलमूलसंचित इन्द्रकीले पादः, अथायं त्रिसाहस्रमहासाहस्रो लोकधातुः षड्विकारं कम्पितः प्रकम्पितः संप्रकम्पितः। चलितः प्रचलितः संप्रचलितः। वेधितः प्रवेधितः संप्रवेधितः। क्षुभितः प्रक्षुभितः संप्रक्षुभितः। रणितः प्ररणितः संप्ररणितः। गर्जितः प्रगर्जितः संप्रगर्जितः। पूर्वा दिगवनमति पश्चिमा दिगुन्नमति। पश्चिमा दिगवनमति पूर्वा दिगुन्नमति। उत्तरा दिगवनमति दक्षिणा दिगुन्नमति। दक्षिणा दिगवनमति उत्तरा दिगुन्नमति। अन्तादवनमति मध्यादुन्नमति। मध्यादवनमति अन्तादुन्नमति। महतश्चावभासस्य लोके प्रादुर्भावोऽभूत्। अन्यानि चाप्रमेयान्यसंख्येयान्याश्चर्याद्भुतानि प्रातिहार्याणि संदृश्यन्ते स्म। इयमत्र धर्मता ॥ तत्रेदमुच्यते —

No. 13

After 10. 61, ABT read the following passage ( see page 63, foot-note 8 ):

उपगतु गिरिवल्गु कौञ्जनागराजौ
सहपरिवारु तथागतस्य मूलम्।
वर विविधु गृहीत्व रत्नपुष्पं
प्रणिपतितौ सुगतस्य पादयुग्मे ॥ ९० ॥
पद्म तथा महापद्मु नागराजा
तथ पुन वासुकिनन्दु भोगवत्ब।
उपगतु वृषभिस्य ते सकाशं
प्रणिपतिताः सुगतस्य गौरवेण ॥ ९१ ॥
उपगतु मणिनागु नागराजा
प्रीतमना वृषभिस्य पादमूलम्।

अल्पेच्छ संतुष्ट वने वसन्ति
प्रशान्तचारित्र प्रधानगोचराः ॥ ११० ॥
अनुमोदमी एकक येऽद्वितीया
वने वसन्ति सद खड्गभूताः ।
आजीवशुद्धाः सद अल्पकृत्या
ये ज्ञानहेतोर्न करोन्ति कुहनाम् ॥ १११ ॥
अनुमोदमी येषु न संस्तवोऽस्ति
न चापि ईर्ष्या न फलेषु तृष्णा ।
उत्त्रस्त त्रैधातुक नित्यलब्धा
अनोपलिप्ता विचरन्ति लोके ॥ ११२ ॥
अनुमोदमी येषु प्रपञ्च नास्ति
निर्विण्ण सर्वानभवोपपत्तिः ।
अपरिगृहीता उपशान्तचित्ता
न दुर्लभस्तेषु समाधिरेषः ॥ ११३ ॥

No. 17

Before स्मरामि in 16. 1, ABT read the following passage (see page 98, foot-note 1):

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म–तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वान् सर्वभवदुःखेभ्यो मोचयितुकामेन आर्ये च अनुत्तरे समाधिप्रीतिसुखे सत्त्वान् प्रतिष्ठापयितुकामेन अयं सर्वधर्मस्वभावसमताविपञ्चितः समाधिराजस्तेन श्रोतव्य उद्ग्रहीतव्यः पर्यवाप्तव्यः धारयितव्यो वाचयितव्यः प्रवर्तयितव्यः उद्देष्टव्यः स्वाध्यातव्यः अरणाभावनया भावयितव्यो बहुलीकर्तव्यः, परेभ्यश्च विस्तरेण संप्रकाशयितव्यः। तत्कस्य हेतोः? सर्वापायातिक्रमको हि कुमार अयं सर्वधर्मस्वभावसमताविपञ्चितः समाधिराजः सर्वव्याधिप्रमोचकश्च। यथा च कुमार बोधिसत्त्वेन महासत्त्वेन अयं सर्वधर्मस्वभावसमताविपञ्चितः समाधिराजः श्रुतो भवत्युद्गृहीतो भवति च, तदायं कुमार बोधिसत्त्वो महासत्त्वः सर्वसत्त्वानां सर्वभवदुःखेभ्यो मोचयित्वा आर्ये च अनुत्तरे समाधिप्रीतिसुखे सत्त्वान् प्रतिष्ठापयति च। इमं समाधिं प्रतिलभते, क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते। अथ खलु भगवान् तस्यां वेलायां चन्द्रप्रभस्य कुमारभूतस्य एवमेवार्थमुद्दयोत्य गाथाभिगीतेन इमं पूर्वयोगकथानिर्देशं संप्रकाशयति स्म–

No. 18

Before अथ, ABT read the follwing passage (see page 103, foot-note 1):

तस्मिन् खलु पुनः पूर्वयोगकथापर्यवसाने वर्तमाने अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वस्तथा निषण्ण एव भगवन्तमनया गाथया पृच्छति स्म–

यामि तथागत पर्वतराज
गृध्रकूट सद्बुद्धनिवासम् ।
तत्र च गत्व त्रिलोकप्रदीपा
पूजा करोमि अचिन्तिय तुभ्यम् ॥ ११४ ॥

अथ खलु भगवान् मैत्रेयस्य बोधिसत्त्वस्य महासत्त्वस्य चेतसैव चेतःपरिवितर्कमाज्ञाय मैत्रेय बोधिसत्त्व महासत्त्व मनसा गाथया प्रेष्यति स्म —

गच्छहि त्व अजितो जितमारा
पर्वतराज जिनैरभिव्युस्तम् ।
तत्र च भेष्यति अर्थ महान्तो
सर्वजगस्य अनुत्तर क्षिप्रम् ॥ ११५ ॥

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वो भगवता गाथया मनसानुप्रेषितो भगवन्त मनसा वन्दित्वा भगवन्त मनसैव त्रि प्रदक्षिणीकृत्य ततः पर्षन्मण्डलादपक्रम्य येन अनन्तबुद्धनिवासो गृध्रकूट पर्वतराज, येन महाचैत्यम्, तेनोपसक्रान्त । उपसक्रम्य च तत्क्षणमेव गृध्रकूट पर्वतराज सम विपुल विस्तीर्णमपगततृणस्थाणुकण्टकपाषाणशर्कराकठल्लं सर्वससामन्तक सप्तरत्नमयमकार्षीत् । अभ्यतिष्ठत् रुचिरेन्द्रनीलरत्नमयभूतल दिव्य च अचिन्त्यमनौपम्यसर्वालंकाररत्ननिभूषितमनल्पेयानेकरत्नप्राकाररत्नव्यूहप्रतिमण्डित दिव्य तुषितकायिकवस्तुप्रतिमण्डितोपशोभितोपचार विचित्रधूपघटिकानिर्धूपित माल्यदामालकृत नानापुष्पाभिकीर्ण दिव्यामरवाद्यनादितनिर्घोष समुच्छ्रितच्छत्रध्वजपताकाकुलाकीर्ण वितानविततम् । मण्डमध्ये च मण्डलमालस्य सप्तरत्नमय दिव्य सिंहासनमभिनिर्मिमीते स्म अनन्तवस्त्राकीर्ण मृदुकाचिलिन्दिकसुखसस्पर्श दिव्य तुषितकायिकप्रावारप्रत्यास्तीर्णमुपरिगर्भखोलकमुभयतो लोहितोपधानकौशेय विस्तारोच्छ्रित देवमनुष्यातिक्रान्तम् । जाम्बूनदमय च रमणीय पादपीठ मुक्ताजालपरिणद्ध दिव्यदूष्यरत्नवस्त्रछादित सिंहासनोपनिबद्ध दिव्य रत्नघण्टामालानिश्चरितमनोज्ञमधुरनिर्घोष समन्ताद्दिग्मणिमहारत्नावभासप्राप्त विमलवैडूर्यमहामणिरत्नावभास विमलवैडूर्यमहामणिरत्नदण्ड महारत्नच्छत्रमभिनिर्मिमीते स्म यदुत भगवत परिभोगाय ॥

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वो गृध्रकूट पर्वतराज सर्वत सामन्तकमनेकविचित्र रत्नव्यूहालकारमचिन्त्य प्रतिमण्डितमभिनिर्माय तत्क्षणमेव पुनरेव चन्द्रप्रभस्य कुमारभूतस्य निवेशन प्रविष्टोऽभूत् । प्रविश्य च भगवन्त मनसाभिरच मनसैव च भगवन्त त्रि प्रदक्षिणीकृत्य स्वके आसने निषण्णोऽभूत् । तत्रेदमुच्यते—

निर्मितु पर्वतु दिव्य विशालो
रत्नशिलातलु शोभनु रम्या ।
दिव्य अचिन्त्य मनोमयमात्र
रत्नसिंहासनमभ्यनिविष्टम् ॥ ११६ ॥

छत्र च दिव्य मनोज्ञ सुघोषं
दिग्मणिरत्नवभासि विशालम्।
शुद्धवैडूर्यमनोरमदण्डं
निर्मिणि तत्र जिनो जिनपुत्रः ॥ ११७ ॥

निर्मिणियान च मैत्रकु वीरो
पर्वतु रत्नमयं सुविचित्रम्।
आसनरत्न च कोशप्रमाणं
तत्क्षणमेव च वेश्म प्रविष्टः ॥ ११८ ॥ इति ॥

No. 19

After 17. 50, B reads the following passage (see page 111, foot-note 2)[1]:

से पार्थिवः श्रुत्व समाधिमेतं
उत्सृज्य राज्यं तथ प्रव्रजित्वा।
सखेद( सूत्रान्त ? )निर्हारपदेषु कौशलं
सत्यान निर्देशपदेषु निश्चयः।
विमुक्तिज्ञानस्य च साक्षिकारिता
इयं जिने ईदृश आनुशासनी ॥ ११९ ॥

एकासतो वाचमुदाहरेय्या
यथा व देशि कुशलो विनिश्चये।
निष्काङ्क्षु वाचाय सदा भवेय्या
इयं जिने ईदृश आनुशासनी ॥ १२० ॥

शून्याश्च धर्माः सद सेवितव्या
विशारदः शीलबले प्रतिष्ठितः।
समाधिस्थाने न समातरेय्या
इयं जिने ईदृश आनुशासनी ॥ १२१ ॥

न ज्ञानलाभं पि कदाचि देशये-
च्चित्तस्य चापि क्षुहनां न कुर्यात्।
दृष्टिकृतां सर्वे विवर्जये च
इयं जिने ईदृश आनुशासनी ॥ १२२ ॥

प्रतिभानु श्रेष्ठं वर धारणी या
ज्ञानस्य चोभासु अनन्तपारो।

[1] See stanzas 17. [illegible] and the following.

अधिष्ठान मन्त्र प्रतिभानु युक्ति
इयं जिने ईदृश आनुशासनी ॥ १२३ ॥

न चास्य द्वारं इम मार्गभावना
प्रतिप्रत्तिसारो वादु नयश्च भद्रको ।
अनुशासनी अनुचरित्व शासने
इयं जिने ईदृश आनुशासनी ॥ १२४ ॥

..................................
.................................... ॥
..................................
अज्ञानु वर्जेय्य स्थिहित्व ज्ञाने
इयं जिने ईदृश आनुशासनी ॥ १२५ ॥

ज्ञानप्रतिष्ठा तथ योगभूमी
योगेश्वरो बोधयि प्रस्थितानाम् ।
निषेवणा सत्पुरुषाण नित्यं
इयं जिने ईदृश आनुशासनी ॥ १२६ ॥

अयुक्तयोगीन सदा निवर्जना
तथागतैर्भाषित बुद्धभूमिः ।
अनुमोदिता सर्विण पण्डितेहि
इयं जिने ईदृश आनुशासनी ॥ १२७ ॥

बालैः प्रतिक्षिप्तमजानकेहि
अभूमि तत्र पृथुश्रावकानाम् ।
परिगृहीता सद बोधिसत्त्वै-
रियं जिने ईदृश आनुशासनी ॥ १२८ ॥

तथागतेहि अनुबुद्धमेतं
देवेहि च पूजित सत्कृतं च ।
अनुमोदितं ब्रह्मसहस्रकोटिभिः
कश्चित् जिनो भाषति तं समाधिम् ॥ १२९ ॥

नागसहस्रेहि सदा नमस्कृता
सुतपिण्डं सदा परित्यजित्वा ।
प्रियज्ञातिबान्धवं स प्रव्रजि
तस्य अन्तिकां ........ ॥ १३० ॥

No. 20

After आपद्यते in chapter 19, AB add the following passage (see page 132, foot-note 5):

एवमुक्ते भगवांश्चन्द्रप्रभं कुमारभूतमेतदवोचत्—यः कुमार बोधिसत्त्वो महासत्त्व इमं सर्वधर्मस्वभावसमताविपञ्चितं समाधिं श्रोष्यति, श्रुत्वा चोद्ग्रहीष्यति, धारयिष्यति, वाचयिष्यति, पर्यवाप्स्यति, प्रवर्तयिष्यति, अरणाभावनया भावयिष्यति, बहुलीकरिष्यति, परेभ्यश्च विस्तरेण संप्रकाशयिष्यति, स कुमार बोधिसत्त्वो महासत्त्वोऽचिन्त्यबुद्धधर्मनिर्देशकुशलो भविष्यति, अचिन्त्यबुद्धधर्माधियुक्तश्च अचिन्त्यबुद्धधर्मपरिपृच्छकुशलश्च अचिन्त्यबुद्धधर्मपर्येषणाकुशलश्च भविष्यति। अचिन्त्यांश्च बुद्धधर्मान् श्रुत्वा नोत्त्रसिष्यति न संत्रसिष्यति, न संत्रासमापत्स्यते । अस्मिन् खलु पुनः सर्वधर्मस्वभावसमताविपञ्चितात् समाधेरप्रमेयगुणानुशंसनिर्हारपदेषु भगवता चन्द्रप्रभस्य कुमारभूतस्य निर्दिश्यमानेषु, अथ खलु चन्द्रप्रभः कुमारभूतः इमानि सर्वधर्मस्वभावसमताविपञ्चितात् समाधेरप्रमेयगुणानुशंसनिर्हारपदान्यचिन्त्यानि भगवतः श्रुत्वा तस्मिन् समये चन्द्रप्रभः कुमारभूतः इमं सर्वधर्मसमताविपञ्चितसमाधिराजं प्रतिलब्धवान् । अप्रमेयासंख्येयाश्च बोधिसत्त्वा महासत्त्वाः महाभिज्ञाज्ञानस्य लाभिनोऽभूवन् । अप्रमेयाणां च सत्त्वानां महाकरुणावताराभिमुखानि चित्तान्युत्पन्नानि । अयं च त्रिसाहस्रमहासाहस्रो लोकधातुः षड्विकारं कम्पितः प्रकम्पितः संप्रकम्पितः । चलितः प्रचलितः संप्रचलितः । वेधितः प्रवेधितः संप्रवेधितः । क्षुभितः प्रक्षुभितः संप्रक्षुभितः । रणितः प्ररणितः संप्ररणितः । गर्जितः प्रगर्जितः संप्रगर्जितः । पूर्वा दिगवनमति पश्चिमा दिगुन्नमति । पश्चिमा दिगवनमति पूर्वा दिगुन्नमति । उत्तरा दिगवनमति दक्षिणा दिगुन्नमति । दक्षिणा दिगवनमति उत्तरा दिगुन्नमति । अन्तादवनमति मध्यादुन्नमति । मध्यादवनमति अन्तादुन्नमति । अप्रमेयस्य चावभासस्य लोके प्रादुर्भावोऽभूत् । महच्च दिव्यगन्धवर्षमभिप्रावर्षत् । यावन्तश्च देवा देवपुत्राश्च संनिपतिताः संनिपण्णाश्च धर्मश्रवणाय, ते उपर्यन्तरीक्षेऽभ्युपगम्य इमान् सर्वधर्मसमताविपञ्चितात् समाधेरप्रमेयान् गुणानुशंसनिर्हारपदान् श्रुत्वा ते सर्वदेवा देवपुत्राश्च तुष्टा उदग्रा आत्तमनस्काः प्रमुदिताः प्रीतिसौमनस्यजाता हाहाकारकिलकिलाप्रक्ष्वेडितनिर्नादनिर्घोषाण्यकार्षुः । महान्तं च नानाविधं दिव्यं पुष्पवर्षमवसृजन्ति स्म । दिव्यानि चानेकानि तूर्यकोटीनियुतशतसहस्राणि पराहनन्ति स्म । एवं चैकोदाहारस्वरेण वाचो भाषन्ते स्म—अहो सुलब्धा अस्माकं लाभाः, यैरस्माभिरिमान्यप्रमेयगुणानुशंसनिर्हारपदानि भगवतोऽन्तिकात् श्रुतानि । ते वयं भगवन् सर्वे सहिताः समग्रा यथायंश्चन्द्रप्रभो बोधिसत्त्वो महासत्त्वः सर्वधर्मस्वभावसमताविपञ्चितस्य समाधेर्लाभी, तथा वयमपि भगवन् सर्वे एवंविधस्यैव सर्वधर्मस्वभावसमताविपञ्चितस्य समाधेर्लाभिनो भवेम इति ॥

No. 21

After 'प्रतिपन्नेन, AB read the following passage (see page 136, foot-note 4):

कुमार बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वानामन्तिके महाकरुणाचित्तमुत्पाद्य अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयितव्यम् । पुनरपरं कुमार बोधिसत्त्वेन महासत्त्वेनेमं महाकरुणावतारं

धर्मपर्यायमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेनारब्धवीर्येण कायजीवितनिरपे-
क्षेण भूत्वा अजस्रं कल्याणमित्राणि पर्येषितव्यानि, सेवितव्यानि, भजितव्यानि, पर्युपासितव्यानि ।
अनाथेन यस्य महाकरुणावतारस्य धर्मपर्यायस्य देवयितारः पर्येषणा च कुमार तेन बोधिसत्त्वेन
महासत्त्वेन कल्याणमित्राण्यध्याशयेन तेभ्यः कल्याणमित्रेभ्यो अन्तिकादयं महाकरुणावतारो
धर्मपर्यायः श्रोतव्य उद्ग्रहीतव्यः पर्यवाप्तव्यो धारयितव्यो वाचयितव्यः प्रवर्तयितव्यः उद्देष्टव्यः
स्वाध्यातव्योऽरणाभावनया भावयितव्यो बहुलीकर्तव्यः, परेभ्यश्च विस्तरेण संप्रकाशयितव्यः ॥

No. 22

After ° विधमनतया, AB add the following passage (see page 136, foot-note 7):

बोधिसत्त्वो महासत्त्वः कल्याणमित्रपर्येषणशुश्रूषणपरिचर्यास्वपरिखिन्नमानसो भवति ।
तदायं कुमार बोधिसत्त्वो महासत्त्वः सुकरेणानुत्तरां सम्यक्संबोधिमभिसंबुध्यते । सुकरेण चेमं
महाकरुणावतारं धर्मपर्यायं प्रतिलभते । तस्मात्तर्हि कुमार आदीप्तशिरश्चेलोपमेन ते भूत्वा सदा
कल्याणमित्राणि पर्येषितव्यानि सेवितव्यानि पर्युपासितव्यानि भजितव्यानि अलोभेन । तत्कस्य
हेतोः ? कल्याणमित्राधीना हि कुमार बोधिसत्त्वानां महासत्त्वानामनुत्तरा सम्यक्संबोधिः, किमङ्ग
पुनरयं महाकरुणावतारो धर्मपर्यायः । तस्मात्तर्हि कल्याणमित्रपर्येषणशुश्रूषणपरिचर्यास्वपरिखिन्न-
मानसो भविष्यामीत्येवं त्वया कुमार सदा शिक्षितव्यम् ॥

अथ खलु भगवांस्तस्यां वेलायामस्यैव महाकरुणावतारस्य धर्मपर्यायस्योद्भावनार्थं
चन्द्रप्रभस्य कुमारभूतस्येमं पूर्वयोगकथानिर्देशं गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म ॥

No. 23

Before भासि. ABT (C missing) read the following passage (see page 138, foot-note 1):

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मात्तर्हि कुमार बोधिसत्त्वेन
महासत्त्वेन सर्वकुशलमूलशिक्षागुणधर्मनिश्रितेन सुपरिशुद्धशीलेन भवितव्यम् । असंसर्गबहुलेन
च भवितव्यं पापमित्रपरिवर्जकेन कल्याणमित्रसंनिश्रितेन पृच्छकजातीयेन धर्मपर्येष्ट्यभियुक्तेन
धर्मार्थिकेन धर्मरतेन धर्मपरिग्राहकेण धर्मानुधर्मप्रतिपन्नेन । शास्तृसंज्ञा अनेन सर्वबोधिसत्त्वेषू-
त्पादयितव्या । यस्य चान्तिकादिमं धर्मपर्यायं शृणोति, तेन तस्यान्तिके प्रीतिगौरवं
शास्तृसंज्ञा चोत्पादयितव्या । यः कुमार बोधिसत्त्वो महासत्त्व इमं सर्वकुशलमूलशिक्षागुणधर्म-
निश्चयं धर्मपर्यायं समादाय वर्तते, स क्षिप्रमनाच्छेद्यप्रतिभानगतो भवति, अचिन्त्यबुद्धधर्माभिनि-
र्हारश्च भवति । गम्भीरेषु च बुद्धधर्मेषु निर्व्याप्तिं गच्छति । आलोकभूतश्च भवति सदेवकस्य
लोकस्य काङ्क्षाविमतिविचिकित्सान्धकारविधमनतया ॥

अथ खलु भगवान् तस्यां वेलायां सर्वधर्मकुशलमूलशिक्षागुणधर्मनिर्देशस्य
धर्मपर्यायस्योद्भावनार्थं चन्द्रप्रभस्य कुमारभूतस्येमं पूर्वयोगकथाप्रबन्धं गाथाभिगीतेन विस्तरेण
संप्रकाशयति स्म—

